# उत्तररामचरितम्

नाटकम्।

—:*:—

महाकवि श्रीभवभूतिप्रणीतम्।

श्रीयुक्तगङ्गाधरविद्यालङ्कारभट्टाचार्य्यात्मजेन
शब्दाचार्य्य-पुराणशास्त्रि-सांख्यरत्न-
व्याकरणतीर्थ-काव्यतीर्थ-
स्मृतितीर्थोपाधिकेन
श्रीयुक्त हरिदाससिद्धान्तवागीशभट्टाचार्य्येण

प्रणीतया सर्वार्थबोधिनीसमाख्यया
टीकया समन्वितम्।

—: ०*० :—

नकीपुर हरिचरणचतुष्पाठीतः
श्रीशशिशेखरभट्टाचार्य्येण
प्रकाशितम्।

—*—

१८३५ शकाब्दे।

मूल्यं २, राजतमुद्राद्वयम्।

अशेषगुणभूषितः

स्मरसमानशोभान्वितः,

बृहस्पतिमहामतिः

सततशान्तमूर्त्तिः कृती

सुशिक्षित-सुविक्रमो-

वितरणे च कर्णोपमो,

दयालुरिति गीयते

जनगणेन यो भारते ॥

खुलनाजिलाधीन-नकीपुरस्थ-भूस्वामिनस्तस्य

श्रीलश्रीयुक्त राय यतीन्द्रनाथ चतुर्धुरीण-

महाशयस्य

कमलालयाकलित करकमले

सादरं समर्पितमिदम्

चिरशुभाशीर्वादकेन

श्रीहरिदासदेवशर्म्मणा ।

---

# अथ नाट्योल्लिखितव्यक्तिगणः।

## पुरुषाः।

सूत्रधारः ... प्रस्तावसूचकः प्रधाननटः (stage-manager इति कश्चित्)।

नटः ... पारिपार्श्विकापरनामा सूत्रधारसदृशगुणवान् कश्चित्।

**रामः** ... अयोध्याधिपतिः सूर्य्यवंशीयो राजा।

कञ्चुकी ... अन्तःपुरचरो विद्वान् वृद्धब्राह्मणः।

अष्टावक्रः ... मुनिविशेषः।

लक्ष्मणः ... सुमित्रापुत्रो रामस्य भ्राता।

दुर्म्मुखः ... कश्चिद्गुप्तचरः।

शम्बूकः ... शूद्रतापसः।

सौधातकिः ... अपूर्णशिक्षितः कश्चित् मुनिकुमारः।

भाण्डायनः ... पूर्णशिक्षितः कश्चित् मुनिकुमारः।

जनकः ... सीरध्वजो नाम मिथिलाधिपतिः।

कुशः, लवः ... रामस्य पुत्रौ।

चन्द्रकेतुः ... लक्ष्मणस्य पुत्रः।

सुमन्त्रः ... प्राचीनसारथिः।

विद्याधरः ... अपरिचितनामा देवयोनिविशेषः।

वाल्मीकिः ... कश्चित् महर्षिः।

मुनिबालकाः सैनिकपुरुष इत्यादयोऽपि।

## स्त्रियः।

**सीता** ... जनकनन्दिनी रामस्य पत्नी।

आत्रेयी ... ब्राह्मणवत् सकलसंस्कारैः संस्कृता ब्राह्मणजातीया काचित् स्त्री।

वासन्ती ... वनदेवता (वनाधिकारिणी)।

| | | |
|---|---|---|
| तमसा<br>मुरला | ... | नद्यधिष्ठात्रृ देवताद्वयम् । |
| कौशल्या | ... | रामस्य माता । |
| अरुन्धती | ... | वशिष्ठपत्नी । |
| विद्याधरी | .. | अज्ञातनाम्नी उक्तविद्याधरस्य पत्नी । |
| भागीरथी | ... | गङ्गादेवी । |
| पृथ्वी | ... | पृथिवीदेवी । |
| प्रतीहारी | ... | अन्तःपुरद्वाररक्षिका । |

---

# अथ नाटकोक्तदेशानां

| प्राचीननामानि | | इदानीन्तननामानि । |
|---|---|---|
| लङ्का | ... | सिंहल इति । |
| विदेहः | ... | विहुत इति । |
| ऋष्यशृङ्गाश्रमः | ... | सिंहेश्वर इति ( भागलपुरे ) । |
| मिथिला | ... | मिथिला । |
| अयोध्या | ... | अयोध्या । |
| पञ्चवटी | ... | पञ्चवटी ( नासिकनामकस्थानसन्निहिता ) |
| दण्डकारण्यं | ... | नागपुरावधिनासिकपर्य्यन्तविस्तीर्ण भूभागः । |
| जनस्थानं | ... | दण्डकारण्यस्य अंशविशेषः । |
| वाल्मीकितपोवनं | ... | विठुर ( ब्रह्मावर्त्त ) । |

---

# विज्ञापनम्

'लोकः खलु कर्म्म कुर्वन् साधुवादमेव लभेत' नास्तीदृशो वेदोपदेशः, नवा राजशासनम्, तथा सति जगत्यामुपहासो नाम न स्यात्। सुतरां साधुसम्पादित एव कर्म्मणि साधुवादः, अशक्यसाधनप्रवृत्तावपि च सत्यामुपहास इति साधारणी चिरन्तनी रीतिः। तथा च महाभारते श्रूयते क्षुद्रतमः कश्चन विहङ्गमो निःशेषमेवानन्तजलधिजलमुत्तोलयितुमुद्यत आसीत्, उपाहसच्च तमिन्द्रः। अत एव ग्रन्थकारमनोभाव-सागरसमवगाहिना विचक्षणेनैव सम्पादनीयां टीकां मादृशो मन्दमतिर्ग्रन्थकारात् प्रचुरतरदूरवर्त्ती जनः सम्पादयितु-मीहमानो लोकैरुपहसनीय इति सम्भवपरमेव। इति यथार्थं जानन्नपि नितान्तदुरूहोत्तररामचरितनाटकटीकां निर्म्मातुं प्रवृत्तोऽस्मि। तथाहि स्रोतसीव प्रबले समुद्यमे सति तत् प्रतिकूलतया तरणिरिव मनोवृत्तिः प्रवर्त्तयितुमशक्यैवेति।

अत्र च मूले विभिन्नदेशीय पुस्तकपञ्चकमवलोक्य सङ्गत-सम्मतपाठसन्निवेशनम्, टीकायान्तु मूलवाक्यस्य विशदविवरणं, आवश्यकतानुसारेण शास्त्रान्तरप्रदर्शनम्, अन्तरान्तरा योग्य-विषयविशेषसमालोचनञ्च विहितम्। प्रायेण साहित्यदर्पण-मतमनुसृत्यैवालङ्कारादयः सन्निवेशिताः। यदीदानीमन्ते-वासिवर्गः टीकामिमामासाद्य सन्तोषलेशमपि लभेत, तदैव सफलो मे भविता महीयानयमायासो व्ययातिशयश्चेति मन्यते।

दोषस्वीकारः। आमूलतः समीचीनपरिशोधनवासनया व्ययबाहुल्ये परिश्रमप्राचुर्य्ये च कृतेऽपि अतिप्रचुरतराणां देवनागराक्षराणामत्यल्पमात्राकारवैषम्यवशात् सहसा इदन्तया परिचेतुमशक्यतया लिपिकराणामेकान्ताऽशिथिलतया प्रथमसंस्करणे सम्भवपरतया मम मन्दभाग्यतया च वर्णतः पदतो वाक्यतश्च अनेकमशुद्धं परिलक्ष्यते; तत्संशोधनप्रवृत्तानां महात्मनामात्मगुणगरिम्णैव क्षमार्हः खल्वहम्।

परिशेषे वक्तव्यमेतत्, यत्, येषां ग्रन्थसाहाय्येन विषयविशेषेषु कृतकार्य्या वयं, तान् प्रति असकृद्धन्यवादविधायिन श्चिरकृतज्ञाश्च स्म इति।

१८३५ शकाब्दीयसौरकार्त्तिकस्य षष्ठदिवसे।

विनीत श्रीहरिदासदेवशर्म्मणः।

———

# अथ भवभूतेरितिहासः।

दाक्षिणात्यदेशे पद्मपुरनगरे(१) नित्याग्निहोत्रिणः श्रौतक्रियानिरताः केचित् काश्यपगोत्राः पङ्क्तिपावना (२) ब्राह्मणा निवसन्ति स्म। तत्र महाकविर्भट्टगोपालो नाम कश्चित् वाजपेययागेन सुगृहीतनामा बभूव। तदात्मजो नीलकण्ठनामा जातूकर्णीनामधेयायां भार्य्यायां भवभूतिमुत्पादयामास (३)। स खलु भवभूतिर्महाज्ञानिनो ज्ञाननिधिनाम्नः (४) परमहंसप्रवरस्य शिष्यत्वमधिगतो वेद-वेदान्त-दर्शन-स्मृति-पुराणेतिहासादिषु परं वैचक्षण्यमापन्नः 'श्रीकण्ठ' इत्युपाधिमवाप(५)।

---

(१)। श्रूयते किल, दाक्षिणात्यबुन्देलखण्डे पारा-सिन्धुनामधेययोर्नद्योः सम्मेलनस्थाने पद्मपुर ( पद्मावती ) नगरमद्यापि विद्यत इति।

(२)। "अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च।
श्रोत्रियान्वयजाश्चैव विज्ञेयाः पङ्क्तिपावनाः॥" मनुः।

(३)। "अस्ति दक्षिणापथे पद्मपुरं नाम नगरम्। तत्र केचित् तैत्तिरीयिणः काश्यपाश्चरणगुरवः पङ्क्तिपावनाः पञ्चाग्नयो धृतव्रताः सोमपीथिनो ब्रह्मवादिनः प्रतिवसन्ति। तदामुष्यायणस्य तत्रभवतो वाजपेययाजिनो महाकवेः पञ्चमः सुगृहीतनाम्नो भट्टगोपालस्य पौत्रः पवित्रकीर्त्तेर्नीलकण्ठस्यात्मसम्भवः श्रीकण्ठपदलाञ्छनो भवभूतिर्नाम जातूकर्णीपुत्रः।" महावीरचरितप्रस्तावना।

(४)। "श्रेष्ठः परमहंसानां महर्षीणामिवाङ्गिराः।
यथार्थनामा भगवान् यस्य ज्ञाननिधिर्गुरुः॥"

इति महावीरचरितप्रस्तावनाश्लोकदर्शनात् ज्ञाननिधिनामैव भवभूतेर्गुरुरिति मन्तव्यम्। केचित्तु प्रसिद्धवार्त्तिककर्त्तुर्भट्टकुमारिलस्य शिष्यो भवभूतिरिति वदन्ति। यदि तु तत्र प्रमाणमुपलभ्यते तदा 'ज्ञाननिधि'रिति भट्टकुमारिलस्यैव उपाधिरिति समाधेयम्। गुरुद्वयं वा।

(५)। अत्र वीरचरितप्रभृतिग्रन्थव्याख्याता दाक्षिणात्यो वीरराघवः "आर्य्यासप्तशती"

यदा च भवभूतेरसाधारणधीशक्ति-विद्या-ब्राह्मण्यकवित्व-प्रभृतिसद्गुणजातजनितं यशो दिशि विदिशि च क्रमशो विस्तीर्णमासीत्, तदा नितान्तविद्योत्साही परमपरगुणग्राही कान्यकुब्जेश्वरो यशोवर्म्मदेवः स्वसभायां समादरसमानीतेन भवभूतिना सभासदः पदमलञ्चकार। *

तत्र च भवभूतेरसाधारणी परमचमत्कारिणी कवित्वशक्तिः वसुधाधिपतिरासौधशिखरात् दीनकुटीरपर्य्यन्तं सहृदयसमुद्गीता विस्मयमादधाति स्म लोकानाम्।

तत्रान्तरे वीरधुरीणः काश्मीरेश्वरो ललितादित्यो नाम राजा यशोवर्म्मणा सह केनापि निमित्तेन महासमरे प्रवृत्तः। विजितश्च तस्मिन् यशोवर्म्मा। विजयमानश्च ललितादित्यः

टीकाकृत् अनन्तपण्डितस्य मन्यते स्म; यत्, अस्य कवेः 'श्रीकण्ठ' इति पितृकृतं नाम। परन्तु

"साऽम्बा पुनातु भवभूतिपवित्रमूर्त्तिः।"

"तपस्वी कां गतोऽवस्था मिति स्मेराननाविव।
गिरिजायाः स्तनौ वन्दे भवभूतिसिताननौ॥"

इत्थं श्लोकनिर्म्मानात् भवभूतिरिति नाम समभवदिति। अपरे तु श्रीकण्ठ इति नाम, भवभूतिरित्युपाधिरिति वदन्ति। तदुभयमप्यलीकमिव प्रतिभाति, "श्रीकण्ठ पदलाञ्छनो भवभूति र्नाम" इति कविना स्वयमभिहिते 'काव्यतीर्थपदलाञ्छनो-रामदासो नामे'त्यादाविव श्रीकण्ठपदस्योपाधित्वे न प्रतीतेः सार्वजनीनत्वात्। श्रीकण्ठ-पदस्य व्युत्पत्ति स्तु टीकायां दर्शिता।

*। काश्मीरराजतरङ्गिण्यामिदमितिवृत्तं दृश्यते। तत्र वृत्तान्तान्तरमपि परिलक्ष्यते; वाक्पतिराजो नाम यशोवर्म्मदेवस्यापरः कश्चन सभासदासीदिति। सम्भाव्यते च तत्, येन खल्वसौ वाक्पतिराजः यशोवर्म्मदेवस्य विक्रमातिशयं गौड़विजयञ्चोपजीव्य

स्वसभायां भवभूतेः सकृन्मात्रपदार्पणरूपेणैव पणेन सन्धिवन्धनं विधाय विरराम ; न पुनरिदानीन्तन इव कोटिशो धनराशिं क्षतिमापूरयितुमङ्गीचकार।

हन्त भोः ! "ते हि नो दिवसा गताः" भारतवर्षस्य। यत्र खल्वोद्दक् परगुणमुग्धमानसो विजेता, तादृशञ्च कविकुलरत्नं युगपदेव जगदुच्चासने निवेशयामास भारतवर्षम्। इदानीन्तनीं दशामनुभवन्तः तञ्च समयं चिन्तयन्तः किं नाम स्वतो विगलन्तीमश्रुधारां संवरीतुमर्हन्ति सहृदयाः ?।

ललितादित्यः किल ६९३ खृष्टाब्दादारभ्य ७२९ खृष्टाब्दपर्य्यन्तं काश्मीरराज्यं परिपालयामास*। तेन सह सम्पादितसमरो यशोवर्म्मदेवोऽपि तस्मिन् समय एव कान्यकुब्जप्रदेशं शशासेति यथार्था खलु सम्भावना ; सुतरां तदीयसभासदामन्यतमो महाकवि भवभूतिरपि यशोवर्म्मणो राजत्वसमयप्रथमभागे प्रादुर्बभूवेति समीचीनमवधारणम्।

अतः सिद्धं खृष्टीयसप्तमशताब्दीशेषभाग एव भवभूतेराविर्भावकाल इति।

'गौड़वहो' नामैकं प्राकृतकाव्यं विरचयामास। तत्र चात्मानं भवभूतेः शिष्यतया परिचाययन् येन प्राकृतेन भवभूतिं प्रशशंस ; तस्यायं संस्कृतानुवादः।

"भवभूतिजलधिनिर्गत काव्यामृतरसकणा इव स्फुरन्ति।
यस्य विशेषा अद्यापि विकटेषु कथानिवेशेषु॥"

* जैनाराज क्याणिं हामनिर्देशानुसारादयं निर्देशः। किन्तु यावदतः समीचीनं प्रमाणान्तरं नोपलभ्यते तावदिदमेव विश्वसनीयम्।

# अथ संक्षिप्तसमालोचना ।

अल्पया नहि जनो निजशक्त्या
शक्तिमान् गणयितुं गुणराशिम् ।
अन्नपुञ्जमिव बालविड़ालः
किन्तु दूषयति तं मुखदानात् ॥ ( विराजसरोजिनी )

इतिवदस्तु वा मादृशाम् समालोचनया दूषितमेव नाटकरत्नमुत्तररामचरितम्, तथापि ममेयं प्रवृत्तिर्निवर्त्तयितुमशक्यैव सञ्जाता । किन्नु खलु नवनलिनं मलिनं भवितेति मत्वा मधुकरस्तदुपरि परिपतितुं निवर्त्तते नाम ? अथवा स्वेनैव गुणगरिम्णा निरतिशयचारुतरस्य किलोत्तररामचरितस्य स्वरूपबोधनपरायणायां मादृशाना समालोचनायां सत्यपि सहृदयानामलीकालापकोलाहलसम्भवे न खलु मे भीतिकातरं मनः, न खलु शरदि विकाशमाने पौर्णमासीचन्द्रमसि खद्योतः प्रद्योतितुं लज्जते नाम ।

इह खलु कवीनां काव्यनिर्म्माणमुख्यप्रयोजनं नाम परमचमत्कारिणा नायकनायिकाचरित्रचित्रणेन सरसभावेन साधारणानां शिक्षाविधानमेव । तच्च चरित्रचित्रमत्र यथा साङ्गतया निष्पन्नं, अन्यत्र कुत्रापि तादृशं नोपलभ्यते ।

अत्र हि महाकविना परमादर्शनायकीकृतो रामचन्द्रः, पतिव्रताधर्म्मे रमणीशिरोमणीकृता सीता, प्रवर्त्तितञ्च काव्यजगति निजसाम्राज्यम् ।

अत्र केचिदालोचयन्ति ; रामायणरामो निर्वासितसीतोऽपि सन् पूर्व्ववदेव धीरस्थिरप्रकृतिर्म्महावीरस्वभाव एव दृश्यते उत्तररामचरितरामस्तु सीतां निर्वासयन् वज्रीयो वायुरिव विषम-वियोगविधुरः परमशोकसमाकुलः स्वयमपि रुदन् स्वदशा-प्रदर्शनेन परानपि रोदयन् नितान्तदुर्व्बलोचितकोमलहृदयः कापुरुष इव परिलक्ष्यत इति ।

तदिमामुक्तिममीषामसमीचीनामिव मन्यामहे। तथा च इतिहासप्रणेता वाल्मीकिः, भवभूतिस्तु नाटकनिर्म्माता, इति-हासकर्त्ता यथायथवस्तुस्वरूपप्रकाशमात्रप्रयोजनतया प्रदीप इव महास्वाधीनः, नाटकनिर्म्माता तु पर-मनोरञ्जनमात्रप्रधानो-द्देश्यतया गायक इव परमपराधीनः, वाल्मीकेः श्रोतारस्तदानी-न्तनाः समुन्नतिचरमसीमासमारूढ़भारतजन्मानो महावीरधीर प्रकृतयो मनस्विमानवाः, भवभूतेः श्रोतारस्तु (द्रष्टारस्तु) अवनति-शेषसीमासन्निहितप्रायभारतवासिनः पुत्रकलत्रादिलालनपरा-यणा वलवदलसकोमलमानसा मानुषाः, सुतरां रामायणराम-चरित्रसमान निजनाटकीयरामचरित्रचित्रणे तादृशश्रोतृवर्गस्य चित्तवृत्तेरननुकूलतया समनुरञ्जनाभावात् श्रवणवैमुख्य न शिक्षाविधानमसम्भवमेव, परन्तु कविलभ्ययशसोऽप्यलाभेन भवभूतेरुद्देश्यसिद्धिरेव न स्यात्। अतः कोमलरामचरित्र-चित्रणमन्तरेण भवभूतिः किं नाम कुर्य्यात्। सुतरां रामायण-रामेण सह उत्तररामचरितरामस्य तुलनाकरणकामनैव नोप-पद्यते। अथवा प्राणप्रतिमप्रियतमाया श्चिरच्छेदेऽपि शोक-

संविगाभावे महती परुषतैव प्रतीयते, न च 'वीरपुरुषेण सर्वदैव परुषेण भवितव्य' मित्यस्ति वेदोपदेशः, नवा कर्त्तव्यहानिमकुर्वाणं शोकसमाकुलतामात्रमेव पुरुषाणां वीरत्वं निहन्तीति केनापि मन्यते। दृश्यते च रामायणेऽपि शेलनिपतित-लक्ष्मणस्य शोकेन समाकुलता रामस्य *।

चित्रदर्शनमत्र प्रयोजनविशेषप्रतिपादनाय प्रयुक्तम्। तथा च सीतारामयो स्तत्तदविकलचित्रदर्शनेन परमसद्भावस्य सर्वथैवाकृत्रिमताप्रत्ययात् परस्परप्रणयस्तदानीं सहस्रधा वृद्धिमुपगतः। परक्षण एव समुपजायमानो निर्वासनकृतः सीतारामयोश्चिराय वियोगः शरच्चन्द्रचन्द्रिकामतीत्य निविड़ान्धकारसमागम इव, परमरमणीयनगरमतिक्रम्य दारुणारण्यप्रवेश इव शीतलतममलयमारुतमपहाय निवद्धनिदाघताप इव च हृदयमर्म्मविदारणो दुःसहतम एवासीत्। यदि पुनश्चित्रदर्शनमेव नाकरिष्यत् तदेदृशी प्रकृतरसपोषकता नाभविष्यदेव।

केचित्तु कालिदासतोऽपि निजकव्यनानैपुण्यप्रदर्शनाय भवभूतिना चित्रदर्शनमुपनिवद्धम्। तथा च

"तयो र्यथाप्रार्थितमिन्द्रियार्थान्
आसेदुषोः सद्मसु चित्रवत्सु।
प्राप्तानि दुःखान्यपि दण्डकेषु
सञ्चिन्त्यमानानि सुखान्यभूवन्॥" *

---

*। यच्चोक्तं वङ्गीयोबावृरिवेति, तदप्यसमीचीनमेव वङ्गीयबाबूनामिदानीं प्रायेण धैर्य्य-गाम्भीर्य्य-साहसोत्साहदर्शनात्।

*। रघुवंशे चतुर्दशसर्गे २५ स्लोकः।

इत्यनेन कालिदासेन चित्रदर्शनकथामात्रमुपन्यस्तं। अत्र तु भवभूतिना परेषामनुन्नेयभावेन तस्यैव छायामुपादाय विस्तृतभावेन पृथक् पृथग्विचित्रचित्रावलीप्रदर्शनद्वारा खल्वात्मनः परमचमत्कारिणी कल्पना-शक्तिराविष्कृतेति वदन्ति।

अपरे तु चित्रदर्शनेन मुनिपत्नीभिर्भूतपूर्वसद्भावस्मरणात् सीतायाः पञ्चवटीवनगमने स्वत एव वासना भविष्यति, तत् पूरणच्छलेन च निर्वासनं युक्तियुक्तमिति निर्वासनोपाख्यानयोजनायाः सुविधाविधानाय चित्रदर्शनमित्याहुः। अस्य सिद्धान्तस्य वहुवादिसिद्धतया टीकायामयमेवास्माभिः सन्निवेशितः।

द्वितीयाङ्कविष्कम्भक एव मनोहरः, शेषांशस्तु अनावश्यकशैलवनादिवर्णनवहुलतया धैर्य्यमवसादयति।

आद्योपान्तः समस्त एव तृतीयाङ्कः परममनोरमः। अभिज्ञानशकुन्तले जागरितस्मृतेर्वियोगवेदनाविधुरीकृतस्य दुष्मन्तस्य विलापमाकर्ण्य अन्तरालवर्त्तिनो शकुन्तलासखी सानुमती (मिश्रकेशी) यदिदमाह "सहि! दूरे वट्टसि एआइणी ज्जेव कसुसुहाइं अणुभवेमि" तदीयभावमादाय भवभूतिः खल्वस्मिन्नङ्के प्रकृतसीतामिवादृश्यां विधाय स्वनिमित्तं रामस्य विलापं श्रावयन् वलवदाकुलत्वं प्रदर्शयन् आत्मनि पूर्ववदक्षुण्णप्रगाढ़प्रणयास्तित्वञ्चानुभावयन् कालिदासादपि कल्पनाया मतीवात्मनैपुण्यमदर्शयत्।

चतुर्थाङ्के विष्कम्भके अनध्यायलब्धावसरयोः भाण्डायनसौधातक्योः परस्परालापो नितान्तकौतुकावहः। हन्तेदानीं

परीक्षाक्लेशहारिणो नं खलु छात्राणामनध्यायमहोत्सवललित-कुरङ्गं सम्पूर्णमेव कवलितवती। तथा लवदर्शनावधि शेषं यावत् बालस्वभावसुलभं चापल्यं, वर्षीयसां नैसर्गिकं वात्सल्यं मुनिकुमाराणां ब्राह्मणोचितशान्तिप्रियता शैशवसम्भवभीरुता च, लवस्य राजात्मजयोग्या मनस्विता तेजस्विता वीरता चातीव-मनोहरा।

पञ्चमाङ्के कुमारयोः सविनयसदाचारञ्च सौजन्य-शौर्य्य-दर्पभूयिष्टं चरित्रं तदानीन्तनलोकाचारञ्च भावयतो जनस्य इदानीं परप्रतारणापरिपूर्णे भारतवर्षे विस्मयेनानन्देन च सह शोकमेवावहति।

षष्ठाङ्के विष्कम्भके दुरूहशब्दसमूहानामेव सुदीर्घसमा-सोपन्यासः सर्वथैवाभिनयप्रतिकूलतया नितान्तदुर्गमतया च दोषावह एव। अन्यत्रापि नाटकेऽस्मिन्नीदृशो दोषः समन्विष्य-माणः सुलभ एव। अभिज्ञानशकुन्तले राजा दुष्मन्तो नितान्त-शिशुं सर्वदमनमवलोक्य क्षणं स्वसन्तानतया निश्चिन्वानः क्षणमपि च परपुत्रतया सन्दिहानः वहु विकल्पयन् विशेष-विषादं प्रकाशयन् विस्मयमादधाति कौतुकञ्चोपजनयति लोकानाम्। अत्र तु रामचन्द्रो महासमरसमर्थयोर्नितान्त-शिक्षितयोः किशोरवयसोरेव कुशलवयोः परिचये विविध-कौशलमुद्भावयन्नपि तदसमर्थः संशयलालसासमाकुलो विलाप-विह्वलमानसो विस्मयकौतुकयोः परां काष्ठामुपजनति। तेन हि भवभूतिना कालिदासत एव वीजमुपादाय ततोऽपि कल्प-

नाकुशलतामात्मनो दर्शयता फलकुसुमशोभितविशालविटपिनं निर्म्माय चमत्कारिणी रचनाचातुरी परिदर्शिता।

मन्मसाङ्के "कार्य्यं निर्वहणेऽद्भुत" मित्यालङ्कारिकवाक्यमनुसृत्य यादृशं महाद्भुतचित्रमाविष्कृतं न खलु तादृशं कुत्रापि रूपकान्तरे परिलक्ष्यते।

अस्य हि प्रतिपदं प्रतिपात्रञ्च समादाय समालोचना प्रकृतनाटकद्विगुणायतनग्रन्थेनापि न शक्यते कर्त्तुम्। तथापि तु टीकायामिवास्माभिर्यथास्थानमनेकशः समालोचितमिति तस्यात्र पुनरावृत्तिरनावश्यकी।

किन्तु नाटकनिवहेषु अभिज्ञानशकुन्तलं उत्तररामचरितञ्च सर्वथैव समुज्ज्वलरत्नं, अनयोस्तु कतरच्चारुतरं तन्निर्वाचनमशक्यमिवास्माभिः। किं बहुना, यदि कश्चित् स्वयं कालिदासं भवभूतिञ्चैकत्र समुपवेश्य प्रष्टुमशक्ष्यत् 'कविकुलशिरोमणियुगल! कतरदेतयोश्चारुतरं नाम?' मन्ये, तदा तावपि सशिरःकण्डूयनमिदमवदिष्यतां यत्, एतन्निर्वाचनं विशेषविवेचनाधीनं, अपि च समयसापेक्षम्, किञ्च नैपुण्येयं, अथवा अशक्यमेवेति"।

कवित्वे कालिदास एव गरीयान्, भवभूतिस्तु शास्त्रज्ञतायां सदाचारे, धार्म्मिकताया मभिमाने च प्रधानतर इति।

---

# अथ स्वरूप-नायकनायिकादिनिरूपणम् ।

**प्रायेण नाटकलक्षणलक्षिततया रूपकेषु तदिदमुत्तररामचरितं नाम नाटकम् ।** तथाच सङ्गीतदामोदरे—

"प्रख्यातोत्तमनायकं रसमयं राजर्षिवंशोद्भवं
साङ्कं भङ्गजयान्वितं नयमयं तत्तत्पुराणाश्रयम् ।
भाषाभिर्नवसुन्दरं प्रविलसन्नानाविलासं वच—
वृत्तिव्याप्तमशेषसन्धिसहितं सप्ताङ्कवन्नाटकम् ॥"

**अत्रेदमवधेयं ;** स्वाभिप्रायानुसारिणी किल कविकल्पना सर्वथैवेतिहासमनुसृत्यानि[illegible]वितुमेव नार्हति ; सुतरां न खलु सा इतिहाससत्तामशेषामपेक्षते, अपेक्षते तु ऐतिहासि[illegible]नायकनायिकाभावम् । तथाच महाभारतेन सहाभिज्ञानशकुन्तलस्य व रामायणेन [illegible]नमस्यापि प्रायेणोपाख्यानभागे वैषम्ये सत्यपि नायकनायिकयोरैतिहासिक[illegible] न क्षतिरिति ।

**अत्र श्रीरामचन्द्रो दिव्यादिव्यः पूर्णलक्षणलक्षितधीरोदात्तप्रकृति[illegible]नुकूलो नायकः ।** तथाच साहित्यदर्पणे—

"[illegible] [illegible]दिव्यो यो दिव्योऽप्यात्मनि नराभिमानी, यथा श्रीरामचन्द्रः ।"

"[illegible]विकत्थनः क्षमावान् अतिगम्भीरो महासत्त्वः ।
स्थे[illegible]न् निगढ़मानो धीरोदात्तो दृढ़व्रतः कथितः ।
[illegible]अनु[illegible]एकनिरतः ॥" इति च ।

**ना[illegible]का तु सीता स्वीया प्ररूढ़यौवनरूपमध्या † ।**

यथा [illegible] । "विनयार्जवादियुक्ता गृहकर्म्मपरा पतिव्रता स्वीया ।"

"मध्या विचित्रसुरता प्ररूढ़स्मरयौवना ।
ईषत्प्रगल्भवचना मध्यमव्रीड़िता मता ॥" *

† । [illegible]दिभिदत्रयन्तु नानावस्थायामेव सम्भवतीति तद्भेदो न लक्षितः ।

* । [illegible]सुरतेत्यादिकन्तु मध्याया एव भेदप्रदर्शकं पृथक् पृथक् लक्षणमिति बोध्यम् ।

**सा पुनरनिर्वासितावस्थायां स्वाधीनभर्त्तृका, निर्वासिताऽवस्थायान्तु प्रोषितभर्त्तृका।** तत्र स्वाधीनभर्त्तृकालक्षणं यथा साहित्यदर्पणे

"कान्तो रतिगुणाकृष्टो न जहाति यदन्तिकम्।
विचित्रविभ्रमासक्ता सा स्यात् स्वाधीनभर्त्तृका॥"

प्रोषितभर्त्तृकामाह रसमञ्जरी

"देशान्तरगते भर्त्तरि सन्तापाकुला प्रोषितभर्त्तृका।" ‡

न च कथमेकस्या उक्तद्विविधत्वमिति वाच्यं—

"क्वचिदन्योन्यसाङ्कर्य्यमासां लक्षेषु दृश्यते।

इति दर्पणकारेणैव साङ्कर्य्याङ्गीकारात्।

**करुणविप्रलम्भशृङ्गार प्रधानरसः।** तथाच साहित्यदर्पणे

"यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये।
विमनायते यदैक स्तदा भवेत् करुणविप्रलम्भाख्यः॥"

"क्रव्याद्भिरङ्गलतिका नियतं विलुप्ता" इत्यभिदधतो रामस्य सीतामरणनिश्चयात् तदर्थमेकान्तविमनायमानत्वात् सप्तमाङ्के सीतायाः पुनर्लभ्यत्वाच्च। वीररौद्रादयस्त्वङ्ग रसा यथास्थानमनुसन्धेयाः।

**बाहुल्येन वैदर्भीरीतिः।** यथा तत्रैव

"माधुर्य्यव्यञ्जकैर्वर्णै रचना ललितात्मिका।
अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते॥"

केचित्तु पाञ्चालीं रीतिं वदन्ति। किन्त्वत्र स्तोकविस्तरतः सर्वा एव रीतयो लक्ष्यन्ते।

**प्राचुर्य्येण माधुर्य्यं गुणः।** तदुक्तं दर्पणे

"चित्तद्रवीभावमयो ह्लादो माधुर्य्यमुच्यते।
सम्भोगे करुणे विप्रलम्भे शान्तेऽधिकं क्रमात्॥"

ओजःप्रसादावल्पाधिकभावेन परिदृश्येते।

‡। देशान्तरगते भिन्नदेशस्थिते इत्यर्थः।

तदयं संग्रहश्लोकः—

धीरोदात्तोऽनुकूलः स परमपुरुषो नायको रामचन्द्रः
सीता मध्या स्वकीया भुवननिरुपमा नायिकादर्शभूता ।
वैदर्भी नाम रीतिः, पुनरिह करुणो विप्रलम्भो रसोऽङ्गी
माधुर्य्याख्यो गुणश्च प्रथमकृतिरियं मालतीमाधवस्य ॥

——:०:——



# उत्तररामचरितम्

## प्रथमोऽङ्कः ।

—:०:—

इदं कविभ्यः (१) पूर्वेभ्यो (२) नमो वाकं प्रशास्महे ।
विन्देम देवतां वाचममृतामात्मनः कलाम् ॥ १ ॥

---

नमो गणेशाय ।

सारदा सकलशास्त्रपारदा शारदाम्बुजमुखी मतिं सताम् ।
शारदी शशधरस्य कौमुदी मोदिनीं कुमुदिनीमिव क्रियात् ॥

कापि नाम भवभूतिभाषिता भारती गुरुगभीरभावभाक् ।
भावमुग्धमनसां मनोऽनिशं मज्जयत्यतुलहर्षसागरे ॥

स्वपयति भवभूतेर्भारतीं भावरम्यां
विशदयति नवा मे वाक्यमीदृङ् न शङ्काम् ।
शशिन इव कलङ्कः सुन्दरस्योचदोषः
न भवति रुचिहारी, किन्तु वैचित्र्यकारी ॥

अथ तत्रभवान् अशेषदेशभाषाशास्त्रनिपुणः कविकुलशिरोमणिर्भवभूतिरुत्तररामचरितं नाम नाटकं चिकीर्षन् निर्विघ्नचिकीर्षितपरिसमाप्तिकामो मङ्गलश्लोकमाबबन्ध ; सूत्रधारादयस्तु "रङ्गविघ्नोपशान्त्यर्थं नान्दीमादौ प्रयोजयेत्" इति शास्त्रात् सभ्यानामात्म-

---

(१) गुरुभ्य इति पाठान्तरं । (२) सर्वेभ्य इति पाठभेदः ।

नास्य मङ्गलार्थं तमेव पठन्ति इदमिति। पूर्व्वेभ्यः प्राचीनेभ्यः कविभ्यः वाल्मीकिव्यासा-दिभ्यः नमः, तदनन्तरञ्च वाचं वाक्यरूपं सगुणं ब्रह्म विष्णुमिति यावत् इदं वक्ष्यमाणं प्रशास्महे प्रार्थयामहे। किमित्याह आत्मनस्तस्यैव परमात्मनः विष्णोरित्यर्थः कलां अंशरूपां अतएव देवतां देवतावत्प्रभाववतीं अमृतां अमृतवत् सुरसां वाचं वाक्यं विन्देम लभेमहि। अभिप्रायानुरूपवाक्यसम्पत्तिरस्माकं भवतु इतीश्वरसमीपे प्रार्थनेति निष्कर्षः।

पूर्व्वेभ्यः कविभ्यो नम इति वाचनिकनमस्कारः। ननु यस्य नमस्कारस्तदन्तिक एव प्रार्थनाया औचित्यात् कथमत्र पूर्व्वकविभ्यो नमस्कारः प्रार्थना तु शब्दब्रह्मान्तिके इति, सत्यं पूर्व्वकवीनां शब्दब्रह्मोपासनया तत्र लब्धसिद्धिकतया रामायणादिग्रन्थकारत्वेन गुरुतया च तेभ्यो नमस्कारः कृतः। तथाचाह्निकतत्त्वे स्मार्त्तः "ग्रन्थकर्त्तुः सुतरां गुरुत्व"मिति अभीष्टप्रार्थना तु सर्व्वाभीष्टफलदातुरीश्वरान्तिक एव युक्तेति न दोषः। अथवा नम इत्यस्य वाचो वाक्यं यस्मिन् कर्म्मणि तद् यथा तथा प्रशास्महे पूर्वकवीनामन्तिक एव प्रार्थयामहे।

उच्यत इति वाचो वाक्यं कर्म्मणि घञ्, छान्दसोऽयं प्रयोगः। तस्य च ब्रह्मत्वे प्रमाणं यथा श्रुतिः "चत्वारि शृङ्गास्त्रयोऽस्य पादा द्वे शीर्षे सप्तहस्तासस्त्रिधाबद्धो वृषभो रोरवीति महो देवो मर्त्त्या आविवेश।"

विष्णोरात्मत्वे प्रमाणं यथा श्रीमद्भागवते—

"परावरेषां भूतानामात्मा यः पुरुषः परः।
स एवासीदिदं विश्वं कल्पान्तेऽन्यन्न किञ्चन।
तस्य नाभेः समभवत् पद्मकोषो हिरण्मयः।
तस्मिन् यज्ञे महाराज! स्वयम्भूश्चतुराननः॥"

सर्व्वो वर्णात्मकोऽवयवी शब्दो ब्रह्म इति श्रुत्या प्रतिपादितं, अत एव अवयवभूतं एकैक-प्रयुक्तं वर्णमयं कतिपयवाक्यन्तु तस्य अंश एव स्यात्, अत एवोक्तं आत्मनः कलां वाच-मिति। विष्णुपुराणञ्च—

"काव्यालापाश्च ये केचित् गीतकान्यखिलानि च।
शब्दमूर्त्तिधरस्यैते विष्णोरंशा महात्मनः॥"

पथ्यावक्त्रं वृत्तं "युजोर्जेन सरिद्भर्त्तुः पथ्यावक्त्रं प्रकीर्त्तित"मिति लक्षणात् ॥१॥

नान्द्यन्ते सूत्रधारः । (क) अलमतिविस्तरेण । (ख) अद्य खलु

---

(क) नन्दयति स्तवेन देवादीन् आशीर्व्वादेन सभ्यान् नमस्कारेण वा आत्मानं आनन्दयति या वाक् सा नान्दी, इनन्तनन्दधातोः कर्त्तरि पचादित्वादच् ततश्च "प्रज्ञादिभ्यश्चे"ति स्वार्थे अण्, ततः स्त्रियामीप्रत्ययः। तथा चोक्तं नाट्यप्रदीपे "नन्दन्ति काव्यानि कवीन्द्रवर्गाः कुशीलवाः पारिषदाश्च सन्तः। यस्मादलं सज्जनसिन्धुहंसी तस्मादियं सा कथितेह नान्दी ॥"

"नन्दन्ति देवता यस्मात्तस्मान्नान्दीति कीर्त्तिता" इत्यपि। सा चेयं नान्दी सुप्तिङन्तरूपद्वादशपदा, तथा च 'प्रशास्महे' इति सोपसर्गमेकं तिङन्तं पदं विन्दं स इति चापरं, सुबन्तानि च दश इति मिलित्वा द्वादशपदानि। तथाचाह भरतः पञ्चमाध्याये "सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमाश्रितः। नान्दीं पदैर्द्वादशभिरष्टाभिर्व्वाऽप्यलङ्कृतां ॥" पदमत्र विविधं श्लोकपादरूपं सुप्तिङन्तरूपं श्लोकान्तर्गतवाक्यरूपञ्च। तथा च नाट्यप्रदीपे "श्लोकपादः पदं केचित् सुप्तिङन्तमथापरे। परेऽवान्तरवाक्यैकस्वरूपं पदमूचिरे ॥" तथा च वेणीसंहारे श्लोकत्रयेण श्लोकपादरूपद्वादशपदा नान्दी, इयं सुप्तिङन्तरूपद्वादशपदा, अभिज्ञानशकुन्तले च श्लोकान्तर्गतवाक्यरूपाष्टपदेति तत्र तत्रानुसन्धेयं। पदञ्चात्र वाचकमभिप्रेतं तेन 'प्र' शब्दस्य उपसर्गत्वेन वाचकत्वाभावात् न पदत्वं ततश्च न त्रयोदशपदत्वमिति बोध्यं।

एतादृश्या नान्द्या अन्ते पाठावसाने सूत्रं प्रावस्तिकसूचनं धारयतीति सूत्रधारः प्रधाननटः। वदतीत्यध्याहर्त्तव्यया क्रियया अन्वयः। एवमन्यत्रापि बोध्यं। सूत्रधारलक्षणं यथा सङ्गीतसर्व्वस्वे —

"वर्णनीयतया सूत्रं प्रथमं येन सूच्यते।
रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते ॥"

(ख) अतिविस्तरेण सुबहुत्वेन नान्दीप्रयोगेणेति शेषः, अलं, निष्प्रयोजनो बहुतरनान्दीप्रयोग इत्यर्थः। एतेनैव मङ्गलार्थनिर्व्वाहादिति भावः। अष्टपदनान्दीप्रयोगेणैव मङ्गलाचरणनिर्व्वाहे द्वादशपदनान्दीप्रयोगादेव किञ्चिद्विस्तरो जातः, सुतरां तदधिकनान्दीप्रयोगो निष्प्रयोजन एवेति निष्कर्षः।

भगवतः कालप्रियनाथस्य यात्रायामार्य्यमिश्रान् विज्ञापयामि, एवमत्रभवन्तो विदांकुर्व्वन्तु। अस्ति खलु तत्रभवान् काश्यपः श्रीकण्ठपदलाञ्छनो भवभूतिर्नाम। (ग) (१)

भगवतः अणिमाद्यैश्वर्य्यशालिनः, कालप्रियनाथस्य उज्जयिनीनगरस्थितस्य महाकालमूर्त्तेः शिवस्य, यात्रायां वार्षिकमहोत्सवे आर्य्यमिश्रान् आर्य्येषु वैदिकविधिनिषेधाधीनाचारवत्सु मिश्राः श्रेष्ठास्तान्, अथवा आर्य्यमिश्रान्,सभ्यश्रेष्ठान्,विज्ञापयामि निवेदयामि ; किमित्याह अत्रभवन्तः पूज्याः, एवं वक्ष्यमाणं विदांकुर्व्वन्तु अवगच्छन्तु। तत्रभवान् विद्यया ब्राह्मण्येन च पूज्यः, काश्यपः काश्यपगोत्रः, श्रीकण्ठपदलाञ्छनः श्रीकण्ठोपाधिकः भवभूतिर्नाम भवभूतिरिति नाम्ना प्रसिद्धः, अस्ति कश्चिदिति शेषः।

अत्र खलुशब्दद्वयं वाक्यालङ्कारे "खलु स्याद्वाक्यभूषायां"मिति मेदिनी।

भगः अणिमाद्यष्टैश्वर्य्यमस्यास्तीति भगवान्, ज्ञानवैराग्यवान् वा, तदुक्तं "ऐश्वर्य्यस्य च वीर्य्यस्य श्रियो यशस एव च। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना।" अणिमादयश्च "अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा। ईशित्वञ्च वशित्वञ्च तथा कामावसायिता।" एषां प्रकारास्तु न्यायकुसुमाञ्जल्यादौ ज्ञेयाः।

कलयति प्रलयकाले सर्व्वभूतानि संहरतीति कालो रुद्रः। तथा च तिथितत्त्वे विष्णुधर्म्मोत्तरं—"अनादिनिधनः कालो रुद्रः सङ्कर्षणः स्मृतः। कलनात् सर्व्वभूतानां स कालः परिकीर्त्तितः॥" शिवरूपेण मङ्गलकरणात् सर्व्वान् प्रीणातीति प्रियः। यथा तत्त्वप्रकाशे "मुक्तात्मानोऽपि शिवाः किन्त्वेते तत्प्रसादतो मुक्ताः।" नाथः सर्व्वेश्वरः "ईशानो भूतभव्यस्ये"ति श्रुतेः। कालप्रियनाथ इति त्रिपदकर्म्मधारयः, प्रथमं द्विपदकर्म्मधारयं कृत्वा कर्म्मधारयान्तरं वा। उज्जयिन्यां स्थापितायाः शिवमूर्त्तेः कालप्रियनाथः महाकालश्च इति नामद्वयं। मूर्त्तिस्तु "महाकालं यजेद्देव्या दक्षिणे धूम्रवर्णकं। बिभ्रतं दण्डखट्वाङ्गौ दंष्ट्राभीममुखं शिशुं।" इत्याद्युक्तरूपा। कथासरित्सागरे च "यस्यां वसति विश्वेशो महाकालवपुः स्वयं। शिथिलीकृतकैलासनिवासव्यसनो हरः।" महाकालमूर्त्तेः प्रतिष्ठास्थानमपि महाकालशब्देनोच्यते, तथा च मेघदूते "अप्यन्यस्मिन् जलधर! महाकालमासाद्य काले" इत्यादि।

---

(१) जातूकर्णीपुत्र इति पाठान्तरं क्वचिदधिकं।

यं ब्राह्मणमियं देवी वाग्वश्येवानुवर्त्तते ।
उत्तरं रामचरितं तत्प्रणीतं प्रयोक्ष्यते ॥ २ ॥ (१)

"यात्रोत्सवे गतौ वृत्ता"विति हेमचन्द्रः ।

वैदिकविधिनिषेधाधीनाचारा आर्य्याः । तथा च पठन्ति—

"कर्त्तव्यमाचरन् काममकर्त्तव्यमनाचरन् । तिष्ठति प्रकृताचारे स वा आर्य्य इति स्मृतः ।" "स्यादुत्तरपदे श्रियस्त्रिषु श्रेष्ठार्थवाचक" इति च ।

विदाङ्कुर्व्वन्तु इति "विद आम् कृञनुप्रयुज्यते वा" इति वेत्तेराम् कृञोऽनुप्रयोगश्च ।

कश्यपस्यापत्यं पौत्रादिरिति काश्यपः काश्यपगोत्रः । गोत्रन्तु "वंशपरम्पराप्रसिद्धमादिपुरुषब्राह्मणरूपं गोत्र"मिति उद्वाहतत्त्वे स्मार्त्तोक्तं ज्ञेयं ।

श्रीः स्वरस्वती कण्ठे यस्य सः, श्रीकण्ठपदं श्रीकण्ठेत्यानुपूर्व्वीकः शब्दः लाञ्छनं चिह्नं उपाधिर्यस्य सः । तथा च व्याडिः—"लक्ष्मी-सरस्वती-धी-त्रिवर्गसम्पद्विभूतिशोभासु । उपकरणवेशरचनाविधासु च श्रीरिति प्रथिता ॥"

भवस्य शिवस्येव भूतिर्ज्ञानसम्पद् यस्य स भवभूतिः । "भूतिर्भस्मनि सम्पदि" इत्यमरः । केचित्तु श्रीकण्ठेति नाम भवभूतिरित्युपाधिरित्याचक्षते, तत्तु न समीचीनं महावीरचरितोत्तररामचरितमालतीमाधवेषु एतत्कविना स्वयमेव "श्रीकण्ठपद-लाञ्छनो भवभूतिर्नामे"त्येवंविधस्यैव स्पष्टमभिधानात् अन्यत्र तु तादृशप्रमाणाभावात् ।

यमित्यादि । इयं प्रसिद्धा वाग्देवी वश्येव वशतापन्नेव यं ब्राह्मणं अनुवर्त्तते आज्ञाकारिणी भवति अनायासेनैव इच्छानुरूपभावाभिव्यञ्जिका भवतीत्यर्थः । तेन भवभूतिना प्रणीतं रचितं उत्तरं चरमं रामचरितं प्रयोक्ष्यते अभिनेष्यते अस्माभिरिति शेषः । रावणवधसीतोद्धारपर्य्यन्तं रामस्य पूर्व्वचरितं महावीरचरिते निबद्धं अत्र तु राज्याभिषेकादारभ्य रामस्य शेषचरितं निबद्धमित्यर्थः ।

अत्र भावाभिमानिनी वाच्या गुणीभूतोत्प्रेक्षाऽलङ्कारः । तेन च वाग्देवी भार्य्येव वश्या इत्युपमा ध्वन्यते इत्यलङ्कारेणालङ्कारध्वनिः ।

---

(१) ब्राह्मणमित्यत्र ब्रह्माणं, प्रयोक्ष्यत इत्यत्र प्रयुज्यत इति च पाठान्तरं ।

एषोऽहं कार्य्यवशादायोध्यिकस्तदानीन्तनश्च संवृत्तः (घ) समन्तादवलोक्य (ङ) भो ! भो ! यदि तावदत्रभवतः पौलस्त्य-कुलधूमकेतोर्महाराजरामस्यायमभिषेकसमयो रात्रिन्दिवमसं-हृतानन्दनान्दीकः, तत् किमिति (१) विश्रान्तचारणानि चत्वर-स्थानानि ? । (च)

(घ) एष इति। एष सूत्रधारोऽहं कार्य्यवशात् अभिनयानुरोधात् आयोध्यिकः अन्यस्थाननिवासी सन्नपि अयोध्यानिवासी तथा कलियुगे वर्त्तमानोऽपि तदानीन्तनः त्रेतायुगीयरामसमसामयिकः संवृत्तः जातोऽस्मीति शेषः। अभिनयो हि अवस्थानु-करणं तच्च अनुकार्य्यसमीपवर्त्तिनः तत्समानकालीनस्य च यथा सर्व्वाङ्गशुद्धं भवितु-मर्हति न तथा दूरवर्त्तिनः कालान्तरस्थितस्य वा इति भावः। महाभिनयनैपुण्यात् सूत्रधारस्य आयोध्यिकत्वं तदानीन्तनत्वञ्च सभ्यैर्विज्ञायतामित्यभिप्रायः।

(ङ) समन्तादिति। समन्तात् सर्व्वासु दिक्षु। सर्व्वदिग्दर्शनं चत्वरादौ नटाः सन्ति नवेति ज्ञानार्थं।

(च) भोः भोः इति नटानां सम्बोधनं। अत्रभवतः पूज्यस्य, पौलस्त्यकुलधूम-केतोः पुलस्त्यस्यापत्यं पौत्र इति पौलस्त्यो रावणः पुलस्त्यनामा सप्तर्षीणामन्यतमः तत्पुत्रो विश्रवा तत्पुत्रो रावण इति रामायणं द्रष्टव्यं। तत्कुलस्य रावणवंशस्य धूमकेतुः धूमकेतुरिव विनाशहेतुः तस्य। धूमकेतुस्तु अशुभसूचको ग्रहविशेषः। तथा च समय-संहितायां "ह्रस्वतनुः प्रसन्नः केतुर्लोकस्याभावाय न शुभो विपरीतो विशेषतः शक्रचाप-सङ्काशः द्वित्रिचतुश्शूलो वा दक्षिणसंस्थश्च मृत्युकरः।" रात्रिन्दिवं सर्व्वदा असंहृताः अविरताः आनन्दनान्द्यः आमोदजनकवाक्यानि यस्मिन् स तथोक्तः अभिषेकसमयो राज्याभिषेककालो वर्त्तते इति शेषः। तत् तदा किमिति कथं चत्वरस्थानानि अङ्गन-प्रदेशाः विश्रान्तचारणानि विश्रान्ताः स्वस्वकर्त्तव्याविरताः चारणा नटा येषु तानि वर्त्तन्ते इति शेषः। अभिषेकसमये रङ्गप्राङ्गणे गानवाद्यनाट्यादीनां सर्व्वदैव अनुष्ठानमुचित-मिति भावः।

(१) किमद्य, किमिदानीमिति भिन्नौ पाठौ।

प्रविश्य नटः । भाव ! प्रेषिता हि इतः स्वगृहात् महाराजेन लङ्कासमरसुहृदो महात्मानः प्लवङ्गराक्षसाः सभाजनोपस्थायिनो नानादिगन्तागता (१) ब्रह्मर्षयो राजर्षयश्च, यदाराधनाय एतावतो (२) दिवसानुत्सव आसीत् । (छ)

---

रात्रिश्च दिवा चेति द्वन्द्वे "धन्वनडुहादयश्चेति" निपातनात् रात्रिन्दिवमिति रूपं "अभिविधौ कालाध्वमाना"दिति द्वितीया ।

"भरता इत्यपि नटाश्चारणाश्च कुशीलवाः ।" "अङ्गनं चत्वराजिरे ।" इति चामरः ।

( छ ) प्रविश्येति । रङ्गभूमावित्यर्थः । नटः अपरः कश्चन अभिनेता । प्रविश्य वदतीति शेषः, एवमन्यत्रापि ज्ञेयं । भावयति उत्पादयति अभिनयमिति भावः नटान्तरप्रयोज्यः सूत्रधारवाचकः शब्दोऽयं । तथा च साहित्यदर्पणे—

"सूत्रधारं वदेद्भाव इति वै पारिपार्श्विकः ।
सूत्रधारो मारिषेति" ।

हि यतः महाराजेन रामेण इतः स्वगृहात् अयोध्यानगरात् लङ्कासमरसुहृदः लङ्कासमरे सीतोद्धारार्थलङ्कायुद्धे सुहृदः साहाय्यकरणेन मित्राणि ते, महात्मानः महाबलवन्तः प्लवङ्गराक्षसाः प्लवेन गच्छन्तीति प्लवङ्गाः सुग्रीवहनूमदादयो वानराः विभीषणादयो राक्षसाः ते । सभाजनाय नवराज्ये अभिषिच्यमानस्य रामस्य प्रीतिविधानाय उपतिष्ठन्ति निकटवर्त्तिनो भवन्तीति सभाजनोपस्थायिनः, नानादिगन्तेभ्यः सर्व्वाभ्यो दिग्भ्यः आगतास्ते "अन्तं स्वरूपे नाशे वा" इत्यमरः । ब्रह्माणो ब्राह्मणाश्च ते ऋषयश्चेति ब्रह्मर्षयः वशिष्ठादयः, राजानः क्षत्रियाश्च ते ऋषयश्चेति राजर्षयः जनकादयः प्रेषिताः स्वस्वभवनं प्रति विसृष्टाः । येषां ब्रह्मर्षीणां राजर्षीणाञ्च आराधनाय सन्तोषकरणाय एतावतः इयतः दिवसान् व्याप्य उत्सव आसीत् । अत एवेदानीं विश्रान्तचारणानि चत्वरस्थानानीति भावः ।

---

(१) नानादिगन्तपावना इति पाठान्तरं । (२) इयत इति पाठभेदः ।

अन्यच्च। (ज)

वशिष्ठाधिष्ठिता देव्यो गता राघवमातरः (१)।
अरुन्धतीं पुरस्कृत्य यज्ञे जामातुराश्रमम्॥ ३॥

सूत्र। वैदेशिकोऽस्मीति पृच्छामि, कः पुनरसौ जामाता?। (झ)

नटः। कन्यां दशरथो राजा शान्तां नाम व्यजीजनत्।

(ज) अन्यच्च अपरञ्च। चत्वरस्थानानां विश्रान्तचारणतायां अपरञ्च कारणमस्तीत्यर्थः।

किन्तदित्याह वशिष्ठेति। वशिष्ठेन महर्षिणा अधिष्ठिताः रक्षणीयत्वेनावलम्बिताः देव्यः राघवाणां रामादीनां मातरः कौशल्यादयः अरुन्धतीं तदाख्यां वशिष्ठपत्नीं पुरस्कृत्य अग्रे कृत्वा यज्ञे द्वादशवर्षसम्पाद्ये सत्रे जामातुः ऋष्यशृङ्गस्य आश्रमं गताः। अतएव साम्प्रतमयोध्यानगरी गौरवितजनशून्यप्रायेति विश्रान्तचारणानि चत्वरस्थानानीति भावः। अत्र प्रथमचरणे ष्ठकारयोः सकृत्साम्यात् छेकानुप्रासोऽलङ्कारः॥ ३॥

(झ) सूत्रेति। अस्मि अहं वैदेशिकः अयोध्याभिन्नदेशवासी इति हेतोः पृच्छामि असौ त्वया उक्तो जामाता कः। अस्मीति अहमित्यर्थकमव्ययं। पुनःशब्दो वाक्यालङ्कारे। अभिनयरूपप्रयोजनवशात् पूर्व्वं आयोध्यिकः संवृत्त इत्युक्तं अत्र तु वास्तविकमुक्तमिति न विरोधः।

कन्यामिति। दशरथो राजा शान्तां नाम कन्यां व्यजीजनत् उत्पादितवान् लोमपादाय तदाख्याय राज्ञे अपत्यकृत्रिकां कृत्रिमकन्यारूपां यां ददौ।

यः समानवर्णः पुत्रः, मातापित्रोः पारलौकिकश्राद्धादिकरणे गुणः तदकरणे दोषः इति जानाति, मातापित्रोः शुश्रूषाञ्च करोति; गृहीतः स पुत्रः कृत्रिमपुत्रो भवति। यथा मनुः—

"सदृशन्तु प्रकुर्य्याद्यं गुणदोषविचक्षणं।

(१) रामस्य मातरः इति पाठान्तरं।

अपत्यकृतिकां राज्ञे लोमपादाय यां ददौ ॥४॥
विभाण्डकसुतस्तामृष्यशृङ्ग उपयेमे (ञ), तेन च साम्प्रतं

पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयश्च कृत्रिमः।"

तदेतत् कृत्रिमपुत्रवत् कृत्रिमकन्याऽपि शास्त्रीयेति बोध्यं।

तथा च रामायणं—

"अपुत्रस्तु राजो वै लोपपाद इति श्रुतः।
स राजानं दशरथं प्रार्थयिष्यति भूमिपः॥
अनपत्योऽस्मि मे कन्यां सखे! दातुं त्वमर्हसि।
शान्तां शान्तेन मनसा कन्यार्थं वरवर्णिनीं॥
श्रुत्वा दशरथो वाक्यं प्रकृत्या करुणात्मकः।
दास्यते तां तदा कन्यां स राजा विगतज्वरः॥
स्वपुरं यास्यति प्रीतः कृतार्थेनान्तरात्मना" ॥ ४ ॥

(ञ) विभेति। विभाण्डकस्य तदाख्यस्य मुनेः सुतः पुत्रः ऋष्यशृङ्गस्तां कन्यां उपयेमे उदुवाह परिणीतवान्। यथा रामायणं—

"तां कन्यामृष्यशृङ्गाय प्रदास्यति स पार्थिवः।
ऋष्यशृङ्गोऽपि च प्रीतो लब्ध्वा भार्यां भविष्यति॥"

न च ब्राह्मण ऋष्यशृङ्गः कथं क्षत्रियकन्यां परिणीतवानिति वाच्यं कलीतरयुगेषु असवर्णविवाहस्य शास्त्रीयत्वात्। तथा च मनुः—

"शूद्रैव भार्य्या शूद्रस्य सा च स्वा च विशः स्मृते।
ते च स्वा चैव राज्ञः सुर स्ताश्च स्वा चाग्रजन्मनः॥"

कलौ त्वसवर्णविवाहो निषिद्धः। यथा निषेधानुवृत्तौ आदित्यपुराणं—

"द्विजानामसवर्णासु कन्यासूपयमस्तथा।"

ऋष्यस्य मृगविशेषस्य शृङ्गमिव शृङ्गं यस्य सः। अत्र पौराणिकी वार्त्ता रामायणे द्रष्टव्या। उपयेम इति "उद्वाहे उपयम" इत्यात्मनेपदं।

द्वादशवार्षिकं सत्रमारब्धं, तदनुरोधात् कठोरगर्भामपि वधूं जानकीं विमुच्य गुरुजन स्तत्र गत इति। (ट)

सूत्र। तत् किमनेन, एहि राजद्वारमेव स्वजातिसमयेनोपतिष्ठावः। (ठ)

नटः। तेन हि निरूपयतु राज्ञः सुपरिशुद्धामुपस्थानस्तोत्रपद्धतिं भावः। (ड)

सूत्र। मारिष!

---

(ट) किञ्चेति चार्थः। तेन ऋष्यशृङ्गेन। द्वादशवार्षिकं द्वादशवर्षव्यापकं सत्रं यज्ञः। तस्य ऋष्यशृङ्गस्य अनुरोधात् आग्रहात् गुरुजनः कौशल्यादिः कठोरगर्भां पूर्णगर्भां। विमुच्य विहाय। तत्र ऋष्यशृङ्गाश्रमे। वशिष्ठेत्यादिना श्लोकेन यदुक्तं एतत्गद्यांशेन तस्यैव विवरणं कृतं। इतिशब्दोऽयं पूर्व्वप्रस्तावसमाप्त्यर्थः।

(ठ) तत् तस्मात् चत्वरस्थानानां विश्रालचारणतायां सम्पूर्णहेतूपन्यासात् हेतोः, अनेन तद्विषयकालोचनेन किं, निष्प्रयोजनं तदालोचनमित्यर्थः। एहि आगच्छ, स्वजातिसमयेन सूत्रधारजातिनियमेन। उपतिष्ठावः उपस्थितौ भवावः गच्छाव इत्यर्थः। "समयो नियमः स्म्य"दिति हेमचन्द्रः।

(ड) नट इति। तेन राजद्वारस्य गन्तव्यत्वेन हेतुना भावो भवान् सूत्रधारः सुपरिशुद्धां निर्दोषां अनिन्दनीयामिति यावत् राज्ञो रामस्य उपस्थानस्य उपासनायाः स्तोत्रपद्धतिं स्तुतिग्रन्थं सन्तोषजनकवाक्यमित्यर्थः, हि निश्चितं निरूपयतु चिन्तयित्वा निर्णयतु इत्यर्थः।

(ढ) सूत्रेति। मा रेषति दुष्टाभिनयादिना सभ्यानां शान्तिं न हिनस्ति यः स मारिषः हिंसार्थकरिषधातोः—"नाम्युपधप्रीकृगृज्ञां क"इति कप्रत्ययः। शब्दोऽयं नटाद्य सूत्रधारवक्तव्यो योगरूढः।

"सूत्रधारं वदेद्भाव इति वै पारिपार्श्विकः।
सूत्रधारो मारिषेति"———। साहित्यदर्पणं।

सर्व्वथा व्यवहर्त्तव्ये (१) कुतोह्यवचनीयता।
यथा स्त्रीणां तथा वाचां साधुत्वे दुर्ज्जनो जनः ॥५॥

नटः। अतिदुर्ज्जन इति वक्तव्यम्। (ग)

देव्यामपि हि वैदेह्यां सापवादो यतो जनः।
रक्षोगृहे स्थितिर्मूलमग्निशुद्धौ त्वनिश्चयः ॥६॥

सर्व्वथेति। व्यवहर्त्तव्ये आचरणीये पदार्थे सर्व्वथा सर्व्वेण प्रकारेण कुतः कस्मात् अवचनीयता अनिन्दनीयता स्यात् अपि तु कथमपि नेत्यर्थः। अत एवार्थापत्तिरलङ्कारः। सर्व्वदा व्यवहार्य्यं वस्तु येन केनापि प्रकारेण यस्य कस्यापि निन्दनीयं स्यादेवेत्यर्थः। अत्र हेतुमाह जनो लोकः यथा स्त्रीणां तथा वाचां स्त्रीणामिव वाचामित्यर्थः अत्रोपमालङ्कारः। साधुत्वे प्रशस्तत्वे भद्रत्वे प्रतीत्यर्थः दुर्ज्जनः दोषोद्भावनात् खलो भवतीति शेषः। प्रायेण सर्व्वो जनः स्त्रीणामिव वाचामपि अकारणं दोषमुद्भावयतीत्यर्थः। अतएव उपस्थानस्तोत्रपद्धतेः सर्व्वथानिर्द्दोषत्वकरणचिन्ता निष्फलैवेति भावः। अत्र परार्द्धवाक्यार्थः पूर्व्वं प्रति हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कार इत्यर्थापत्त्युपमाभ्यामङ्गाङ्गिभावेन सङ्करः। अवचनीयतेत्यत्र नञर्थः प्रधानं तस्य तु समासे गुणीभावाद्विधेयाविमर्शदोषः 'निन्दाऽभावः कुतो भवे'दिति पाठेन समाधेयः। हिपदमस्त्र्याद्यवाचकमव्ययं। "पिशुनो दुर्ज्जनः खलः" इत्यमरः॥ ५॥

(ग) नट इति। दुर्ज्जन इत्यत्र अतिदुर्ज्जन इति वक्तव्यमित्यर्थः सर्व्वेणेति शेषः। तथा च साधुः परदोषमेव न कथयति, सामान्यखलस्तु दोषिणो दोषं गुणिनो गुणञ्चाभिधत्ते, अतिखलस्तु निर्द्दोषस्यापि दोषमुद्भावयतीति भावः।

अतिदुर्ज्जन इति वक्तव्यत्वे कारणमाह देव्यामिति। हि तथाहि यतो यस्माद्धेतोः जनो लोकः वैदेह्यां देव्यामपि परमपतिव्रतायां सीतायामपि अन्यत्र का कथेति भावः अत एवार्थापत्तिरलङ्कारः। सापवादः सनिन्दः चरित्रनिन्दाकारीत्यर्थः। किं तत्र कारणमित्याह रक्षोगृहे राक्षसालये रावणभवने इति यावत् स्थितिर्निवास एव मूलं अपवादस्य कारणं एकाकिनी सीता दुर्द्दान्तदुश्चरित्ररावणगृहे स्थितवती सुतरां तस्याः

(१) व्यवहर्त्तव्यमिति पाठान्तरं।

सूत्र। यदि पुनरियं किंवदन्ती महाराजं स्पृशेत् (१) ततोऽतिकष्टं स्यात्। (त)

नटः। सर्व्वथा ऋषयो देवताश्च श्रेयोविधास्यन्ति (२)। परिक्रम्य। भो भोः! क्वेदानीं महाराजः?। आकर्ण्य। एवं जनाः कथयन्ति। (थ)

---

सच्चरित्ररचा एकान्तमसम्भवैवेति कृत्वा सीतायाश्चरित्रं निन्दतीत्यर्थः। तु किन्तु अग्नि-शुद्धौ अग्निपरीचया सीताया निर्द्दोषत्वे अवधारितेऽपि अनिश्चयः सच्चरित्रेयं सीतेति निर्णया-भावः। दृढ़तरप्रमाणेन निर्द्दोषत्वे निर्णीतेऽपि यः संशयानो निन्दां करोति सः अति-दुर्ज्जन एवेति भावः। अत्र प्रथमार्द्धे दोषित्वरूपकारणाभावे अपवादरूपतत्कार्य्यसद्भावात् विभावना, तथा चतुर्थपादे अग्निशुद्धिरूपे हेतौ सत्यपि निश्चयरूपतत्कार्य्याभावात् विशे-षोक्तिश्च अलङ्कारः, अनयोः संसृष्टिः। अग्निशुद्धावित्यत्र अपिशब्दो वक्तव्यः किन्तु नोक्त इति वाच्यानभिधाननामा दोषः तथा अनिश्चय इत्यत्र प्रधानस्य नञर्थस्य समासे गुणीभावात् विधेयाविमर्शश्चेति 'दोषद्वयं 'हेतुर्लङ्कास्थितिर्व्वह्निशुद्धावपि तु संशयः', इति पाठेन समाधेयं॥ ६॥

(त) सूत्रेति। इयं किंवदन्ती सीताचरित्रविषये कुत्सिता जनश्रुतिः यदि महाराजं स्पृशेत् रामचन्द्रस्य कर्णगोचरीभवेदित्यर्थः ततस्तदा अतिकष्टं महादुःखं स्यात् भवेत् इमां किंवदन्तीं श्रुत्वा रामस्य दारुणं कष्टं भविष्यतीत्यर्थः। महाराजं प्रति स्यादिति पाठे तु महाराजभार्य्यां प्रति स्यादित्यर्थः तदा लोकानां अतिकष्टं स्यात् निर्द्दोषाया दोषोद्भावनादिति भावः।

(थ) नट इति। ऋषयो वशिष्ठादयः देवता ब्रह्मादयश्च सर्व्वथा दैहिकं वैषयिकं मानसिकञ्च श्रेयो मङ्गलं विधास्यन्ति करिष्यन्ति सीतारामयोरित्यर्थः। सुतरामस्माभि-र्दुर्भावना न कार्य्येति भावः।

परिक्रम्य राजगृहगमनार्थमिव कियन्तं पदचेपं कृत्वेत्यर्थः।

भो भो विति अयोध्यानिवासिनां सम्बोधनं। महाराजो राम इदानीं क्व कुत्र आस्ते इति शेषः।

(१) प्रति स्यात् इति पाठान्तरं। (२) स्वस्ति करिष्यन्ति इति पाठभेदः।

स्नेहात् सभाजयितुमेत्य दिनान्यमूनि
नीत्वोत्सवेन जनकोऽद्य गतो विदेहान्।
देव्यास्ततो विमनसः परिसान्त्वनाय
धर्म्मासनाद्विशति वासगृहं नरेन्द्रः॥ ७॥

इति निष्क्रान्तौ। (द)

## प्रस्तावना। (ध)

---

आकर्ण्य जनानामुत्तरं श्रुत्वेवेत्यर्थः।

जना अयोध्यावासिनो लोका एवं वक्ष्यमाणं।

किं कथयन्तीत्याह स्नेहादिति। जनको विदेहराजः स्नेहात् वात्सल्यात् नतु गौरवादित्यर्थः, सभाजयितुं जामातॄन् रामादीन् सन्तोषयितुं एत्य अयोध्यामागत्य अमूनि दिनानि कतिपयानि दिवसानि इत्यर्थः उत्सवेन आनन्देन नीत्वा अतिवाह्य अद्य विदेहान् स्वाधिकृतजनपदं गतः। ततः कारणात् विमनसः उत्कण्ठितचित्तायाः देव्याः सीतायाः परिसान्त्वनाय उत्कण्ठापनोदनाय नरेन्द्रो रामचन्द्रः धर्म्मासनात् विचारासनात् वासगृहं शयनागारं विशति प्रविशति।

विदेहानिति "बहुत्ववदस्यादे रेकाधिकरणस्य प्रयोगे"ति बहुवचनं।

वसन्ततिलकावृत्तं "ज्ञेया वसन्ततिलका तभजा जगौ ग"इति लक्षणात्॥ ७॥

(द) इतीति। इति उक्तप्रकारेण प्रतिपाद्यविषयं विज्ञाप्य निष्क्रान्तौ रङ्गालयान्निर्गतौ नटसूत्रधाराविति शेषः।

(ध) प्रेति। प्रस्तावयति प्रतिपाद्यविषयमुत्थापयति या वाक्यावली सा प्रस्तावना। तथा च साहित्यदर्पणम्—

"नटी विदूषको वापि पारिपार्श्विक एव वा।
सूत्रधारेण सहिताः संलापं यत्र कुर्व्वते॥
चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा॥"

ततः प्रविशत्यासनस्थौ रामः सीता च। (न)

रामः। देवि! समाश्वसिहि, न ते हि गुरवश्चिरं शक्नु-

साचेयं प्रयोगातिशयरूपा, सीतारामविषयकसंलापरूपे एकस्मिन् प्रयोगे प्रचलति सति "धर्म्मासनाद्विशति वासगृहं नरेन्द्र" इति प्रयुक्तेन अन्यप्रयोगेण सीतारामरूपयोः पात्रयोः प्रवेशस्य सूचितत्वात्। यथा साहित्यदर्पणे—

"यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते।
तेन पात्रप्रवेशश्चेत् प्रयोगातिशय स्तदा॥"

केचित्तु 'विशती'ति वर्त्तमानकालनिर्द्देशात् प्रवर्त्तकरूपा प्रस्तावनेयं।

"कालं प्रवृत्तमाश्रित्य सूत्रधृग् यत्र वर्णयेत्।
तदाश्रयस्य पात्रस्य प्रवेशस्तत् प्रवर्त्तकं॥

इति साहित्यदर्पणादिति वदन्ति। तदसत्, तथाहि तिङर्थो न वर्त्तमानत्वादिः, किन्तु यत्न एव। तथाच शब्दशक्तिप्रकाशिकायां जगदीशः—

"जीवनयोन्यादिनिखिलयत्नगतं यत्नत्वमेव तिङः शक्यतावच्छेदकं।"

भवतु वा काल एव तिङर्थः, तथापि यत्र साक्षाद्वाचकपदेन वर्त्तमानो वसन्तादि-विशेषकालोऽभिधीयते तत्रैव प्रवर्त्तकं भवेत्। यथा "प्रातः शरत्समय एष विशुद्धकान्त" इति दर्पणकारेणोदाहृतं अन्यथा "क्रूरग्रह" इत्यादौ उद्घात्यके "दीपादन्यस्मादपि" इत्यादौ कथोद्घाते "सीतां वनाय परिकर्षति लक्ष्मणोऽय"मित्यादौ प्रयोगातिशये "तवास्मि गीतरागेण"त्यादाववलगितस्थलेऽपि च प्रवर्त्तकत्वप्रसङ्गस्तेदुर्निवार एवेति सुधीभिर्विभावनीयं।

(न) तत इति। ततो नटसूत्रधारयोर्निष्क्रमणानन्तरं। आसनस्थो रामः सीता च आसनस्था प्रविशति सभ्यानां दृष्टिगोचरीभवति। अत्र विशधातोः सभ्यदृष्टि-गोचरत्वेन रूढ़िमूला जहत्स्वार्था लक्षणा, तेन आसनस्थस्य स्वयं प्रवेशो न विरुद्ध इति बोध्यं। एवमन्यत्रापि ज्ञेयं।

(प) राम इति। समाश्वसिहि स्वजनविच्छेदजनितविषादरहिता भवेत्यर्थः।

वन्त्यस्मान् वियोक्तुम् । (प)

किन्त्वनुष्ठाननित्यत्वं स्वातन्त्र्यमपकर्षति ।
सङ्कटा ह्याहिताग्नीनां प्रत्यवायैर्गृहस्थता ॥८॥

हि यस्मात् ते गुरवः जनकादयः अस्मान् चिरं वियोक्तुं वियुज्य स्थातुं न शक्नुवन्ति ; स्नेहाकृष्टाः पुनरप्यचिरादेव आगमिष्यन्तीति भावः । जनको रामस्य श्वशुरत्वेन गुरुरिति गुरव इत्युक्तं ।

तथाच देवलः—"आचार्य्यश्च पिता ज्येष्ठो भ्राता चैव महीपतिः ।
मातुलः श्वशुरस्त्राता मातामहपितामहौ ॥
वर्णज्येष्ठः पितृव्यश्च पुंस्येते गुरवो मताः ॥"

ननु यदि स्नेहात् पुनरप्यागमनसम्भावना, तदा कथमिदानीमपि अस्मान् विहाय गता इत्याह किन्त्विति । अनुष्ठानानां अग्निहोत्रादिकर्म्मणां नित्यत्वं सति सम्भवे अपरिहार्य्यत्वं कर्त्तृस्वातन्त्र्यं स्वाधीनतां स्वेच्छाचारित्वमित्यर्थः अपकर्षति निवारयति, नित्यकर्म्मकरणार्थमेव जनकः स्वगृहं गत इति भावः । हि विशेषतः आहिता वेदविधानेन स्थापिता अग्नयो यै स्तेषामाहिताग्नीनां गृहस्थता गृहान्तरे अवस्थानं प्रत्यवायैः पापैः सङ्कटा सविघ्ना साग्निकानां नित्यकर्त्तव्यहोममपहाय गृहान्तरे अवस्थानेन पापं भवतीत्यर्थः ।

अत्र जनकप्रस्थानरूपकार्य्यस्य अनुष्ठाननित्यत्वरूपे एकस्मिन् कारणे सति गृहान्तरे अवस्थानं पापजनकमिति कारणान्तरनिर्द्देशात् समुच्चयोऽलङ्कारः ।

नित्यकर्म्मणामपरिहार्य्यत्वेन इच्छानुसारेणैकत्राधिककालावस्थानासम्भवात् विशेषतः साग्निकानां होममपहाय गृहान्तरे अवस्थानस्य पापजनकत्वात् जनको गृहं गत इति सरलार्थः ।

"यदकरणे प्रत्यवायस्तन्नित्य"मिति वेदान्तसारः ।
"यावज्जीवमग्निहोत्रं जुहोति" इति श्रुत्या
"पूर्व्वं व्रतं गृहीत्वा यो नाचरेत् ज्ञानदुर्व्वलः ।
जीवन् भवति चाण्डालः मृतः श्वा चैव जायते ।"

( १ ) विमोक्तुं विहातुमिति पाठभेदौ ।

सीता। जाणासि अज्जउत्त! जाणामि। किन्तु सन्दावआरिणो वन्धुजणविप्पओआ होन्ति। (फ)

राम:। एवमेतत्। एते हि हृदयमर्म्मच्छिद: संसारभावा:

(फ) जानामि आर्य्यपुत्र! जानामि। किन्तु सन्तापकारिणो बन्धुजनविप्रयोगा भवन्ति।

इति स्मृत्या च अग्निहोत्रादीनां नित्यत्वं, अकरणे प्रत्यवायजनकत्वञ्च प्रतिपत्तव्यं। किन्तु प्रयोजनवशात् अग्निहोत्रादिनित्यकर्म्मकरणाय प्रतिनिधिविधानानन्तरं स्वल्पकालीन: प्रवासोऽपि शास्त्रीय:। यथा छन्दोगपरिशिष्टं—

"निक्षिप्याग्निं स्वदारेषु परिकल्पर्त्विजं तथा।
प्रवसेत् कार्य्यवान् विप्रो वृथैव न चिरं वसेत्॥"

शातातप:— "श्रौतं कर्म्म स्वयं कुर्य्यात् अन्योपि स्मार्त्तमाचरेत्।
अशक्तौ श्रौतमप्यन्य: कुर्य्यादाचारमन्तत:॥"

अत एव कतिपयदिवसार्थं जनक: समागत्य पुनर्गत इति बोध्यं। "हेत्ववधारण-प्रश्नविशेषेषु तथाहि हि" इति शब्दार्णव:॥ ८॥

(फ) जानामीति। आर्य्यो गुरु: श्वशुर इति यावत् तस्य पुत्र इत्यार्य्यपुत्र इति भार्य्याकृतं भर्त्तृसम्बोधनमेतत् नाटकादिषु प्रसिद्धं। बन्धुजनानां पित्रादीनां विप्रयोगा: विच्छेदा:। खेदवशात् जानामि जानामि इति द्विरुक्ति:। तथाचोक्तं—

"विवादे विस्मये हर्षे खेदे दैन्येऽवधारणे।
प्रसादने सम्भ्रमे च द्विस्त्रिरुक्तिर्न दुष्यति॥"

सीताया: शिक्षितत्वादुच्चवंशोद्भवत्वाच्च तद्वाच्येयं शौरसेनी भाषा। तथाच साहित्य-दर्पणं—

"पुरुषाणामनीचानां संस्कृतं स्यात् कृतात्मनां।
शौरसेनी प्रयोक्तव्या तादृशीनाञ्च योषिताम्॥"

आसां साधनप्रणाली गौरवभयात् परिहृता।

(ब) राम इति। एतत् त्वयोक्तं एवं मयापि स्वीकार्य्यं सत्यमित्यर्थ:।

येभ्यो वीभत्समानाः सन्त्यज्य सर्वान् कामानरण्ये मनीषिणो विश्राम्यन्ति । (व)

प्रविश्य कञ्चुकी । **रामभद्र !** इत्यर्द्धोक्ते साशङ्कं । **महाराज !** । (भ)

एते सर्वैरस्माभिरनुभूयमानाः संसारभावाः जगतः स्वभावाः प्रियविच्छेदाप्रियसंयोगादय इत्यर्थः हृदयमर्म्मच्छिदः हृदयसन्धिस्थानविश्लेषकाः महादुःखकरा इत्यर्थः । येभ्यः संसारभावेभ्यः वीभत्समाना विरक्ताः सन्तः मनीषिणः ज्ञानिनोजनाः सर्व्वान् कामान् कामनाविषयान् धनजनादीन् सन्त्यज्य विहाय अरण्ये वने विश्राम्यन्ति शान्तिं लभन्ते । गृहस्थितिपक्ष एव संसारभावाः प्रबलीभवन्ति, व्यवहारोपयोगिवस्तुसमासादनेन सर्वदा महान् परिश्रमश्च स्यात् ; तत् परित्यागे तु विश्राम एव स्यादिति भावः । संसारे प्रायेणैव निरवच्छिन्नदुःखानि, कदापि यदि किञ्चिदपि सुखं स्यात् तदपि दुःखमिश्रितमेव इति विश्रामसुखार्थं वनगमनमेव श्रेय इति भावः । तथा च पातञ्जलसूत्रं—

"परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः ।"

मुक्तिवादे गदाधरभट्टाचार्य्याश्च "अस्मिन् संसारकान्तारे कियन्ति दुःखदुर्दिनानि कियती वा सुखखद्योतिका" इत्यादि ।

"संसारश्च मिथ्याधीप्रभवा वासनेति" प्रामाण्यवादे गदाधरः ।

"स्वादृष्टोपनिवद्धशरीरपरिग्रहः संसार" इति तु कातन्त्रपरिशिष्टटीकायां गोपीनाथः ।

"भावः सत्तास्वभावाभिप्राय चेष्टात्मजन्मस्वि"त्यमरः ।

(भ) । प्रविश्येति । रङ्गालय इति शेषः । अन्तःपुराधाक्षोविद्वान् वृद्धब्राह्मणः कञ्चुकी—। तथा च भरतः—

"अन्तःपुरचरो विप्रो वृद्धो गुणगणान्वितः ।
सर्वशास्त्रार्थकुशलः कञ्चुकीत्यभिधीयते ॥
जरावैक्लव्ययुक्तेन विशेद् गात्रेण कञ्चुकी ।"

रामः। सस्मितं। आर्य्य ! ननु रामभद्र इत्येव मां प्रत्युपचारः शोभते तातपरिजनस्य, तद्यथाऽभ्यस्त (१) मभिधीयताम् । (म)

कञ्चु। देव ! ऋष्यशृङ्गाश्रमादष्टावक्रः सम्प्राप्तः । (य)

सीता। अज्ज ! तदो किं विलम्बीअदि । (र)

---

(र)। आर्य्य ! ततः किं विलम्ब्यते ? ।

---

कञ्चुकिना रामस्य शैशवादवधि लालनादौ रामभद्र इति वात्सल्यव्यञ्जकनाम्नैव सम्बोधनादिकं कृतं, किन्तु इदानीमपि तदभ्यासवशात् सहसा रामभद्र इत्येव तत्सम्बोधनपदे मुखान्निर्गते इदानीं राजचक्रवर्त्तिनः गौरवसम्भ्रमसम्बोधनं विना शिशूचित रामभद्र इति सम्बोधनं नितान्तमनुचितमित्यनुमीयमानं रामस्य रोषमपनेतुं तत्क्षणात् महाराज इत्युक्तं । इति बोधयितुं महाकविना साशङ्कमित्युक्तं । रामभद्र ! अवधारय इतिवाक्यसमुदायस्य 'रामभद्र' इत्येव अर्द्धं स्यादत उक्तं 'इत्यर्द्धोक्ते इति । उक्तमिति भावे क्तः ।

(म) राम इति। बाल्ये लालनतर्ज्जनभर्त्सनादिकं कृतवतः कञ्चुकिन इदानीमयं शिष्टाचारोनितान्तमनावश्यक इति स्मितकारणं रामस्य ।

"ईषद्विकासि नयनं स्मितं स्यात् स्पन्दिताधर" मितिस्मितलक्षणं ।

नन्विति अनुनये "प्रश्नावधारणानुज्ञानुनयामन्त्रणे नन्वि"त्यमरः। तातपरिजनस्य पितृपरिवारस्य वयसा बाल्यशिक्षकत्वेन च पितृस्थानीयस्य इत्यर्थः मां प्रति रामभद्र इत्येव उपचारः सम्बोधनव्यवहारः शोभते सङ्गच्छत इत्यर्थः। गुरुजनकृतं वात्सल्यव्यञ्जकं सम्बोधनं यथा चिराय श्रुतिमधुरं भवति न तथा गौरवसूचकमिति भावः। तत्तस्मात् यथाभ्यस्तं अभ्यस्तं रामभद्र इति सम्बोधनमनतिक्रम्य अभिधीयतां उच्यतां रामभद्र इत्येव सम्बुध्यतामित्यर्थः। अनेन रामस्य महाविनयसौजन्यं प्रकटीकृतं कविना । "उपचारोव्यवहार" इति दुर्गसिंहः ।

(य) कञ्चुिति। अष्टावक्रः अष्टावक्रनामा मुनिः। सम्प्राप्तः अयोध्यामिति शेषः भवद्दर्शनार्थमुपस्थित इत्यर्थः।

(र)। ततस्तदा किं विलम्ब्यते प्रवेशयितुमिति शेषः ।

रामः । त्वरितं प्रवेशय

कञ्चुकी निष्क्रान्तः ।

प्रविश्य । अष्टावक्रः । स्वस्ति वाम् । (ल)

रामः । भगवन् ! अभिवादये, इत आस्यताम् । (व)

सीता । भअवं ! णमो दे, अवि कुसलं सजामातुअस्स गुरुजणस्स (१) अज्जाए सन्ताए अ । (श)

रामः । निर्विघ्नः सोमपीथी आवुत्तो मे भगवानृष्यशृङ्गः, आर्य्या च शान्ता ? । (ष)

सीता । अह्मे वि सुमरेदि ? । (स)

---

(श) । भअवन् ! नमस्ते, अपि कुशलं सजामातृकस्य गुरुजनस्य आर्य्यायाश्च शान्तायाः ?

(स) । अस्मानपि स्मरति ? ।

---

(ल) । प्रविश्येति । वां युवाभ्यां स्वस्ति क्षेमं । युवयोर्मङ्गलं भवत्वित्यर्थः । "स्वस्त्याशीः क्षेमपुण्यादा"वित्यमरः । "नमः स्वस्तीत्यादिना चतुर्थीद्विवचनं, ततो "वां नौ द्वित्व" इति वामादेशः ।

(व) । राम इति । अभिवादये प्रणमामि भवन्तमिति शेषः । इत आस्यतां अस्मिन् स्थाने उपविश्यतां ।

(श) । सजामातृकस्य ऋष्यशृङ्गसहितस्य गुरुजनस्य कौशल्यादेः । आर्य्यायाः पूज्यायाः । अपि कुशलं मङ्गलं किं ।

"गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपी"त्यमरः ।

(ष) । पानं पीतं भावे क्तः सोमस्य पीतं सोमपीतं तदस्यास्तीति सोमपीथी पृषोदरादित्वात् तकारस्य थकारः । आवुत्तो भगिनीपतिः "भगिनीपति रावुत्त" इत्यमरः ।

---

(१) सअस्स गुरुअणस्स इति पाठान्तरं ।

अष्टा। उपविश्य। अथ किम्। देवि! कुलगुरुर्भगवान् वशिष्ठ स्त्वामिदमाह। (ह)

विश्वम्भरा भगवती भवती मसूत
राजा प्रजापतिसमो जनकः पिता ते।
तेषां वधूस्त्वमसि नन्दिनि! पार्थिवानां
येषां कुलेषु (१) सविता च गुरुर्वयञ्च॥ ८॥

---

निर्विघ्नः विघ्नशून्यः आर्य्या शान्ताच निर्विघ्नेति शेषः। अत्र कान्ता प्रश्नो व्यज्यते। सीताप्रश्ने नैव ज्ञातव्यजिज्ञासानिर्वाहे आवेगेन रामस्यापि पुनस्तथव प्रश्न इति न दोषः।

(स)। सीतेति। अत्रापि अपिशब्दः प्रश्नार्थे।

(ह)। अष्टेति। अथकिमिति स्वीकारार्थमेकमव्ययं। श्वश्रुजनाः कौशल्यादिः शान्ता च कुशलमास्ते स्मरति च युष्मानित्यर्थः।

विश्वम्भरेति। भगवती माहात्म्यवती विश्वं बिभर्त्तीति विश्वम्भरा पृथिवी "नाम्नि तृभृ" इत्यादिना खः भवतीं त्वां असूत उत्पादितवती, तथा प्रजापतिसमः प्रजानां सानुरागपरिपालनात् तपोमाहात्म्याच्च ब्रह्मणा तुल्यो राजा जनकस्ते तव पिता परिपालकः। हे नन्दिनि! कन्यासदृशि! आनन्दकारिणि? त्वं तेषां पार्थिवान राज्ञां वधूः स्नुषा असि, येषां कुलेषु वंशेषु नानाशाखत्वाद्बहुवचनं सविता साक्षाद्भगवान्-देवः सूर्य्यो गुरुः पिता उत्पादक इत्यर्थः, तथा वयञ्च गुरव उपदेष्टारः। तव मातृ-पितृभर्तॄणां सर्वप्रार्थनानुरूपश्रेष्ठत्वमित्यर्थः।

अत्र प्रजापतिसम इति आर्थी समासगतोपमा, जनकः पिता इति प्रथमतः पुनरुक्तत्वप्रतीतेः परन्तु जनकोजनकनामा इत्यर्थभेदात् पुनरुक्तवदाभासः, सविता च गुरुर्वयञ्च इत्यत्र उभयोरेकगुरुत्वधर्म्मयोगात् तुल्ययोगिता, तथा सीताया भाग्यवत्त्वरूपकार्य्यस्य पृथिवीकन्यात्वरूपे एकस्मिन् कारणे सत्यपि जनककन्यात्वसूर्य्यवंशीय राजवधूत्वरूप-कारणान्तरद्वयोपन्यासात् समुच्चयश्चेति, एतेषामङ्गाङ्गिभावेन सङ्करः। एषां लक्षणान्यनु-

(१) कुले ष इति पाठभेदः

तत् किमन्यदाशास्महे, केवलं वीरप्रसवा भूयाः । (च)

रामः । अनुगृहीताः स्मः । (क)

लौकिकानां हि साधूनामर्थं वागनुवर्त्तते ।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति ॥ १० ॥

सन्धेयानि । तथा यच्छब्दस्य शेषे पाठाद्विधेयाविमर्शदोषः, स तु चतुर्थपादं प्रथमं परञ्च तृतीयपादं पठित्वा समाधेयः । सीतायाः पृथिवीकन्यात्वे प्रमाणं यथा रामायणे—

"अथ मे कृषतः क्षेत्रं लाङ्गलादुत्थिता ततः ।
क्षेत्रं शोधयता लब्धा नाम्ना सीतेति विश्रुता ॥
भूतलादुत्थिता सा तु व्यवर्द्धत ममात्मजा ।"

वसन्ततिलका वृत्तं ॥ ९ ॥

(च) । तत्तस्मात् अन्यत् पुत्रभिन्नं किं आशास्महे आशिषा योजयामः पुत्रभिन्नानां सर्वेषामेव प्रार्थनीयानां सद्भावादित्यर्थः । प्रसूयत इति प्रसवः पुत्रः वीरः प्रसवो यस्याः सा तादृशी भूया इति आशीर्लिङ् ।

(क) राम इति । अनुगृहीताः लब्धकरुणाः स्मः सीतया सह वयमित्यर्थः तेषा माशीर्वादस्य अव्यर्थत्वादिति भावः ।

कथमित्याह लौकिकानामिति । हि यस्मात् लौकिकानां प्राकृतानां साधूनां सत्य-वादिनां वाक् वाक्यं अर्थं अभिधेयं वस्तु अनुवर्त्तते लक्ष्यीकृत्य प्रसरति, पुनः किन्तु अर्थः अभिधेयविषयः आद्यानां प्राथमिकानां ऋषीणां वशिष्ठादीनां वाचं वाक्यं अनुधावति अनुसृत्य उत्पद्यत इत्यर्थः । लोके यद्यद्वस्तु प्रसिद्धमस्ति प्राकृतसत्यवादिनस्तत्तदेव वदन्ति नतु तेषां वाक्यतोवस्त्वन्तरमुत्पद्यते, किन्तु ब्रह्मर्षयो यद्यद्वदन्ति तत्तदेव असदपि उत्पद्यते इति सरलार्थः । अतएवास्माकं वीरपुत्रोऽवश्यम्भावीति भावः ।

अत्र लौकिकसाधुभ्यो वशिष्ठादीनामाधिक्यप्रतिपादनात् व्यतिरेकालङ्कारः, तथ अप्रस्तुतेभ्यः सामान्यऋषिभ्यः प्रस्तुतस्य विशेषस्य वशिष्ठस्य प्रतीतेरप्रस्तुतप्रशंसा च अनयोरङ्गाङ्गिभावेन सङ्करः ।

अष्टा। इदञ्च भगवत्या अरुन्धत्या देवीभिः शान्तया च भूयोभूयः सन्दिष्टं, यः कश्चिद्गर्भदोहदो भवत्यस्याः सोऽवश्यमचिरात् सम्पादयितव्य इति। (ख)

रामः। क्रियते, यद्येषा (१) कथयति। (ग)

अष्टा। ननान्दुः पत्याच देव्याः सन्दिष्टमृष्यशृङ्गेण; वत्से! कठोरगर्भेति नानीतासि, वत्सोऽपि रामभद्र-स्त्वद्विनोदनार्थमेव स्थापितः। तत्पुत्रपूर्णोत्सङ्गामायुष्मतीं द्रक्ष्यामीति। (घ)

---

ऋषीणामपि साधुत्वमस्ति तद्व्यावृत्तये लौकिकानामित्युक्तं आद्यऋषयस्तु अलौकिकाः। लौकिका असाधवस्तु यद्वस्तु नास्ति तदपि वदन्ति, अतस्तेषां वाक्यानामर्थानुसारित्वमपि नास्ति मिथ्यावादित्वादिति तद्व्यावृत्तये साधूनामित्युक्तं॥ १०॥

(ख)। अष्टेति। देवीभिः कौशल्यादिभिः। भूयोभूयः वारंवारं। सन्दिष्टं वाचिकं प्रेषितं। अस्याः सीतायाः यः कश्चित् विपुलायाससाध्योऽपीत्यर्थः गर्भदोहदः गर्भकालीनः पानभोजनादेरभिलाषः। "दोहदो दौर्हृदं श्रद्धा लालसेति" हेमः। स्याद इति लोकप्रसिद्धः। सम्पादयितव्यः त्वयति शेषः।

(ग) राम इति। क्रियते अस्या अभिलाषः सम्पाद्यते, मयेति शेषः। एषा सीता यदि कथयति, स्वाभिलाषं यदि व्यनक्तीत्यर्थः। इयमीदृशी विनयलज्जानिभृता यत्किमपि न कथयति, सुतरां ममापि तत्सम्पादनं न घटते इति भावः। यद्यद्देषेति पाठे यद् यत् कथयति तत्तत् क्रियत इत्यर्थः।

(घ)। अष्टेति। ननान्दा भर्तृभगिनी तस्याः "ननान्दा नन्दिनी नन्दा पतिस्वसे"ति शब्दरत्नावली। देव्याः सीतायाः। किं सन्दिष्टमित्याह वत्स इत्यादि। त्वं कठोरगर्भा पूर्णगर्भा इति हेतो नानीतासि ममाश्रममित्यर्थः। अत्र "यानादिभ्रमणञ्चैव साष्टमात् स्त्री न चार्हतीति शास्त्रं" हेतुत्वेन केचित् पठन्ति। पुत्रेण पूर्णं उत्सङ्गः क्रोड़ो यस्या तां। आयुष्मतीं सीतां। इति सन्दिष्टमित्यनेनान्वयः।

---

(१) यद् यद्देषा इति पाठान्तरं।

रामः । सहर्षस्मितं । तथास्तु । भगवता वशिष्ठेन किमादिष्टोऽस्मि ? । (ङ) ।

अष्टा । श्रूयताम् ।

जामातृयज्ञेन वयं निरुद्धा
स्त्वं बाल एवासि नवञ्च राज्यम् ।
युक्तः प्रजानामनुरञ्जने स्या-
स्तस्माद्यशो यत् परमं धनं वः ॥ ११ ॥

रामः । यथाह भगवान् मैत्रावरुणिः । (च)

(ङ) राम इति । ऋष्यशृङ्गेण यथा उक्तं तथा अस्तु इत्यर्थः ।

जामेति । वयं जामातुः ऋष्यशृङ्गस्य यज्ञेन निरुद्धाः पौरहित्येन वृताः सुतरामासमाप्तेर्गन्तु मसमर्था इत्यर्थः, अतएव अस्मास्वपि तव निर्भरो न भवेदिति भावः । त्वं बाल एव शिशुरेवासि अतः प्राचीनवदभिज्ञता नास्तीति भावः । च किञ्च राज्यं नवं अचिरलब्धं सुतरामवश्यमेव विशृङ्खलायाः सम्भव इति भावः । तस्मात् प्रजानामनुरञ्जने त्वं प्रत्यनुरागजनने युक्तः एकाग्रचित्तः स्याः भवेः । तथाचोक्तं रघुवंशे "राजा प्रकृतिरञ्जना"दिति । तस्मात् प्रजानुरञ्जनात् यद् यशो भवतीत्यर्थः, तत् वो युष्माकं रघुवंशीयानां परमं धनं तदर्थमेव सर्वदा त्वया यतितव्यमिति भावः ।

अत्र तृतीयपादं प्रति प्रथमद्वितीयपादगतवाक्यद्वयस्य हेतुतया निर्देशात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । इन्द्रवज्रावृत्तं । ११ ।

(च) । राम इति । मित्रस्य वरुणस्य मित्रवरुणौ तयोरपत्यं मैत्रावरुणिः वशिष्ठः "क्वचिदुभयपदस्यापीति" उभयत्र वृद्धिः । यथाह सम्यक् ब्रवीति इत्यर्थः । कदाचित् तपश्चरतो मित्रस्य वरुणस्य च मुनेरुर्वशीं पश्यतो रेतः पपात, तस्माच्च कुम्भनिहितात् अगस्त्यो वशिष्ठश्च जात इति मत्स्यपुराणवार्त्ताऽत्र द्रष्टव्या । सुतरामुभावेव अगस्त्यवशिष्ठौ मैत्रावरुणिशब्दवाच्यौ ।

स्नेहं दयाञ्च सौख्यञ्च यदि वा जानकीमपि।
आराधनाय लोकानां(१) मुञ्चतो नास्ति मे व्यथा ॥१२॥

सीता। अदो ज्जेव राहवकुलधुरन्धरो अज्जउत्तो। (छ)

रामः। कः कोऽत्र भोः! विश्राम्यतां भगवानष्टावक्रः।

अष्टा। उत्थाय परिक्रम्य च। अये कुमारलक्ष्मणः प्राप्तः। (ज)

इति निष्क्रान्तः।

प्रविश्य लक्ष्मणः। जयति जयत्यार्य्यः। आर्य्य! तेन चित्रकरेणास्मदुपदिष्टमार्य्यस्य चरितमस्यां वीथिकायामभिलिखितं, तत्पश्यत्वार्य्यः। (झ)

---

(छ)। अतएव राघवकुलधुरन्धर आर्य्यपुत्रः।

स्नेहमिति। लोकानां प्रजानां आराधनाय सन्तोषाय स्नेहं वात्सल्यं दयां करुणाञ्च सौख्यं आत्मसुखञ्च यदिवा किम्वा जानकीं सीतामपि मुञ्चतस्त्यजतः मे मम व्यथा चित्तजनितोऽनुतापोनास्ति। स्नेहदयाख्यौ सत्पुरुषगुणौ जगद्वाञ्छनीयं सुखं किं बहुना प्राणाधिकां सीतामपि प्रजानां सन्तोषाय परित्यक्तुमर्हामीतिभावः।

अत्र अन्यत्र का कथा जानकीमपीति अर्थागमादर्थापत्तिः, तथा मुञ्चत इत्येकया क्रियया स्नेहादीनामन्वयात् तुल्ययोगिताचेत्यनयोः सङ्करः।

तथा स्नेहादीनामुत्तरोत्तरोत्कर्षप्रतिपादनात् सारालङ्कारप्रसङ्गः, स च वाचकाभावात् व्यज्यत इति वस्तुनालङ्कारध्वनिः॥ १२॥

(छ)। अत इति। अतएव प्रजावात्सल्यातिशयादेव राघवकुलधुरन्धरः प्रजावत्सलरघुवंशीयराजगणाग्रगण्यः।

(ज)। अष्टेति। अयि इति ससन्तोषसम्बोधनसूचकमव्ययं।

(झ)। प्रविश्येति। आर्य्योभवान् जयति उत्कर्षवान् भवति मत्तोभवानुत्कृष्ट इत्यर्थः। गुरुजनसन्निधाने एतदुक्त्या औद्धत्यपरिहारः स्यादिति बोध्यं एवमन्यत्रापि।

(१) लोकस्य इति पाठभेदः।

राम:। जानासि वत्स! दुर्म्मनायमानां देवीं विनोदयितुम्। तत् कियन्तमवधिं यावत्?। (ञ)

लक्ष्म। यावदार्य्याया हुताशने विशुद्धिः।

राम:। शान्तम्। (ट)

उत्पत्ति परिपूतायाः किमस्याः पावनान्तरैः।
तीर्थोदकञ्च वह्निश्च नान्यतः शुद्धिमर्हतः॥ १३॥

वीथिकायां भित्तौ पङ्क्तावर्त्म गृहाङ्गेषु वीथिर्वीथीव वीथिका" इति रत्नकोषः। अभिलिखितं चित्रितं।

चित्रदर्शनेन सीतायाः पञ्चवटीवनं, तत्र मुनिपत्नीभिः सद्भावः, रामेण सह विश्रब्धालापादिकं, स्वाभाविकसौन्दर्य्यञ्च स्मृतिपथे पतिष्यति ततश्च तत्र स्वारसिकी गमनेच्छा भविष्यति, तदपदेशेन च रामस्य सीतानिर्वासनं सुकरं भवेदिति भवभूतिना प्रस्तावयोजनासुविधार्थं वैचित्र्यार्थञ्च चित्रदर्शनमुपनिवद्धमिति सुधीभिर्भाव्यं।

(ञ)। राम इति। दुर्म्मनायमानां केनचित् कारणेन विषण्णां देवीं सीतां विनोदयितुं सन्तोषयितुं जानासि अभिज्ञोऽसीति त्वमतीव सुचतुरः समयावस्थाऽभिज्ञश्चेति भावः। तत् चित्रं कियन्तमवधिं यावत् कां शेषसीमां व्याप्य चित्रितं? "यावताऽवधेर्य्यने"ति द्वितीया।

(ट)। राम इति। शान्तमिति वारणार्थमव्ययं। नैवं ब्रूहीत्यर्थः।

कथमित्याह उत्पत्तीति। उत्पत्ते र्जन्मत एव आरभ्य परिपूतायाः पवित्राया अस्याः सीतायाः पावनान्तरैः अन्यैः पवित्रताजनकैः अग्न्यादिभिः किं स्वतः शुद्धत्वादनर्थका एव अग्न्यादय इत्यर्थः। तथाच तीर्थोदकञ्च वह्निश्च एतौ पदार्थौ अन्यतः द्रव्यान्तरात् शुद्धिं पवित्रतां न अर्हतः प्राप्तुं योग्यौ भवतः।

अत्र यथा तीर्थोदकवह्न्योरन्यतः शुद्ध्यपेक्षा नास्ति-तद्वत् सीताया अपीति प्रणिधानगम्यसाम्यात् दृष्टान्तोऽलङ्कारः, तथा एकया अर्हत इति क्रियया तीर्थोदकवह्न्योरन्वयात् तुल्ययोगिताचेत्यनयो रङ्गाङ्गिभावेन सङ्करः।

तथा तीर्थोदकमितिनपुंसकलिङ्गेन प्रक्रम्य वह्निरिति पुंलिङ्गनिर्द्देशात् प्रक्रम-

देवि! देवयजनसम्भवे! प्रसीद, एष ते जीवितावधिः प्रवादः। (ठ)

कष्टं जनः कुलधनै रनुरञ्जनीय-
स्तन्नो यदुक्तमशिवं नहि तत् क्षमं ते।

भङ्गदोषः, सच "तीर्थोदकं तथाऽग्निश्च" इति पाठेन समाधेयः। अग्निश्चमपि वह्निः।

सीताया आजन्मशुद्धत्वञ्च अयोनिजत्वेनेति बोध्यं तत्प्रमाणान्तु पूर्वमुक्तं। योनिजानान्तु जनकजनन्योरपवित्रशुक्रशोणितजातत्वादेव अपरिहार्य्यं पापमुत्पद्यते, तत्तु संस्कारकर्म्मभिर्नश्यति, तथाच याज्ञवल्क्यः—

"एव मेनः शमं याति वीजगर्भसमुद्भवं।"

तीर्थोदकवह्न्योः स्वतः पवित्रत्वं यथा वह्निकूर्म्मपुराणयोः

"तीर्थतोयं ततः पुण्यं गङ्गातोयं ततोऽधिकं।"

"पावकः पवमानश्च शुचिरग्निश्च ते त्रयः॥" ॥ १३ ॥

(ठ)। देवीति। देवा इज्यन्ते अस्मिन्निति देवयजनं यज्ञस्थानं तस्मात् सम्भवतीति पचाद्यच्। "लाङ्गलोल्लिख्यमानाया यज्ञभूमेः सुनिर्गता" इति महावीरचरितेऽपि। प्रसीद आत्मदोषश्रवणात् कलुषितचित्ता न भवेत्यर्थः। एषः अग्निपरीक्षाविषयकः प्रवादः लोकापवादः जीवितावधिः यावज्जीवं स्थास्यतीत्यर्थः। निष्पापस्य संशयितपापक्षयाय प्रायश्चित्ताचरणवत् निष्कलङ्काया अपि ते लोकप्रत्ययार्थं अग्निपरीक्षाकरणात् विषादो न करणीय इति भावः।

एवमपवादिनो जनाः कथं न दण्ड्यन्त इत्याह कष्टमिति। कुलमेव धनं अनपवादनीयतया रक्षणीयं येषां तैः निष्कलङ्ककुलोत्पन्नैः जनैरित्यर्थः जनः साधारणलोकः अनुरञ्जनीयः अपवादं कुर्व्वन्नपि तत्सहनेन तच्छन्दानुवर्त्तनेन च सन्तोषणीयः इत्येव कष्टं दण्डनीयानामदण्डनाद्दुःखमित्यर्थः। अन्यथा खलः असम्भवमपि दोषमारोपयति. तथात्वे च कुलस्य निष्कलङ्कता न स्यादिति भावः।

नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा
मूर्द्धि स्थिति न चरणैरवताड़नानि (१) ॥ १४ ॥

सीता। भोदु, अज्जउत्त! भोदु, एहि पेक्खह्म दाव दे चरिदं। (ड) इत्युत्थाय परिक्रामति।

लक्ष्म। इदं तावदालेख्यम्। (ढ)

सीता। निर्वर्ण्य। के एदे उवरि निरन्तरट्ठिदा उवत्थुवन्ति विअ अज्जउत्तं? (ण)

---

(ड)। भवतु, आर्य्यपुत्र! भवतु; एहि प्रेक्षामहे तावत्ते चरितं।

(ढ)। के एते उपरि निरन्तरस्थिता उपस्तुवन्तीवार्य्यपुत्रं?।

---

नः अस्माकं आवयोरित्यर्थः सम्बन्धे तत् प्रसिद्धं यत् अशुभं अमङ्गलं एकाकिनी रावणगृहे स्थिता सीता कथमग्निपरीक्षामन्तरेण रामेण ग्राह्या स्यादिति असुखकरं वाक्यमित्यर्थः उक्तं लङ्काप्रदेशीयलोकैरितिशेषः एतद्वाक्यस्य सीतारामोभयसंवन्धित्वात् न इत्युक्तं सङ्गच्छते। तत् असुखकरं वाक्यं ते तव सम्बन्धे नहि क्षमं योग्यं स्वभावतएव शुद्धत्वादित्यर्थः। तथापि लोकानां विश्वासार्थमेव मया तवाग्निपरीक्षा कृता, ननु ममापि तव चरित्रविषये संशयोऽभूदिति भावः। तथाहि सुरभिणः कुसुमस्य सुगन्धपुष्पस्य नैसर्गिकी स्वाभाविकी मूर्द्धि स्थितिः सिद्धा लोकेषु प्रचलिता, किन्तु चरणैरवताड़नानि पादैरवमर्द्दनानि न, सिद्धानीत्यर्थः।

अत्रापि सुगन्धिकुसुमस्य मूर्द्धि स्थितिरिव तव निर्दोषत्वप्रशंसैव प्रसिद्धा, ननु तस्य पादावमर्द्दनानीव तव चरित्रे दोषारोप इति सादृश्यप्रतीतेः दृष्टान्तालङ्कारः।

वसन्ततिलकावृत्तं ॥ १४ ॥

(ड) सीतेति। भवतु स प्रवादइत्यर्थः अमूलकोऽयं प्रवादः अवज्ञेय इति भावः। भवत्विति दैन्यार्थे द्विर्वचनं।

(ढ) लक्ष्मेति। तावत् वाक्यालङ्कारे। आलेख्यं चित्रं।

लक्ष्म। देवि! एतानि सरहस्यानि जृम्भकास्त्राणि यानि भगवतः कृशाश्वात् कौशिकमृषिमुपसंक्रान्तानि, तेन च ताड़कावधे प्रसादीकृतान्यार्य्यस्य। (त)

रामः। वन्दस्व देवि! दिव्यास्त्राणि। (थ)

ब्रह्मादयो ब्रह्महिताय तप्त्वा
परःसहस्राः शरदस्तपांसि।

---

(ण) सीतेति। निर्वर्ण्य दृष्ट्वा "निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षण" मित्यमरः। उपरि ऊर्द्धदेशे निरन्तरस्थिताः अनवकाशस्थिताः परस्परसंलग्नभावेन स्थिता इत्यर्थः उपस्तुवन्तीव उपासत इव।

(त) लक्ष्मेति। रहस्यानि गोपनीयानि मन्त्रा इत्यर्थः तैः सह विद्यमानानि सरहस्यानि मन्त्रसहितानि जृम्भकास्त्राणि सम्मोहनास्त्राणीत्यर्थः। यानि अस्त्राणि कृशाश्वात् विश्वामित्रप्रपितामहात् कौशिकमृषिं विश्वामित्रमुनिं उपसंक्रान्तानि आगतानि विश्वामित्रेण प्राप्तानीत्यर्थः, तेन च विश्वामित्रेण ताड़कावधे कृते सतीत्यर्थः आर्य्यस्य रामस्य प्रसादीकृतानि प्रसीदति मन एभिरिति प्रसादानि अनुग्रहदानानि अप्रसादानि प्रसादानि कृतानि प्रसादीकृतानि अनुग्रहेण दत्तानीत्यर्थः। आर्य्यस्येति सम्बन्धविवक्षया षष्ठी।

(थ) राम इति। दिवि स्वर्गे भवानीति दिव्यानि च तानि अस्त्राणि चेति दिव्यास्त्राणि। वन्दस्व प्रणम।

दिव्यत्वं वन्दनहेतुञ्चाह ब्रह्मादयो इति। ब्रह्मादयः पुराणाः प्राचीना गुरवः उपदेष्टारः ब्रह्मणो वेदस्य "वेदस्तत्त्वं तपोब्रह्म ब्रह्मा विप्रः प्रजापति"रित्यमरः हिताय रक्षणाय दानवादयो दस्यवः वेदं विनाशयितुं यतन्ते स्म तेषां निवारणाय इत्यर्थः। सहस्रात्परा इति परः सहस्राः सहस्राधिका इत्यर्थः शरदो वत्सरान् "स्याद्दतौ वत्सरे शर"दित्यमरः तपांसि तप्त्वा दुष्करतपस्याः कृत्वेत्यर्थः एतानि अस्त्राणि अस्त्ररूपेण परिणतानि स्वान्येव स्वकीयान्येव तपोमयानि तेजांसि अपश्यन्। उपजातिवृत्तं।

एतान्यपश्यन् गुरवः पुराणाः

स्वान्येव तेजांसि तपोमयानि ॥ १५ ॥

सीता। णमो णमो एदाणं। (द)

रामः। सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्ति। (ध)

सीता। अणुग्गहीदह्मि। (न)

लक्ष्म। एष मिथिलावृत्तान्तः। (प)

(द)। नमोनम एतेषां।

(न)। अनुगृहीतास्मि।

परःसहस्रा इति "अपस्करादयश्चे"ति सुटा सह निपातः। शरद इति "अभिविधौ "कालाध्वमाना" दिति द्वितीया ॥ १५ ॥

(द) सीतेति। एतेषामिति "चतुर्थ्यां षष्ठी"ति पिङ्गलसूत्रात् चतुर्थ्यर्थे षष्ठी।

(ध) राम इति। इदानीं मत्प्राप्त्यनन्तरकाले सर्वथा सर्वेण प्रकारेण निक्षेपेण उपसंहारेण च त्वत्प्रसूतिं तव तनयं उपस्थास्यन्ति उपगमिष्यन्ति त्वत्सन्तानायत्तानि भविष्यन्तीत्यर्थः।

(न) सीतेति। अनुगृहीतास्मि मम तनयेनापि लभ्यमानत्वादिति भावः।

(प) लक्ष्मेति। एष इत्यङ्गुल्यानिर्देशः। मिथिलावृत्तान्तः मिथिलानगरे रामस्य घटनावलीत्यर्थः।

सीता। अह्महे! दलन्नव-णीलुप्पल-सामल-सिणिद्ध-मसिण-सोहमाण-मंसल देहसोहग्गेण विह्मअ-त्थिमिदताद दीसमाण-सुन्दरसिरी अणादर खण्डिद सङ्करसरासणो सिहण्डमुद्धमुह मण्डलो अज्जउत्तो आलिहिदो। (फ)

लक्ष्म। आर्य्ये! पश्य

सम्बन्धिनो वशिष्ठादीनेष तात स्तवार्च्चति।
गौतमश्च शतानन्दो जनकानां पुरोहितः॥ १६॥

---

(फ)। अहो! दलन्नवनीलोत्पलश्यामल-स्निग्ध-मसृण-शोभमान-मांसल-देह-सौभाग्येन विस्मयस्तिमिततातदृश्यमान-सुन्दरश्रीः अनादरखण्डितशङ्करशरासनः शिखण्ड-मुग्ध मुखमण्डल आर्य्यपुत्र आलिखितः।

---

(फ) सीतेति। अह्महे इति शौरसेन्यादिभाषायां विस्मयसूचकमव्ययं, संस्कृते तु तादृशशब्दाभावात् 'अहो' शब्देनानुवादः कृतः। दलत् विकसत् यत् नवं नीलोत्पलं ईषत्प्रस्फुटितेन्दीवरमित्यर्थः तद्वत् श्यामलं स्निग्धं अरूचं मसृणं चिक्कणं (चकमकी इति भाषा) अतएव शोभमानं मांसलं वलशालि यत् देहं तस्य सौभाग्येन सौन्दर्य्येण विस्मयेन आश्चर्य्येण स्तिमितः निश्चलः तेन तातेन जनकेन दृश्यमाना सुन्दरी श्रीः शोभा यस्य सः। तथा अनादरेण अयत्नेन खण्डितं भग्नं शङ्करशरासनं हरधनुर्येन सः। तथा शिखण्डेन काकपक्षेण मुग्धं सुन्दरं मुखमण्डलं यस्य सः। आर्य्यपुत्रो राम आलिखितः चित्रितः। चित्रमिदं रामस्य अविकलमिति महदाश्चर्य्यमिति भावः।

सम्बन्धिन इति। एष तव तातो जनकः, जनकानां जनकवंश्यानां पुरोहितः गौतमः अहल्यायां जातो-गौतमपुत्रः शतानन्दस्तदाख्योमुनिश्च वशिष्ठ आदिर्येषा मित्य-तद्गुणसम्विज्ञानोवहुव्रीहिः तेन वशिष्ठं तदन्यान् सम्बन्धिनो विवाहजनितवैवाहिकत्वादि सम्बन्धवतो दशरथादीन् अर्च्चति प्रत्युद्गमनादिना सम्मानयति।

अत्र एकस्यामर्च्चतिक्रियायां जनकशतानन्दयोः कर्त्तृत्वेनान्वयात् तुल्ययोगितालङ्कारः। अर्च्च धातुरयं भौवादिकः॥ १६॥

राम:। द्रष्टव्यमेतत्। (व)

जनकानां रघूनाञ्च सम्बन्धः कस्य न प्रियः।
यत्र दाता ग्रहीता च स्वयं कुशिकनन्दनः॥ १७॥

सीता। एदे क्खु तक्कालकिदगोदाणमङ्गला चत्तारो भादरो विआहदीक्खिदा तुम्हे। अम्महे! जानामि, तस्सिं ज्जेव पदेसे तस्सिं ज्जेव काले वत्तामि। (भ)

---

(भ) एते खलु तत्कालकृतगोदानमङ्गलाश्चत्वारोभ्रातरो विवाहदीचिता यूयं। अहो! जानामि, तस्मिन्नेव प्रदेशे तस्मिन्नेव काले वर्त्ते।

---

(व) राम इति। द्रष्टव्यमेतत् विवाहसम्बन्धीयचित्रमित्यर्थः विवाहघटनाया विचित्रत्वात् गौरवावहत्वाच्च तद्दर्शनमवश्यमुचितमिति भावः।

कथमित्याह। जनकानां जनकवंश्यानां रघूणां रघुवंश्यानाञ्च "रघुकुलसम्बन्धात् राघवोऽपि रघुरुच्यत" इति वैयाकरणोक्तिरूभयत्रापि प्रमाणं। सम्बन्धोविवाहसम्बन्धः कस्य जनस्य न प्रियः सन्तोषकरः अपितु सर्वस्यैवेत्यर्थः। यत्र सम्बन्धे स्वयं कुशिकनन्दनो विश्वामित्रः दाता ग्रहीता च। उभयोरपि जनकरघुवंश्ययोरतीवोच्चतया परस्परं विवाहसम्बन्धस्य महायोग्यत्वात् अतएव विषयनिस्पृहस्यापि विश्वामित्रस्य घटकत्वात् द्रष्टव्यमेव तच्चित्रमिति भावः।

अत्रार्थापत्तिरलङ्कारः।

अत्र पूर्वं दाता सद्युक्तिदानादिना कन्यादानप्रयोजकः परञ्च ग्रहीता तादृशेनैव सद्युक्तिदानादिना ग्रहणप्रयोजक इति भिन्नकालत्वात् एकस्मिन् विश्वामित्रे दातृत्वं ग्रहीतृत्वञ्चाविरुद्धमिति भाव्यं॥ १७॥

(भ) सीतेति तस्मिन् काले हरधनुर्भङ्गानन्तरसमये कृतं ऋत्विग्भिर्विहितं गोदानमेव केशान्तसंस्काराख्यकेशच्छेदनमेव मङ्गलं येषां ते तथोक्ताः। विवाहदीक्षिता विवाहे कर्म्मणि व्रताः। जानामि अनुभवामि। तस्मिन्नेव प्रदेशे मिथिलाराजधान्यां तस्मिन्नेव काले हरधनुर्भङ्गानन्तरसमये वर्त्ते तिष्ठामि इति जानामीत्यर्थः अविकलचित्रदर्शनादित्यर्थः।

राम: एवम्। (म)

समय: स वर्त्तत इवैष यत्र मां
समनन्दयत् सुमुखि! गौतमार्पित:।
अयमागृहीतकमनीयकङ्कण-
स्तव मूर्त्तिमानिव महोत्सव: कर:॥ १८॥

लक्ष्म। इयमार्य्या, इयमप्यार्य्या माण्डवी, इयमपि वधू: श्रुतकीर्त्ति:। (य)

गवां लोम्नां केशानामित्यर्थ: दानं छेदनमिति गोदानं तथाच गौरित्युपक्रम्य "स्वर्ग वज्राम्बुरश्मिदृग्वाणलोमस्वि"तिकेशव:। दानमिति "दो अवखण्डने" इत्यस्य युटा रूपं।

गोदानन्तु संस्कारविशेष:। तथाच याज्ञवल्का :—

"केशान्तश्चैव षोड़शे"।

मिताक्षरा च "केशान्त:पुनर्गोदानाख्यं कर्म्मेति"।

(म) राम इति। एवं, त्वया यदुक्तं तत्सत्यमित्यर्थ:।

स्वकीयानुभवमप्याह समय इति। स समयो वर्त्तत इव अतीतोऽपि अविकलचित्रदर्शनाद्वर्त्तमान इव अनुभूयत इत्यर्थ:। हे सुमुखि! यत्र विवाहसमये गौतमार्पित: शतानन्देन मम करोपरि स्थापित: अयं आगृहीतं परिहितं कमनीयं मनोहरं कङ्कणं अलङ्कारविशेषो येन स तथोक्त: तव कर: पाणि: मूर्त्तिमान् महोत्सव इव मां समनन्दयत् सन्तोषितवान्।

अत्र प्रथमा भावाभिमानिनी क्रियोत्प्रेक्षा, द्वितीयातु भावाभिमानिनी गुणोत्प्रेक्षा; उत्सवस्य आनन्दविशेषत्वेन गुणत्वात्।

मञ्जुभाषिनी वृत्तं "सजसा जगौ च यदि मञ्जुभाषिणी"ति लक्षणात्।

विवाहकाले वरहस्तोपरि कन्याहस्तस्थापनमिति चिरन्तनी रीति:। तथाच भवदेव: "ततो जामाताचान्तोमङ्गलौषधिलिप्तेन दक्षिणहस्तेन तादृशमेव कन्याया दक्षिणहस्तं स्वहस्तोपरि निदध्यात्।" ॥ १८॥

(य) लक्ष्मेति। इयमिति सर्वत्राङ्गुल्या निर्द्देश:। आर्य्या भवती सीतेत्यर्थ:।

सीता। वच्छ! इअंवि अवरा का? (र)

लक्ष्म। सलज्जस्मितं स्वगतम्। अये ऊर्म्मिलां पृच्छत्यार्य्या भवत्वन्यतः सञ्चारयामि। प्रकाशम्। आर्य्ये! दृश्यतां द्रष्टव्यमेतत्। अयञ्च भगवान् भार्गवः। (ल)

सीता। ससम्भ्रमं। कम्पिदह्मि। (व) (१)

रामः। ऋषे! नमस्ते।

---

(र)। वत्स! इयमप्यपरा का?।

(व) कम्पितास्मि।

---

माण्डवीति भरतभार्य्याया नाम। अनयोस्तु ज्येष्ठभ्रातृभार्य्यात्वेन मातृतुल्यत्वात् आर्य्या-पदेन निर्द्देशः। तथा च वृहस्पतिः।

"मातुः स्वसा मातुलानी पितृव्यस्त्री पितृष्वसा।
श्वश्रूः पूर्व्वजपत्नी च मातृतुल्याः प्रकीर्त्तिताः॥"

श्रुतकीर्त्तिरिति शत्रुघ्नभार्य्याया नाम। कनिष्ठभ्रातुः पुत्रतुल्यत्वेन तद्भार्य्यायाः पुत्रवधू-तुल्यत्वमिति वधूरित्युक्तं। यथा मनुः

"पितेव पालयेत् पुत्रान् ज्येष्ठो भ्रातॄन् यवीयसः।
पुत्रवच्चानुवर्त्तेरन् ज्येष्ठे भ्रातरि धर्म्मतः।"

(र) सीतेति। लक्ष्मणोऽङ्गुलीनिर्द्देशेन सर्वं परिचाययन् लज्जया स्वभार्य्यामूर्म्मिलां मुक्त्वा माण्डवीतः श्रुतकीर्त्तिं परिचाययति, सीतासदृशी चतुरा तु तदवलोक्य कौतुकाय तादृशमवसरं प्रतीक्षितुं नार्हतीति पृच्छति "वत्स! इयमप्यपराके"ति ; अन्यथा चिर-परिचितायाः प्रश्नो नोपपद्यत इति वोध्यं।

(ल) लक्ष्मेति। स्वगतं अन्यैरश्राव्यरूपमस्फुटं वाक्यं वदतीति शेषः।

भवतु ऊर्म्मिलां प्रति प्रश्न इति शेषः, तथापि तस्योत्तरं न देयमिति भावः। अन्यतः अन्यस्मिन् दर्शनीये सञ्चारयामि सीतारामयोर्दृष्टिमित्यर्थः। प्रकाशं सर्वश्राव्यरूपं सुस्पष्टं

---

(१) भीदह्मि इति पाठान्तरं।

लक्ष्म। आर्य्ये! पश्य, अयमार्य्येण। इत्यर्द्धोक्ते (श)

रामः। साक्षेपं। वत्स! बहुतरं द्रष्टव्यमन्यतो दर्शय। (ष)

सीता। सस्नेहबहुमानं निर्वर्ण्य। सुट्ठु सोहसि अज्जउत्त! एदिणा विणअमाहप्पेण। (स)

लक्ष्म। एते वयमयोध्यां प्राप्ताः।

रामः। सास्रं। स्मरामि हन्त स्मरामि। (ह)

जीवत्सु तातपादेषु नवे दारपरिग्रहे।
मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः ॥१८॥

(स) सुष्ठु शोभसे आर्य्यपुत्र! एतेन विनयमाहात्म्येन।

वदतीति शेषः। एतच्चित्रं द्रष्टव्यं अवश्यमेव दृश्यं पवित्रत्वात् महावीरत्वाच्च। भार्गवः परशुरामः। स्वगतप्रकाशयोर्लक्षणं यथा साहित्यदर्पणे—

"अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतं।
सर्वश्राव्यं प्रकाशं स्यात् ... ... ॥"

(व) सीतेति। सम्भ्रमो भयादिजनितत्वरा तत्-सहितं वदतीतिक्रियाविशेषणं "समौ सम्वेगसम्भ्रमा"वित्यमरः।

(श) लक्ष्मेति। आर्य्येण रामेण अयं भार्गवः पराजित इति वाक्यशेषः, सुतरां 'अयमार्य्येणे'त्यंशो वाक्यार्द्धमेव स्यादत उक्तं इत्यर्द्धोक्त इति।

(ष) राम इति आक्षेपेण लक्ष्मणवाक्यनिवारणेन सहेति साक्षेपं लक्ष्मणवाक्यं वारयित्वे त्यर्थः। मान्यानामवमानना विनयविरुद्धा, किन्तु तदानीं अनन्योपायतया महामान्यस्यापि भार्गवस्य पराजयेन सा घटिता किन्त्विदानीं तदर्थं श्लाघाकरणमेकान्तमनुचितमित्यभिप्रायेण अन्यतो दर्शयेत्युक्तं।

(स) सीतेति। बहुमान आदरातिशयः। निर्वर्ण्य दृष्ट्वा राममिति शेषः विनयमाहात्म्येन विनयगौरवेण। सुष्ठ्विति प्रशंसार्थमव्ययं।

(ह) राम इति। स्मरामि तत्कालीनवृत्तान्तमिति शेषः।

किं स्मरामीत्याह जीवत्स्विति। तातपादेषु पितरि जीवत्सु सत्सु नवे नूतने

इयमपि तदा जानकी (च)
प्रतनुविरलैः प्रान्तोन्मीलन्मनोहरकुन्तलैः
दशनमुकुलैर्मुग्धालोकं शिशुर्दधती मुखम् ।
ललितललितैर्ज्योत्स्नाप्रायैरकृत्रिमविभ्रमै-
रकृत मधुरैरम्बानां मे कुतूहलमङ्गकैः ॥ २० ॥

---

दारपरिग्रहे विवाहे कृते सतीत्यर्थः मातृभिः कौशल्याकैकेयीसुमित्राभिः चिन्त्यमानानां रामोऽत्र शयिष्यते, भरतोऽत्र भोक्ष्यते, लक्ष्मणोऽत्र वेशरचनां करिष्यतीत्यादिरूपेण व्यवस्थाप्यमानसकलविषयकानामित्यर्थः नोऽस्माकं ते हि त एव दिवसाः गताः जीवनानामुत्कृष्टदिनानि अतीतानीत्यर्थः। तेषां दिवसानां तुलनया वर्त्तमानदिनानि नितान्ततुच्छानीति भावः।

अत्र ते दिवसा एव उत्कृष्टा आसन्, नतु वर्त्तमाना इति वर्त्तमानदिननिरासार्थी परिसंख्याऽलङ्कारः।

तथा दिवसा इत्यस्य उत्कृष्टदिवसपरत्वादर्थान्तरसंक्रमितवाच्यो ध्वनिः।
भक्त्यतिशयसूचनाय तातपादैरित्यत्र पादशब्दस्य पितृत्वमात्रे लक्षणा गुरुत्वाच्च बहुवचनं ॥ १९ ॥

( च ) इयमिति। जानकीतिप्रथमान्तं पदं श्लोकस्थया अकृतेति क्रिययाऽन्वेति।

प्रतन्विति। इयं शिशुर्बालिका जानकी, प्रतनवः सूक्ष्माः विरलाः अनिविड़ाश्च तैः प्रान्ते अग्रदेशावच्छेदे उन्मीलन्तः अगाढ़संश्लिष्टा मनोहरा ये कुन्तलाः केशास्तैः, तथा दशना दन्ता मुकुलानि कुड्मलानीव तैः मुग्धः मनोहर आलोको दर्शनं यस्य तत् मुदृश्यमित्यर्थः मुखं वदनं दधती वहन्ती सती। एतत् तृतीयान्तविशेष्यद्वयं मुग्धत्वं प्रति हेतुः। ललितललितैः सुन्दरप्रकारैः ज्योत्स्नाः ज्योत्स्नासदृशानि प्रायेण ज्योत्स्ना इति ज्योत्स्नाप्रायाः तैः बाहुल्येन कौमुदीसदृशैरित्यर्थः अकृत्रिमः स्वाभाविकः विभ्रमो विलासायेषां तैः अत एव मधुरैः सर्वेषां प्रियैः, क्षुद्राण्यङ्गानीति अङ्गकानि हस्तपदाद्यवयवाः तैः मे मम अम्बानां मातॄनां कुतूहलं कौतुकं अकृत विहितवती।

अत्र दशनमुकुलैः, ज्योत्स्नाप्रायैरिति लुप्तोपमाद्वयं। तथा कुतूहलकरणरूपकार्यं प्रति बहुकारणोक्तेः समुच्चयश्चेति अङ्गाङ्गिभावेन सङ्करः।

लक्ष्म। एषा मन्थरा।

रामः। अनुत्तरमनन्तो दर्शयन्। देवि! वैदेहि।

इङ्गुदीपादपः सोऽयं शृङ्गवेरपुरे पुरा।
निषादपतिना यत्र स्निग्धेनासीत् समागमः॥ २१॥

लक्ष्म। विहस्य स्वगतम्। अये! मध्यमाम्बावृत्तान्तोऽन्तरित आर्य्येण। (क)

सीता। अह्मो! एसो जटासञ्जमणवुत्तन्तो। (ख)

लक्ष्म। पुत्रसंक्रान्तलक्ष्मीकैर्यद्वृद्धेक्ष्वाकुभिर्धृतं।
धृतं बाल्ये तदार्य्येण पुण्यमारण्यकं व्रतम्॥ २२॥

---

(ख)। अहो! एष जटासंयमनवृत्तान्तः।

---

ललितललितैरिति "प्रकारे गुणवचनस्य"ति द्विर्वचनं। ज्योत्स्नाप्रायैरिति मयूरव्यंसकादित्वात् समासः।

सीतायाः सर्वदैवान्तःपुरस्थायित्वेन अन्येषां तत्सौन्दर्य्यदर्शनासम्भवात् केवलं मातृणामित्युक्तं।

हरिणी वृत्तं "न स म र स लागः षड्वेदैर्हयै र्हरिणी मतेति लक्षणात्॥२०॥

इङ्गुदीति। अयं दृश्यमानः शृङ्गवेरपुरे तदाख्ये गुहचाण्डालपुरे इङ्गुदीपादपः इङ्गुदीफलवृक्षः चिचित इत्यर्थः यत्र इङ्गुदीमूले पुरा वनगमनकाले स्निग्धेन वत्सलेन निषादपतिना व्याधनायकेन सह समागमः सम्मेलनमासीत् अस्माकमिति शेषः॥२१॥

लक्ष्मेति। अये इत्यात्मसम्बोधनं। आर्य्येण रामेण मध्यमाम्बायाः कैकेय्याः वृत्तान्तः मन्थरायुक्तिग्रहण मानकरण दशरथमतपरिवर्त्तन वनप्रस्थापनादिव्यापारचित्रमित्यर्थः अन्तरितः गोपित उल्लङ्घ्य अन्यत्र गत इत्यर्थः। गुरुजनकृतस्यान्याय्याचरणस्यालोचना नितान्तमसङ्गतेति रामेणायमंशः परित्यक्त इति भावः।

(ख) सीतेति। जटासंयमनवृत्तान्तः जटाबन्धनघटनाचित्रं।

लक्ष्मेति। पुत्रेषु संक्रान्ता गता लक्ष्मी राजलक्ष्मी येषां तैः पुत्रेषु न्यस्तराज्यभारैरित्यर्थः वृद्धाः इक्ष्वाकवः प्राचीना इक्ष्वाकुवंशीयास्तैः यत् व्रतं धृतं आचरितं, बाल्ये

सीता। एसा पसखपुस्ससलिलाभअवदो भाईरही । (ग)

रामः। देवि ! रघूकुलदेवते ! नमस्ते । (घ)

तुरगविचयव्यग्रानुर्व्वीभिदः सगराध्वरे
कपिलमहसामर्षात् प्लुष्टान् पुरा(१) प्रपितामहान् ।
अगणिततनूपातं (२) तप्ता तपांसि भगीरथों-
भगवति ! तव स्पृष्टानद्भिश्चिरादुददीधरत् ॥ २३ ॥

---

(ग)। एषा प्रसन्नपुण्यसलिला भगवती भागीरथी।

---

नव्ये वयसि आर्य्येण रामेण तत् पुण्यं पुण्यजनकं आरण्यकं वनवासरूपं व्रतं नियमः धृतं अवलम्बितम्। वानप्रस्थावलम्बनं प्रति वार्द्धक्यमेव प्रयोजकं। तथाच स्मृतिः—

"गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः।
अपत्यपुत्रांस्तत्पुत्रांस्तदारण्यं समाविशेत्।"

मनुश्च "वनं पञ्चाशतोव्रजेत्।"

किन्त्वत्र रामेण बाल्ये तदवलम्बितमिति महादुःखविषयोऽयमिति भावः।

अत्र वार्द्धक्ये कर्त्तव्यस्य वानप्रस्थावलम्बनस्य बाल्ये करणात् असङ्गतिनामालङ्कारः। तथाच चन्द्रालोके।

"विरुद्धभिन्नदेशत्वं कार्य्यहेत्वोरसङ्गतिः।
अन्यत्रकरणीयस्य ततोऽन्यत्र कृतिश्च सा॥

वार्द्धक्यरूपकारणस्य वृद्धेषु सत्त्वात् तत्कार्य्यरूपवानप्रस्थावलम्बनस्य तु बालके रामे सत्त्वात् साहित्यदर्पणमतेऽपि असङ्गतिरेव। तथाच

"कार्य्यकारणयोर्भिन्नदेशतायामसङ्गतिः।" ॥ २२ ॥

(ग) सीतेति। प्रसन्नं निर्म्मलं, पुण्यं पवित्रञ्च सलिलं यस्याः सा।

(घ) राम इति। रघुवंश्यान् प्रति परमानुग्रहकारित्वेन तेषामुपास्यत्वात् गङ्गाया रघुकुलदेवतात्वं बोध्यं।

नमस्कारहेतुं गङ्गाया माहात्म्यं रघुकुलं प्रत्यनुग्रहञ्चाहतुरगेति। भगीरथः सूर्य्य-

(१) पितुरिति पाठान्तरं। (२) अगणिततनूतापं, अगणितसमुत्तापं इति पाठभेदौ।

सात्वमम्ब! स्नुषायामरुन्धतीव सीतायां शिवानुध्यानपरा भव। (ङ)

वंशीयः कश्चन राजा सगराध्वरे सगरराजस्य शताश्वमेधयज्ञानां पूरणीभूते शेषाश्वमेधे आरब्ध इति शेषः तुरगस्य तद्यज्ञीयाश्वस्य इन्द्रेणापहृतस्येत्यर्थः विचये अन्वेषणे व्ययान् आसक्तान् उर्वीभिदः भूतलविदारणकारिणः अमर्षात् क्रोधात् कपिलस्य तदाख्य मुनेः महसा तेजसा प्लुष्टान् दग्धान् प्रपितामहान् निजपितामहपितृवैमात्रेयान् तपांसि अगणितः अविचारितः तनूपातः शरीरनाशो यस्मिन् कर्म्मणि तत् यथा तथा तप्त्वा देह-नाशमभ्युपगम्याङ्गीकृत्य तपस्यां कृत्वेत्यर्थः हे भगवति! माहात्म्यशालिनि गङ्गे! तव अम्भोभिर्जलैः स्पृष्टान् सतः चिरात् पुरा पूर्वं उददीधरत् उद्धारितवान् मोक्षं प्रापितवानित्यर्थः। अतस्ते नम इति भावः।

अत्र तृतीयचरणे तपयोरसकृत्साम्यात् वृत्त्यनुप्रासोऽलङ्कारः।

"पुरा प्रपितामहानि"त्यत्र क्वचित् "पितुः प्रपितामहा"निति पाठो दृश्यते, सतु न समीचीनः। तथाच रामायणे—

"सगरादसमञ्जस्तु असमञ्जादथांशुमान्।
दिलीपोऽंशुमतः पुत्रो दिलीपस्य भगीरथः।"

तेन असमञ्जस्य वैमात्रेयाः सगरपुत्रा भगीरथस्यैव प्रपितामहा भवन्ति नतु तत्-पितुरिति।

कदाचित् सगरराजेन शतमश्वमेधान् सङ्कल्प्य शेषाश्वमेधे प्रक्रान्ते "शताश्वमेधयाजी इन्द्रत्वं लभते" इति श्रुत्वा इन्द्रः स्वपदभ्रंशभयेन तमश्वमपहृत्य पाताले ध्यानस्थितस्य कपिलमुनेः समीपे कस्मिंश्चित् वृक्षे ववन्ध, अथ असमञ्जभिन्नाः सगरसन्तानास्तमश्वं स्वर्गे मर्त्येच अन्विष्यन्तोऽप्राप्य भुवं विदार्य्य गत्वा पाताले तथाविधं वद्धमश्व मालोक्य "अयमेव अश्वापहारक" इति कपिलमेव हन्तुमुद्यताः तेन च तद्विज्ञाय स्वतेजसा दग्धा इति पौराणिकी वार्त्ता।

तनूशब्दो दीर्घान्तोऽप्यस्ति, तथाचामरः "स्त्रियां मूर्त्तिस्तनुस्तनूः॥ २३॥

(ङ) सेति। अम्ब! मातः स्नुषायां पुत्रवध्वां। शिवानुध्यानपरा मङ्गलचिन्तापरायणा।

लक्ष्म। एष भरद्वाजावेदितश्चित्रकूटयायिनि वर्त्मनि वनस्पतिः कालिन्दीतटे वटः श्यामो नाम। (च)

रामः। सस्पृहमवलोकयति।

रामः। सुमरदि एदं पदेसं अज्जउत्तो? (छ)

रामः। अयि! कथं विस्मर्यते!

अलस लुलित (१) मुग्धान्यध्वसञ्जातखेदात्
अशिथिल परिरम्भै र्दत्तसंवाहनानि!
परिमृदितमृणालीदुर्वलान्यङ्गकानि
त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता ॥ २४ ॥

(छ)। स्मरत्येतं प्रदेशमार्य्यपुत्रः?।

(च) लक्ष्मेति। भरद्वाजेन मुनिना आवेदितः परिचायितः चित्रकूटयायिनि चित्रकूटपर्वतगामिनि वर्त्मनि पथि। कालिन्दी यमुना।

घटनाविवरणद्वारा विस्मृत्यभावं व्यनक्ति। अलसेति। यत्र यस्मिन् प्रदेशे त्वं अध्वनि पथि सञ्जातः गमनेनोत्पन्नः यः खेदः परिश्रमस्तस्मात् अलसानि; जड़ानि लुलितानि शिथिलीभूतानि मुग्धानि सुन्दराणि; अशिथिलपरिरम्भैः गाढ़ालिङ्गनैः दत्तं संवाहनं मर्द्दनं येषु तानि; तथा परिमृदिताः मर्दिता या मृणाल्यः क्षुद्रमृणालानि तद्वत् दुर्व्वलानि कार्श्याचमानि अङ्गकानि अवयवान् मम उरसि वक्षसि कृत्वा स्थापयित्वा निद्रां अवाप्ता गता आसीरिति शेषः।

अत्र परिमृदितमृणालीदुर्व्वलानीति लुप्तोपमालङ्कारः।

अलसलुलितमुग्धानीति त्रिपदकर्म्मधारयः, आद्यपदद्वये कर्म्मधारयं कृत्वा कर्म्मधारयान्तरं वा। क्षुद्राणि मृणालानीति मृणाल्यः क्षुद्राद्यर्थे मृणालादिशब्दानां नदादित्वाङ्गीकारात् ईप्रत्ययः तथाचामरः "स्त्रीस्यात्काचिन्मृणाल्यादि विवक्षापचये यदि।"

मालिनीवृत्तं "ननमयययुतेयं मालिनी भोगिलोकै"रिति लक्षणात् ॥ २४ ॥

(१) ललित इति क्वापि पाठः।

लक्ष्म। एष विन्ध्याटवीमुखे विराधसंवादः। (ञ) (२)

सीता। अलं दाव एदिणा, पेक्खामि दाव अज्जउत्तहत्थधरिदतालवेण्टादवत्तं अत्तणो दक्खिणारणप्पवेसारम्भं। (झ)

राम:। एतानि तानि गिरिनिर्झरिणीतटेषु
वैखानसाश्रमतरूणि तपोवनानि।
येष्वातिथेयपरमाः शमिनो भजन्ते
नीवारमुष्टिपचना गृहिणो गृहाणि॥ २५॥

---

(झ)। अलं तावदेतेन, प्रेक्षे तावदार्य्यपुत्रहस्तधृततालवृन्तातपत्रमात्मनो दक्षिणारण्यप्रवेशारम्भं।

(ञ) लक्ष्मेति। विन्ध्याटवीमुखे विन्ध्यपर्वतस्यारण्यद्वारे। विराधसंवाद विराधराक्षसवृत्तान्तः।

(झ) सीतेति। एतेन विराधवृत्तान्तचित्रदर्शनेन। विशेषकौतुकावहत्वात् अग्रिममेव द्रष्टव्यमिति भावः। अग्रिमं ब्रवीति आर्य्यपुत्रेति। प्रेक्षे पश्यामि। आर्य्यपुत्रेण हस्तेन धृतं मम मस्तकोपरि धृत्वा नीतं तालवृन्तातपत्रंच्छत्रं यस्मिन् तं। दक्षिणारण्यप्रवेशारम्भं तस्य चित्रमित्यर्थः।

एतानीति। गिरिनिर्झरिणीनां पार्वत्यनदीनां तटेषु एतानि दृश्यमानानि तानि वैखानसानां बनवासिमुनिविशेषानां आश्रमतरवो येषु तानि तथोक्तानि तपोवनानि चित्रितानीति शेषः येषु तपोवनेषु आतिथेयपरमाः आतिथेयं अतिथिसत्कार एव परमं प्रधानकर्त्तव्यं येषां ते, नीवारमुष्टिं मुष्टिपरिमितमुनिधान्यतण्डुलं पचन्ति ये ते नीवारमुष्टिपचनाः शमिनः अन्तरिन्द्रियनिग्रहशालिनः गृहिणो गृहस्था गृहाणि भजन्ते आश्रयन्ति येषु तपोवनेषु गृहस्था मुनयः सन्तीति निष्कर्षः।

"वानप्रस्थो वैखानसोऽग्रह" इति त्रिकाण्डशेषः।

"शमस्तु अन्तरिन्द्रियनिग्रह" इति वेदान्तसारः।

---

(२) संवाधः संरोध इति पाठभेदौ।

लक्ष्म। अयमविरलानोकहनिवहनिरन्तरस्निग्धनीलपरिसरारण्यपरिणद्धगोदावरीमुखरकन्दरः सन्ततमभिष्यन्दमानमेघमेदुरितनीलिमा जनस्थानमध्यगोगिरिः प्रस्रवणो नाम। (ञ)

राम:। स्मरसि सुतनु! तस्मिन् पर्वते लक्ष्मणेन
प्रतिविहितसपर्य्यासुस्थयो (१) स्तान्यहानि।
स्मरसि सुरसनीरां (२) तत्र गोदावरीं वा
स्मरसि च तदुपान्तेष्वावयोर्वर्त्तनानि ॥ २६ ॥

---

"नीवारं मुनिधान्यंस्यादित्यमरः उड़ीधान इति वङ्गभाषा।

"पुत्रेषु दारान्निक्षिप्य वनंगच्छेत् सहैव वे"ति स्मृतिः—

सस्त्रीकवनवासिनः सन्तोगृहस्था इति बोध्यं।

वसन्ततिलकावृत्तं ॥ २५ ॥

(ञ) अयमिति। अयमित्यङ्गुल्या निर्द्दिष्टः। अविरला घना ये अनोकहाः वृक्षाः तेषां निवहेन समूहेन निरन्तरं अवकाशरहितं स्निग्धं मसृणं नीलं श्यामवर्णञ्च यत् परिसरारण्य शेषसीमास्थितं वनं तेन परिणद्धा उभयतीरयोः परिवेष्टिता या गोदावरी तदाख्या नदी तया तस्यास्तरङ्गाघातशब्दादित्यर्थः मुखरं शब्दायमानं कन्दरं गुहा यस्य स तथोक्तः सन्ततं अनवरतं अभिष्यन्दमानैः वर्षद्भि मेघैः मेदुरितः स्निग्धीकृतः नीलिमा श्यामलत्वं यस्य स तथोक्तः। जनस्थानस्य दण्डकारण्यप्रदेशविशेषस्य मध्यगः मध्यवर्त्ती प्रस्रवणो नाम गिरिः पर्वतः चिन्तित इत्यर्थः।

"अनोकहः कुठःसालः" "पर्य्यन्तभूः परिसर" इतिचामरः।

मेदुरित इति मेदुरः कृत इति इतन्तात् कर्म्मणि क्तः।

अभिनयप्रतिकूलमीदृशं दीर्घसमासयोजनमेव भवभूतिप्रबन्धेषु महान् दोष इति काव्यज्ञा आलङ्कारिकाश्च वदन्ति।

स्मरसीति। शोभना तनूर्यस्या इति सुतनूः तस्याः संबोधनं। तस्मिन् पर्वते

(१) सुस्थयोरिति पाठान्तरं। (२) सरसतीरामिति पाठभेदः।

अपि च

किमपि किमपि मन्दं मन्दमासत्तियोगा—
दविरलितकपोलं जल्पतो रक्रमेण।
अशिथिलपरिरम्भव्यापृतैकैकदोष्णो-
रविदितगतयामा रात्रिरेव व्यरंसीत्॥ ३७॥

---

प्रस्रवणे लक्ष्मणेन प्रतिविहितया कृतया सपर्य्यया पूजया खाद्यानयन भयनिवारणादिशुश्रूषयेत्यर्थः सुस्थयोः उत्पातशून्ययोस्तानि अहानि स्मरसि त्वमिति काकुः, वा किम्वा तत्र प्रदेशे सुरसनीरं सुस्वादुजलां गोदावरीं नदीं स्मरसि? तथा तदुपान्तेषु आवयोः तव मम च वर्त्तनानि अवस्थानानि च स्मरसि किमित्यर्थः।

अत्र स्मरसीतिरकस्यैव पदस्य वारंवारमुक्त्या अनवीकृतत्वदोषः स च तृतीयपादे "सुमुखीति चतुर्थपादे च "सुखकरेति पाठेन समाधेयः। मालिनीवृत्तं॥ २६॥

किमपीति। आसत्तियोगात् सन्निधानवशात् मन्दं मन्दं अल्पमल्पं किमपि किमपि कदाचिदेतत् कदाचिदन्यत् अधारावाहिकैकविषयमिति यावत् अक्रमेण पर्य्यायराहित्येन, कश्चित् जिज्ञासते, परश्चापरः उत्तरं ददातीत्येव क्रमः; तत्तु आवेगातिशयात् कदाचिदुभावेव जिज्ञासितवन्तौ कदाचिदुभावेव वा उत्तरं दत्तवन्तौ इत्येवं रूपेणेत्यर्थः, अविरलितौ परस्परमिलितौ कपोलौ गण्डौ यस्मिन् कर्म्मणीति अविरलितकपोलं यथा तथा जल्पतोरनावश्यकविषयं ब्रुवतोः, तथा अशिथिलपरिरम्भे गाढालिङ्गने व्यापृतौ आसक्तौ एकैकस्य परस्परस्य दोषौ बाहू ययोः तयोस्तयोस्तयोरावयोः सम्बन्धे रात्रिः अविदितं अज्ञातं यथास्यात् तथा गता यामाः प्रहरा यस्याः सा तथोक्तैव व्यरंसीत् विरता प्रभाता आसीदित्यर्थः—। सुखसागरमग्नानां हि दीर्घकालोऽपि भोगेन तृप्त्यभावात् अल्प इव प्रतिभातीति भावः।

अत्र यथावद्वस्तुवर्णनात् स्वभावोक्तिरलङ्कारः।

विरलः 'फाक्' इति यस्य भाषा, स कृत इति इतन्तात् कर्म्मणि क्तः ततो नञ् समासः। किमपि किमपीति वीप्सायां द्विर्वचनं। मालिनीवृत्तं॥ २७॥

लक्ष्म। एषा पञ्चवट्यां शूर्पणखा (ट)

सीत। हा अज्जउत्त ! एत्तिअं ज्जेव दंसणं। (ठ)

राम:। अयि विप्रयोगत्रस्ते ! चित्रमेतत्। (ड)

सीता। जहा तहा होदु, दुज्जणो असुहं उप्पादेइ। (ढ)

---

(ठ)। हा आर्य्यपुत्र ! एतावदेव दर्शनं।

(ढ)। यथा तथा भवतु, दुर्जनोऽसुखमुत्पादयति।

(ट) लक्ष्मेति। पञ्चानां वटानां समाहार इति पञ्चवटी। इदन्तु अर्थप्रदर्शनमात्रं, वास्तविकन्तु पञ्चाम्रादिवत् पञ्चविधवृक्षविशेषेषु पञ्चवटीशब्दोरूढ़ इति। यथा हेमाद्रिधृतं स्कन्दपुराणं

"अश्वत्थोविल्ववृक्षश्च वटधात्र्या वशोकक:।
वटीपञ्चकमितुरक्तं स्थापयेत् पञ्चदिक्षु च।
अश्वत्थं स्थापयेत् प्राचि विल्वमुत्तरभागत:।
वटं पश्चिमभागे तु धात्रीं दक्षिणतस्तथा।
अशोकं वह्निदिक्स्थाप्यं तपस्यार्थं सुरेश्वरि !।
मध्ये वेदीं चतुर्हस्तां सुन्दरीं सुमनोहराम्।"

(ठ) सीतेति। एतावत् ऐतत्कालपर्य्यन्तं, दर्शनं साक्षात्कार: तवेति शेष:। अविकलचित्रदर्शनात् समुत्पन्नतत्तद्भावेन चित्रमेतदिति विस्मृत्य यथार्थैवेयं घटनेति मन्यमाना सीता पुनरपि पूर्व्ववद्भविष्यतीति मत्वा एवमाहेति बोध्यं। पूर्वमपि शूर्पणखादर्शनानन्तरमेव सीता हृतेत्यनुसन्धेयं।

(ड) राम इति। अयीतिसानुनयसम्बोधनं। विप्रयोगत्रस्ते ! मम विच्छेदभीते ! एतत् दृश्यमानं, चित्रं आलेख्यं न तु वास्तविकघटनेयमिति भयं न करणीयमिति भाव:।

(ढ) सीतेति। यथा तथा चित्रं प्रकृतं वा। यथार्थमिव अविकलं दुर्जनचित्रमपि तद्भावस्मारकत्वात् असुखं जनयतीत्यर्थ:।

राम:। हन्त वर्त्तमान इव मे जनस्थानवृत्तान्त: प्रतिभाति। (ण)

लक्ष्म।

अथेदं रक्षोभि: कनकहरिणच्छद्मविधिना
तथा वृत्तं पापै,र्व्यथयति यथा क्षालितमपि।
जनस्थाने शून्ये विकलकरणै (१) रार्य्यचरितै-
रपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ॥ २८ ॥

(ण) रामइति। हन्तेति विषादसूचकमव्ययं। वर्त्तमान इव अतीतोऽपीति शेष:। प्रतिभाति ज्ञानविषयो भवतीत्यर्थ: अविकलचित्रदर्शनादिति भाव:।

अथेदमिति। अथेत्यपि विषादसूचकमव्ययं। पापै: पापाचारिभि: रक्षोभि: मारीचरावणादिभि: राक्षसै: कनकहरिणस्य सुवर्णमयमृगस्य यत् छद्म छलं तस्य विधिना तदादिकार्य्यकरणेनेत्यर्थ:। तथा तत्प्रकारमिदं वृत्तं भूतं घटनमित्यर्थ: यथा क्षालितमपि सवंशमारीचरावणादिबधेन सम्पूर्णं परिशोधितमपि व्यथयति स्मरणात् दु:खं ददाति तद्घटनमित्यर्थ:। शून्ये तदवस्थानुभवकारिजनरहिते जनस्थाने विकलकरणै: विकलानि स्वस्वकार्य्याक्षमाणि करणानि रामस्यैव हस्तपदादीन्द्रियाणि येषु तै:, आर्य्यस्य रामस्य चरितै: भूतलावलुण्ठनादिव्यापारै: ग्रावापि पाषाणोपि रोदिति क्रन्दतीव, तथा वज्रस्यापि हृदयं वक्ष: कर्त्तृ दलति विदीर्य्यत इव। गुरुगभीरशोकावेगेन राम: अवश आसीदिति निष्कर्ष:।

अत्र रोदिति दलतीत्यत्र इव शब्दाभावात् भावाभिमानिप्रतीयमानक्रियोत्प्रेक्षाइयं, तेन च रामस्य शोकावेगोतीवमहानिति ध्वन्यत इत्यलङ्कारेण वस्तुध्वनि:।

"अथ स्यान्मङ्गले प्रश्ने कार्य्यारम्भविषादयो"रित्यादिर्मेदिनी।

"करणं साधकतमं चेत्रगात्रेन्द्रियेष्वपि" "पाषाण: प्रस्तरग्रावोपलाश्मान: शिला दृशदिति चामर:।

(१) करणै:, करणै रिति पाठभेदौ।

सीता। साखं। अइ देव! रहुउलाणन्द! एव्वं वि मम कारणादो किलिन्तो (१) आसी। (त)

लक्ष्म। रामं निर्वर्ण्य साकूतं। आर्य्य! किमेतत्। (थ)

अयन्ते वाष्पौघस्त्रुटित इव मुक्तामणिसरो-
विसर्पन् धाराभिर्लुठति धरणीं जर्जरकणः।
निरुद्धोऽप्यावेगः स्फुरदधरनासापुटतया
परेषामुन्नेयो भवति विरसाध्मातहृदयः (२) ॥ २९ ॥

(त) अयि देव रघुकुलानन्द! एवमपि मम कारणात् क्लान्त आसीः।

रोदिति दलतीति "प्रयोगतश्चे"ति बर्त्तमाना। शिखरिणीवृत्तं "रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणी"ति लक्षणात् ॥ २८ ॥

रक्षोभिरिति करणे तृतीया। हृत्तमिति कर्त्तरि क्तः।

(त) सीतेति। कारणात् निमित्तात्। क्लान्तः क्लिष्ट आसीः त्वमिति शेषः। सुतरामहमधन्येति भावः।

(थ) लक्ष्मेति। निर्वर्ण्य दृष्ट्वा। साकूतं साभिप्रायं कथमिदानीमपि रामो रोदितीत्यभिप्रायेण सहेत्यर्थः।

अयमिति। त्रुटितश्छिन्नः मुक्तामणिसरः मुक्तारत्नमाल्यमिव अयं दृश्यमानः ते तव वाष्पौघः अश्रुप्रवाहः धाराभिः अविच्छिन्नपातैः बिसर्पन् बहिर्गच्छन् जर्जराः भूमौ पतनेन क्षुद्रक्षुद्रांशतया विभक्ताः कणा विन्दवो यस्य स तादृशः सन् धरणीं भूतलं लुठति आश्लिष्यति। विरसेन विरागेन अप्रियत्वेन दुःखेनेति यावत् आध्मातं परिपूरितं हृदयं यस्य स तथोक्तः आवेगः शोकवेगः निरुद्धोऽपि हृदयमध्ये आवद्धोऽपि स्फुरत् स्पन्दमानं अधरयोः नासायाश्च पुटं यस्य स तथोक्तः तस्य भावः स्फुरदधरनासापुटता तया परेषां अन्येषां उन्नेयः अनुमेयो भवति। तव अधरद्वयं नासाद्वयञ्च कम्पत इति दृष्ट्वा परैरनुमीयते, यत्तव हृदये महान् शोकावेगो वर्त्तत इत्यर्थः।

(१) कलिदो, किलिष्ठो, किलिदो इति च पाठान्तरं।

(२) भवति च भराध्मातहृदयः इति पाठान्तरं।

राम:। वत्स !

तत्कालं प्रियजनविप्रयोगजन्मा
तीव्रोऽपि प्रतिकृतिवाञ्छया विसोढ़:।
दु:खाग्निर्मनसि पुनर्विपच्यमानो-
हृन्मर्म्मव्रण इव वेदनां करोति (१) ॥ ३० ॥

सीता। हद्धी हद्धी, अहं वि अदिभूमिं गदेण रणरणएण अज्जउत्तसुस्सं विअ अत्ताणं पेक्खामि। (द)

---

(द) हा धिक् हा धिक्, अहमपि अतिभूमिं गतेन रणरणकेन आर्य्यपुत्रशून्य मिवात्मानं प्रेचे।

---

अत्रोपमाऽलङ्कार:। केचित्तु द्वितीयार्द्धे अनुमानालङ्कारं वदन्ति।

"सरो दध्यग्रगत्युष्णीभावमालासमीरण" इति मेदिनी।

"शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रस" इत्यमर:।

"परेषा"मिति "वा कर्त्तरि क्रत्य" इति कर्त्तरि षष्ठी।

शिखरिणी वृत्तं ॥ २९ ॥

तत्कालमिति। प्रियजनस्य सीताया: विप्रयोगात् विरहात् जन्म यस्य स तथोक्त: तीव्रोऽपि तीक्ष्णोऽपि प्रतिक्रतिवाञ्छया प्रतिकारेच्छया तत्कालं सीताहरणात् परस्मिन् काल इत्यर्थ: विसोढ़: सह्य:क्रत: पुनर्विपच्यमान: चित्रदर्शनात् पुनरप्युद्दीप्त: दु:खाग्नि: हृन्मर्म्मव्रण इव वक्षसोमध्यगतस्फोटक इव मनसि वेदनां करोति।

अत्रोपमालङ्कार:। प्रहर्षिणी वृत्तं ॥ ३० ॥

(द) सीतेति। हाधिगित्येकमेव विषादसूचकमव्ययं, तस्यातिशयार्थे द्विर्वचनं। अतिभूमिं गतेन आधिक्यं प्राप्तेन अतिमहतेत्यर्थ: रणरणकेन उत्कण्ठया।

अत्रोत्कण्ठया रामविरहवदनुभवेन सीताया भविष्यतो वास्तविकविरहस्य सूचनात् सामान्यपताकास्थानमेतत्। तथाच दर्पणं—

---

(१) तनोति इति पाठान्तरं।

लक्ष्म। (स्वगतम्) भवतु, अन्यतः क्षिपामि। चित्रमवलोक्य प्रकाशम्। अथैतन्मन्वन्तरपुराणस्य गृध्रराजस्य तत्रभवतस्तातजटायुषश्चरित्रविक्रमोदाहरणम्। (ध)

सीता। हा ताद! णिव्वूढोदे अपच्चसिणेहो। (न)

रामः। हा तात! काश्यप! शकुन्तराज! क्व पुनस्त्वादृशस्य महतस्तीर्थस्य साधोः सम्भवः?। (प)

---

(न)। हा तात! निर्व्वूढ़स्ते अपत्यस्नेहः।

---

"यत्रार्थे चिन्तितेऽन्यस्मिन् तल्लिङ्गोऽन्यः प्रयुज्यते।
आगन्तुकेन भावेन पताकास्थानकन्तु तत्।"

"अतिभूमिराधिक्य" मिति शब्दकल्पद्रुमः।

"रणरणक उत्कण्ठे"ति हेमः।

(ध) लक्ष्मेति। भवतु, स्वर्णमृगादिचित्रदर्शनेनैव समाप्तं भवतु इत्यर्थः, एतच्चित्रदर्शनेन तत्तद्घटनास्मरणादनयोरत्यन्तव्याकुलत्वादिति भावः। अन्यतः अन्यघटनायाश्चित्रे क्षिपामि सञ्चारयामि सीतारामयोश्चक्षुषी इत्यर्थः। अथेति व्यापारान्तरचित्रदर्शनारम्भे। एतत् दृश्यमानं। मन्वन्तरं देवपरिमाणेनैकसप्ततियुगानि तादृशे पुरा काले वर्त्तत इति मन्वन्तरपुराणस्तस्य। गृध्रराजस्य पक्षिराजस्य तातस्य, दशरथस्य मित्रत्वात्तातस्थानीयो जटायुस्तस्य। चरित्रं निस्वार्थभावेन सीतारक्षणोद्यमादिपरोपकारादिकं, विक्रमः रावणेन सह युद्धोपयोगिमहाशक्तिः तयोरुदाहरणं निदर्शनं तस्य चित्रमित्यर्थः।

(न) सीतेति। अपत्यस्नेहः सन्तानवात्सल्यं निर्व्वूढ़ः सम्पन्नो जातः सन्तानरूपाया मम रक्षार्थं प्राणत्यागादिति भावः।

(प) राम इति। तात! पितृसखत्वात् पितः! काश्यप! कश्यपप्रजापतिपौत्र! स्वपत्न्यां विनतायां कश्यपस्य द्वौ पुत्रौ बभूवतुः अरुणो गरुड़श्च, तयोररुणस्यापि द्वौ पुत्रौ सम्पाति र्जटायुश्च इति रामायणवार्त्तानुसन्धेया। शकुन्तराज! पक्षिश्रेष्ठ!। तीर्थस्य विद्यापरोपकारादिगुणयुक्तपात्रस्य साधोर्धार्म्मिकस्य सम्भवः, उत्पत्तिः। न कुत्रापीत्यर्थः।

लक्ष्म। अयमसौ जनस्थानपश्चिमत (१) श्चित्रकुञ्जवान् नाम दनुकबन्धाधिष्ठितो दण्डकारण्यभूभागः, तदिदमृष्यमूकपर्व्वते मतङ्गस्याश्रमपदं, इयञ्च श्रमणानाम सिद्धशवरी, तदेतत्पम्पाभिधानं सरः। (फ)

सीता। जत्थ किल अज्जउत्तेण विच्छड्डिदामरिसाधीणं (२) पमुत्तकण्ठं रुदिअं आसी। (ब)

---

(ब)। यत्र किलार्य्यपुत्रेण विच्छर्दितामर्षाधीनं प्रमुक्तकण्ठं रुदितमासीत्।

---

तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च।
अवतारर्षिजुष्टाम्बु पात्रोपाध्यायमन्त्रिषु।" इति मेदिनी।

(फ) लक्ष्मेति। अयमङ्गुल्या निर्द्दिष्टः असौ सः। तच्छब्दसमानार्थोऽयमदःशब्दः तथाच दर्पणे "इदमेतददःशब्दास्तच्छब्दसमानार्थतया विधेया एव भवितुं युक्ता" इति। चित्रं आश्चर्य्यं कुञ्जं लताद्याच्छादितस्थानमस्यास्तीति चित्रकुञ्जवान्। दनुकबन्धेन मस्तकशून्यशरीरधारिणा केनचित् दैत्येन अधिष्ठित आश्रितः। मतङ्गस्य तदाख्यस्य मुनेः आश्रमपदं तपोवनं। श्रमयति तपस्यार्थमात्मानं या सा श्रमणा। सिद्धशवरी :तपःसिद्धा काचन नीचजातीयरमणी। पम्पा अभिधानं नाम यस्य तत् सरः दीर्घिका। अस्य तीरजातफलविशेष एव "पेँपे" इत्युच्यत इति लोकप्रवादः।

(ब) सीतेति। यत्र पम्पासरसि। विच्छर्द्दितः वृद्धिं प्राप्तः योऽमर्षः असहिष्णुता तदधीनं सीताविच्छेदविह्वलत्वप्रयुक्तमित्यर्थः प्रमुक्तः अनिरुद्धः यावद्बहिर्भवितुमर्हति तावद्बहिर्गत इत्यर्थः कण्ठः स्वरो यस्मिन् तत् उच्चैःस्वरमित्यर्थः।

---

(१) जनस्थानपश्चिम इति क्वापि पाठः।

(२) विच्छिस्सामरिसाधीणं, विसज्जिदामरिसधीरओणं इति पाठभेदौ।

रामः । देवि ! रमणीयमेतत् पम्पासरः ।

एतस्मिन् मदकलमल्लिकाक्षपक्ष-
व्याधूतस्फुरदुरुदण्डपुण्डरीकाः ।
वाष्पाम्भःपरिपतनोद्गमान्तराले
संदृष्टाः कुवलयिनो भुवो विभागाः ॥ ३१ ॥

लक्ष्म । अयमार्य्यो हनूमान् ।

सीता । एसो सो चिरणिव्विसजीअलोअपच्चुद्धरण गुरूओवआरी महाणुभावो मारुदी । (भ)

---

(भ) । एष स चिरनिर्विण्णजीवलोकप्रत्युद्धरणगुरूकोपकारी महानुभावो मारुतिः ।

---

एतस्मिन्निति । एतस्मिन् पम्पासरसि मदकला मदमत्ता ये मल्लिकाख्याः पक्षिविशेषाः तेषां पक्षैः व्याधूतानि कम्पितानि स्फुरन्ति प्रकाशमानानि उरुदण्डानि बृहन्मृणालानि पुण्डरीकाणि पद्मानि येषु ते तथोक्ताः कुवलयिनः उत्पलविशिष्टाः भुवो विभागाः भूप्रदेशाः, वाष्पाम्भसां अश्रूणां परिपतनं चरणं उद्गमः पुनरुत्पत्तिः तयोरन्तराले मध्ये, एकः वाष्पाम्बुविन्दुः पतितः यावदन्य उत्पद्यते तावत्कालमध्य इत्यर्थः संदृष्टाः अवलोकिताः मयेतिशेषः । तदानीं तव विरहदुःखेन अविरतमेव मया रुदितं किन्तु तथापि अत्यन्तमनोहरत्वात् तत्प्रदेशा दृष्टा इति भावः ।

अत्र दण्डपुण्डेति व्यञ्जनसंघस्य अनेकधा साम्यात् छेकानुप्रासोऽलङ्कारः ।

प्रहर्षिणीवृत्तं ॥ ३१ ॥

(भ) सीतेति । चिरनिर्विण्णस्य अन्यकृतापमानादिभिरवज्ञातस्य जीवलोकस्य प्रत्युद्धरणेन तत्तद्दुःखविनाशेन गुरूकोपकारी महोपकारी महानुभावो महाप्रभावो मारुतिः मारुतस्य, वायोरपत्यं हनूमान् । धन्योऽयमिति भावः ।

राम: ! दिष्ट्या सोऽयं महाबाहु रञ्जनानन्दवर्द्धनः ।
यस्य वीर्य्येण कृतिनो वयञ्च भुवनानि च ॥ ३२ ॥

सीता। वच्छ! एसो कुसुमिदकअम्बतरूतण्डविदवरहिणो किंणामधेओ गिरी ? जत्थ अणुभावसोहग्गमेत्त परिसेसधूसरसिरी मुहुत्तं मुच्छन्तो तुए परूदिएण (१) अवलम्विदो तरूअले अज्जउत्तो आलिहिदो । (म)

---

(म) वत्स ! एष कुसुमितकदम्बतरुताण्डवितवर्हिणः किंनामधेयो गिरिः ? अनुभावसौभाग्यमात्रपरिशेषधूसरश्रीः मूर्च्छन् मूर्च्छन् त्वया प्ररुदितेन अवलम्बित-स्तरुतले आर्य्यपुत्र आलिखितः ।

---

दिष्ट्येति । दिष्ट्येत्यानन्दसूचकमव्ययं ! अयं दृश्यमानः स प्रसिद्धः महाबाहुः विशालभुजबलशाली अञ्जनानन्दवर्द्धनः पुत्रत्वेन अञ्जनाख्याया वानर्य्याः सुखवृद्धिकार हनूमानित्यर्थः । यस्य हनूमतो वीर्य्येण बलेन वयञ्च भुवनानि च कृतिनः सीतोद्धारेण जगद्वैरिरावणवधेन च सफलकामा इत्यर्थः । हनूमतो बाहुबलेन सीता उद्धारिता रावणश्च हत इति भावः ।

अत्र भुवनानि चेत्यनेन "कृतीनि" इत्यध्याहृत्यान्वयः कार्य्यः अन्यथा "नपुंसकान-पुंसकयोर्नपुंसकमेकवद्वा" इत्यनेन कृतिन इत्यस्य नपुंसकत्वमेव स्यात् । अतएवात्र न्यूनपदत्वदोषः, स तु "वयञ्च जगतोजना" इति पाठेन समाधेयः । तथापाठे तुल्ययोगि-ताऽलङ्कारश्च स्यात् ॥ ३२ ॥

(म) सीतेति । कुसुमान्येषां जातानीति कुसुमिताः पुष्पिता ये कदम्बतरवस्तेषु ताण्डवान्येषां जातानीति ताण्डविता नृत्यन्तः वर्हिणा मयूरा यत्र स तथोक्तः । यत्र गिरौ तरुतले अनुभावेन तेजसा यत् सौभाग्यं सौन्दर्य्यं तन्मात्रं परिशेषं अवशिष्टं यत्र तादृशी धूसरा पाण्डुवर्णा श्रीः शोभा यस्य सः कृशाङ्गोऽपि स्वाभाविकतेजःसम्पन्न इत्यर्थः ।

---

(१) परूसेण इति पाठान्तरं ।

लक्ष्म। सोऽयं शैलः ककुभसुरभिर्माल्यवान् नाम, यस्मिन्
नीलः स्निग्धः (१) श्रयति शिखरं नूतनस्तोयवाहः।

रामः। वत्सैतस्मादिरम विरमातः परं न क्षमोस्मि
प्रत्यावृत्तः पुनरिव स मे जानकीविप्रयोगः॥ ३४॥

लक्ष्म। अतःपरमार्य्यस्य तत्रभवता कपिराक्षसानाञ्च असंख्यातानुरक्तरोत्तराणि कर्म्माश्चर्य्याणि, परिश्रान्ताचेयमार्य्या, तद्विज्ञापयामि विश्रम्यतामिति (२)। (य)

---

मुहूर्त्तं मूर्च्छन् कियन्तं कालं अचैतन्यो भवन् प्रकृष्टं रुदितं यस्य तेन अतीवक्रन्दता त्वया अवलम्बितः धृतः। आलिखितश्चिवितः।

"मयूरीवर्हिणो वर्हीति "ताण्डवं नटनं नाट्य"मितिचामरः।

सोऽयमिति। ककुभैरर्जुनपुष्पैः सुरभिः शोभनगन्धोपेतः माल्यवान् नाम अयं दृश्यमानः स प्रसिद्धः शैलः पर्वतः, नूतनः अचिरपूर्णजलः अतएव नीलः श्यामलः स्निग्धः चिक्कणश्च तोयवाहः मेघः यस्मिन् यस्येत्यर्थः शिखरं शृङ्गं श्रयति अवलम्बते।

वत्स! लक्ष्मण! एतस्मात् माल्यवत्पर्वतचित्रदर्शनात् विरम विरम निवर्त्तस्व निवर्त्तस्व। कथमित्याह अतः परं न क्षमो न शक्तोस्मि द्रष्टुमिति शेषः अत्र हेतुमाह स पूर्वानुभूतः मे मम जानकीविप्रयोगः सीताविरहः पुनः प्रत्यावृत्त इव प्रत्युपस्थित इव।

अत्र भावाभिमानिनी वाच्या क्रियोत्प्रेचालङ्कारः स तु वाक्यार्थहेतुककाव्यलिङ्गेन सङ्कीर्य्यते।

"इन्द्रद्रुः ककुभोऽर्जुन" इत्यमरः। "हरीतक्यः फलानी"तिवत् ककुभशब्दस्य पुष्पार्थेऽपि वृत्तिः, यस्मिन्नित्यस्येव यस्येत्यर्थः तथाच "षष्ठी सप्तम्योरर्थं प्रतिभेदो नास्ति यथा वृक्षस्य शाखा वृक्षे शाखे"ति विलोचनः।

मन्दाक्रान्तावृत्तं "मन्दाक्रान्ताम्बुधि रसनगैर्मोभनौगौययुग्म"मिति लक्षणात् ॥३४॥

(य) लक्ष्मेति। आर्य्यस्य भवतः। कपिर्वानरः। असंख्यातानि संख्यारहि

---

(१) नीलस्निग्ध इति पाठान्तरं। (२) विश्राम्यतामिति पाठभेदः।

सीता। अज्जउत्त! एदेण चित्तदंसणेण पच्चुप्पसदोहदाए अत्थि मे विस्रप्पं। (र)

रामः। नन्वाज्ञापय। (ल)

सीता। जाणि, पुणोवि पसस्सगम्भीरासु वणराइसु विहरिस्सं, पवित्तनिम्मलसिसिरावगाहाञ्च भअवदीं भाईरहीं अवगाहिस्सं। (व)

रामः। वत्स लक्ष्मण!

---

(र)। आर्य्यपुत्र! एतेन चित्रदर्शनेन प्रत्युत्पन्नदोहदाया अस्ति मे विज्ञाप्यं।

(व)। जाने, पुनरपि प्रसन्नगम्भीरासु वनराजिषु विहरिष्यामि, पवित्रनिर्म्मलशिशिरावगाहाञ्च भगवतीं भागीरथीमवगाहिष्ये।

तानि वहन्ति। उत्तरोत्तराणि क्रमिकाणि कर्म्माण्यर्थाणि सुग्रीवसख्य वालिवध समुद्रलङ्घनादि महाद्भुतानि कर्म्माणीत्यर्थः। "आहिताग्न्यादिषु वा पर" मिति आर्य्यशब्दस्य परनिपातः। इयमार्य्या सीता परिश्रान्ता वहुक्षणं यावत् दण्डायमानतया चित्रदर्शनादिति भावः। विश्रम्यतां सीतयेतिशेषः।

(र) सीतेति। प्रत्युत्पन्नो जातो दोहदोऽभिलाषो यस्याः सा, तस्याः मे मम विज्ञाप्यं निवेद्यं।

(ल) राम इति। नन्विति सम्बोधने। आज्ञापय आदिश। "अकृत्रिमपरम प्रेम्णा तवाहमधीन एवास्मि सुतरां विज्ञाप्यमस्ती"त्यनुक्त्वा "आज्ञाप्यमस्ती"त्येव वक्तुमर्हसीति रामस्याभिप्रायः।

(व) सीतेति। जाने बुध्ये। मम इच्छास्तीत्यनुमानेनैव त्वया ममाभिलाषः अवश्यमेव पूरणीयः सुतरां पुनरपि पञ्चवटीविहारः गङ्गावगाहश्च ममावश्यम्भावीति ज्ञापनाय 'इच्छामी'त्यनुक्त्वा जान इत्युक्तं। प्रसन्नाः नूतनपत्रपल्लवशालित्वात् स्निग्धाः गम्भीराणि-सम्भीषणाः तासु। पवित्रः पुण्यजनकः निर्म्मलः पापनाशकः शिशिरः शीतलश्च अवगाहः स्नानं यस्यां तां भागीरथीं गङ्गां। तथाच ब्रह्माण्डपुराणं—

लक्ष्म । एषोऽस्मि । (श)

रामः । अचिरं सम्पादनीयोऽस्यादोहद इति सम्प्रत्येव गुरुभिः सन्दिष्टं । तदस्खलितसुखसम्पातं रथमुपस्थापय । (ष)

सीता । अज्जउत्त ! तुह्मेहिं वि तहिं गन्तव्वं । (स)

रामः । अयि कठिनहृदये ! एतदपि वक्तव्यमेव ? (ह)

सीता । तेण हि पिअं मे । (च)

लक्ष्म । यथाज्ञापयत्यार्य्यः । इति निष्क्रान्तः ।

(स) । आर्य्यपुत्र ! युष्माभिरपि तस्मिन् गन्तव्यं

(च) । तेन हि प्रियं मे ।

"अनेकजन्मसम्भूतं पापं पुंसां प्रणश्यति ।
स्नानमात्रेण गङ्गायां सद्यः पुण्यस्य भाजनं ॥"

(श) लक्ष्मेति । आदिश्यतामिति शेषवाक्यं ।

(ष) राम इति । गुरुभिर्वशिष्ठादिभिः । सन्दिष्टं वाचिकं प्रेषितं । न केवलं ममाग्रहात् अपि तु गुरूणामादेशादपि अवश्यमेव अस्या अभिलाषः पूरणीय इति भावः । तत् तस्मात् अस्खलितः अभ्रष्टः सुखसम्पातः सुस्थतया गमनं यस्मात् तत् तथोक्तं समानभावेन चलनशीलमित्यर्थः । अन्यथापूर्णगर्भायाः चक्रोट्टङ्कनादनवरतमूर्द्धाधोगमनेन संघर्षेण च नितरां कष्टं भविष्यतीति भावः ।

(स) सीतेति । इदानीं राजकार्य्यव्यग्रतया यदि रामः तत्र न यास्यतीति शङ्कया "युष्माभिरपि तस्मिन् गन्तव्य"मिति सीतया प्रार्थितमिति बोध्यं ।

(ह) कठिनं हृदयं यस्याः सा, तस्याः सम्बोधनं । त्वां विहाय अहं स्थातुमर्हामीति येन हृदयेन आशङ्का कृता तत्तव हृदयं कठिनमेवेति भावः । एतदपि वक्तव्यमेव इति काकुः अपितु कथमपि नेत्यर्थः । त्वया विना स्थातुमशक्यत्वात् तवैतत्प्रार्थनाभावेऽपि अवश्यमेव त्वया सार्द्धमहं गमिष्यामि सुतरां प्रार्थनावाक्यमिदं निष्प्रयोजनमिति भावः ।

राम:। प्रिये! इतो वातायनोपकण्ठे (१) मुहूर्त्तं सन्निविष्टौ भवाव:। (क)

सीता। एव्वं भोदु, ओहीरिज्जामि क्खु परिस्समजणिदाए णिद्दाए। (ख)

राम:। तेन हि निरन्तरमवलम्बस्व मामत्र शयनाय। (ग)

जीवयन्निव ससाध्वसश्रम-
स्वेदविन्दुरधिकण्ठमर्प्यताम्।
वाहुरैन्दवमयूखचुम्बित-
स्यन्दिचन्द्रमणिहारविभ्रम:॥ ३५॥

---

(ख)। एवं अपह्रिये खलु परिश्रमजनितया निद्रया।

(क) रामइति। वातस्य अयनं गृहमध्ये प्रवेशो यस्मात् तत्वातायनं गवाक्षं तस्य उपकण्ठे समीपे। मुहूर्त्तं अल्पकालमित्यर्थ: सन्निविष्टौ शयितौ भवाव: आवामितिशेष:।

(ख) सीतेति। एवं भवतु वातायनसमीपे आवयोरुपवेशनं भवतु इत्यर्थ:। परिश्रम: चित्रदर्शने दण्डायमानत्वेन य आयास स्तज्जनितया निद्रया अपह्रिये अपहृता आक्रष्टास्मीत्यर्थ:।

(ग) राम इति। तेन हि निद्राकर्षणेनैव हेतुना। अत्र अस्मिन् वातायनोपकण्ठे निर्नविद्यते अन्तरमवकाशो विभागो यस्मिन् कर्म्मणि तत् गाढ़ मित्यर्थ: यथास्यात्तथा मामवलम्बस्व धारय।

केन प्रकारेणावलम्बे इत्याह जीवयन्निति। साध्वसं चित्रे राक्षसादिदर्शनाद्भयं श्रम: दण्डायमानत्वेन चित्रदर्शनादायास: तयो र्ये स्वेदविन्दव: भयपरिश्रमाभ्यामुत्पन्ना घर्म्म विन्दव स्तै: सह वर्त्तमान इति ससाध्वसश्रमस्वेदविन्दु: अतएव इन्दोश्चन्द्रस्य इम इति

(१) वातायनावर्त्तके इति पाठान्तरं।

तथा कारयन् सानन्दम् । प्रिये ! किमेतत् । ( घ )

विनिश्चेतुं शक्यो ( १ ) न. सुखमिति वा दुःखमिति वा
प्रमोहो (२) निद्रा वा किमु विषविसर्पः किमु मदः ।
तव स्पर्शं स्पर्शं मम हि परिमूढेन्द्रियगणो
विकारश्चैतन्यं भ्रमयति च सम्मीलयति च ( ३ ) ॥ ३६ ॥

---

पैन्दवा सैर्मयूखैः किरणैः चुम्बितः मिलितः अतएव स्यन्दी जलस्रावी यश्चन्द्रमणिहारः चन्द्रकान्तमणिमाला तस्य विभ्रम इव विभ्रमोविलासो यस्य स तथोक्तः जीवयन्निव नितान्त-शीतलतया मामुच्छ्वासयन्निव स्थितः बाहुर्भुजः अधिकण्ठं मम गलदेशे अर्पितां स्थाप्यतां त्वयेतिशेषः ।

अत्र लुप्तोमाऽलङ्कारः जीवयन्निवेति क्रियोत्प्रेक्षया सङ्कीर्णः ।

अधिकण्ठमिति विभक्त्यर्थे अव्ययीभावः ।

चन्द्रकरस्पर्शे चन्द्रकान्तमणे र्जलं स्रवतीति प्रवादः ।

रथोद्धता वृत्तं "रान्नराविह रथोद्धता लगा"विति लक्षणात् ॥ ३५ ॥

( घ ) तथेति । तथाकारयन् स्वकीयगलदेशे सीतावाहुमर्पयन् रामः सानन्दमाहेत्य-न्वयः । एतत् कण्ठे तव बाहुस्थापनात् परं अनुभूयमानं अवस्थान्तरं किं कीदृशं जातमिति शेषः ।

जातमवस्थान्तरमेव विवृणोति विनिश्चेतुमिति । इति शब्देन सीतास्पर्शजनितो रामस्य तदानीन्तनो भाव उच्यते, तेनायमर्थः ; इति तव स्पर्शजनितो वर्त्तमानो मदीयो-भावः सुखं विनिश्चेतुं न शक्यः सुखत्वेन निर्णेतुं न शक्यते सम्यगनुभवसामर्थ्याभावादिति-भावः । वा अथवा इति एष भावः दुःखं विनिश्चेतुं न शक्यः अन्तःकरणप्रतिकूलवेदनीय-स्यैव दुःखपदार्थत्वात् एतद्भावस्य तु सर्वदैवाभिलषणीयत्वेन अन्तःकरणप्रतिकूलवेदनीय-त्वाभावादिति भावः । वा अथवा एष भावः प्रमोहो विनिश्चेतुं न शक्यः प्रमोहत्वेन

---

( १ ) शक्ये इति क्वापि पाठः । ( २ ) प्रबोध इति पाठभेदः ।

( ३ ) भ्रमयति समुन्मीलयति च इति पाठान्तरं ।

सीता। विहस्य। थिरप्पसादा तुम्हे, इदो दाणिं किमपरं। (ङ)

राम:। म्लानस्य जीवकुसुमस्य विकाशनानि
सन्तर्पणानि सकलेन्द्रियमोहनानि।

(ङ)। स्थिरप्रसादा यूयं, इत इदानीं किमपरं?

अज्ञानत्वेनापि निर्णेतुं न शक्यत इत्यर्थः 'सीतास्पर्शजन्योऽयं भाव" इति तात्त्विकज्ञानादिति भावः। वा किम्बा अयं भावः निद्रा विनिश्चेतुं न शक्यः निद्रात्वेनापि निर्णेतुं न शक्यत इत्यर्थः—युगपत्सर्वेन्द्रियविश्रामोहि निद्रा अर्थात्तत कस्यापीन्द्रियस्य वृत्ति र्नास्ति, अवतु त्वगिन्द्रियग्राह्यस्पर्शानुभवादितिभावः। किमु शब्दोविकल्पे। अयं भावः विषविसर्पो-विनिश्चेतुं न शक्यः—विषजनितविसर्पाख्यरोगविशेषत्वेनाप्यवधारयितुं न शक्यत इत्यर्थः वेदनाननुभवादिति भावः। तथा अयं भावः मदो मद्यपानजनितमोहविशिष्टानन्दोपि विनिश्चेतुं न शक्यः मद्यपानाकरणादितिभावः। निश्चयाभावे कारणमाह तवेति। हि यस्मात् तव स्पर्शे स्पर्शे प्रतिस्पर्शे परिमूढ़ः स्वस्वविषयग्रहणासमर्थ इन्द्रियगणो मनः-प्रभृतीनीन्द्रियाणि यस्मिन् स तथोक्तः मनसो विषयग्रहणासामर्थ्ये अन्येषामिन्द्रियाणां सुतरामसामर्थ्यादितिभावः। विकारः अन्यथाभावः अवशत्वमिति यावत् मम चैतन्यं अनुभवशक्तिं भ्रमयति अस्थिरयति च सम्मीलयति मुद्रयति विलोपयति चेति यावत्। तव स्पर्शजनितविकारे सति क्वचित् मम चैतन्यं अस्थिरं सत् किमपि निश्चेतुं न शक्नोति, क्वचित्तु विलुप्तमेव स्यादिति निष्कर्षः।

अत्र पूर्वार्द्धे स्पर्शजनितायामवशतायां सुखादीनां संशयात् तस्य च निश्चयाभावात् शुद्धसन्देहालङ्कारः। चतुर्थपादे च एकविकाररूपकर्त्तृकारकस्य भ्रमयति सम्मीलयतीति क्रिययोरनेकयोरन्वयात् दीपकञ्चेत्यनयोः परस्परनिरपेक्षस्थितेः संसृष्टिः।

शिखरिणीवृत्तं। २६।

(ङ) सीतेति। यूयं त्वमित्यर्थः गुरुत्वाद्बहुवचनं। स्थिरो नियतः प्रसादोऽनुग्रहो येषां ते स्थिरप्रसादाः। इतः अस्मात् कारणात् इदानीं अपरं प्रियवाक्यभिन्नं किं वक्तव्यमित्यर्थः। अनुग्रहकारिणोहि अनुगृहीतं प्रति सर्वदैव प्रियं वदन्तीतिभावः।

म्लानस्येति। हे सरोरुहाक्षि! हे पद्मलोचने? एतानि ते तव सुवचनानि मधुर-

एतानि ते सुवचनानि सरोरुहाक्षि ! (१)
कर्णामृतानि मनसश्च रसायनानि ॥ ३७ ॥

सीता। प्रियंवद ! एहि संविसह्म (२) इति शयनाय समन्ततो निरूपयति। (च)

रामः। किमन्वेष्टव्यम्। (छ)

(च)। प्रियंवद ! एहि संविशावः।

वाक्यानि म्लानस्य सांसारिकाशेषक्लेशैः शुष्कप्रायस्य जीवो जीवन मेव कुसुमं तस्य विकाशनानि प्रफुल्लताजनकानि, सन्तर्पणानि सम्यक्तृप्तिकराणि, सकलेन्द्रियमोहनानि सर्वेषामिन्द्रियाणां श्रवशतासम्पादकानि श्रवणं प्रत्येव एकाग्रतया अन्येषामिन्द्रियाणां कार्य्याभावादिति भावः। कर्णामृतानि कर्णयोरमृतवत् प्रीतिजनकानि, तथा मनसश्च रसायनानि औषधविशेषवत् वलकराणि उत्साहवर्द्धकानीत्यर्थः।

अत्र जीवकुसुमस्येति निरङ्गं केवलरूपकं, अन्यत्र तु निरङ्गं मालारूपकमित्यनयोः सङ्करः।

तथा एतानि ते सुवचनानीत्यनेन समाप्तत्वात् पुनः कर्णामृतानीत्यनेन आत्तत्वात् समाप्तपुनरात्ततादोषः; स च चतुर्थपादं तृतीयपादस्थाने पठित्वा चतुर्थपादस्थाने "वाक्यान्यमूनि मधुराणि सरोरुहाक्षि ! इति पाठेन समाधेयः। रसायनमाह भावप्रकाशे।

"यज्जराव्याधिविध्वंसि वयसः स्तम्भकं तथा।
चक्षुष्यं वृंहणं वृष्यं भेषजं तद्रसायनं।"

वसन्ततिलकावृत्तं ॥ ३७ ॥

(च) सीतेति। अतीवप्रियोक्तिकरत्वात् रामस्य प्रियंवद इति सम्बोधनं संविशावः स्वपिवः। समन्ततः सर्वतः। निरूपयति अन्विष्यति।

(छ) राम इति किमन्वेष्टव्यं किं विचेतव्यं तवावश्यकपदार्थस्य मयैव सम्पादनीयत्वात् तव किमप्यन्वेष्टव्यं नास्तीत्यर्थः।

(१) एतानि तानि वचनानि सरोरुहाक्ष्या इति क्वापि पाठः। (२) सङ्गस्व इति पाठान्तरं।

आविवाहसमयाद् गृहे वने
शैशवे तदनु यौवने पुनः।
स्वापहेतुरनुपाश्रितोऽन्यया
रामबाहुरुपधानमेष ते ॥ ३८ ॥

सीता। निद्रां नाटयन्ती। अत्थि एदं अज्जउत्त! अत्थि एदं इति स्वपिति (ज)

रामः। कथं प्रियवचना वक्षसि प्रसुप्तैव। निर्वर्ण्य सस्नेहम्। (झ)

इयं गेहे लक्ष्मीरियममृतवर्त्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः।

---

(ज)। अस्तीदं आर्य्यपुत्र! अस्तीदं।

---

उपधानमेवान्विष्यतीति विवेच्याह आविवाहेति। विवाहसमयात् आ, विवाह-कालादारभ्य नतु तत्पूर्वमित्यर्थः शैशवे बाल्यकाले गृहे, पुनस्तदनु तत्पश्चात् यौवने काले वने स्वापहेतुः शयनोपकरणं अन्यया स्त्रिया अनुपाश्रितः अनवलम्बितः केवलं त्वयैवावलम्बित इति न ते परिहरणीय इति भावः। एष रामबाहुः ते तव उपधानं उपवर्हः 'वालिस' इति यस्य प्रसिद्धिः आसीदिति शेषः। अतएवेदानीमपि स एव बाहूरुपधानमस्तु इति भावः।

अत्र गृहवनयोः शैशवयौवनयोश्च अनुक्रमेणान्वयात् यथासंख्यं तथा बाहौ आरोप्य-माणस्य उपधानत्वस्य प्रकृतशयनोपयोगितया परिणामश्चालङ्कारः अनयोराङ्गाङ्गिभावेन सङ्करः। "उपधानन्तूपवर्हं" इत्यमरः। रथोद्धतावृत्तं। ३८ ॥

(ज) सीतेति। तव बाहुः इदं मम उपधानमस्तीत्यर्थः। इति स्वीकरोमि स्वपिमि च तवैवेति भावः। इति पूर्वोक्तमुक्त्वेत्यर्थः स्वपिति रामबाहाविति शेषः।

(झ) राम इति। शयितजनबाहुपरिशयने वक्षसोर्योगात् वक्षसि शयनं भवतीति "वक्षसि प्रसुप्तै"वेत्युक्तं।

अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः (१)॥ ३८॥

प्रविश्य प्रतीहारी। देव! उवत्थिदो। (ञ)

(ञ)। देव! उपस्थितः

इयमिति। इयं सीता गेहे गृहे लक्ष्मीः कमला, तथा इयं नयनोर्यक्षुषोः अमृतवर्त्तिः सुधामयी तूलिका कज्जलादिलेपनार्था, असौ अनुभूयमानः अस्याः सीतायाः स्पर्शः वपुषि देहे बहुलः प्रचुरः चन्दनरसः चन्दनद्रवः तद्वत् सुशीतल इत्यर्थः। तथा अयं कण्ठे गले न्यस्त इतिशेषः बाहुः भुजः शिशिरमसृणः हिमवत् स्निग्धः मौक्तिकसरः मुक्तामाला तद्वत् आनन्दकर इत्यर्थः। सुतरां अस्याः सीतायाः सम्बन्धि किं वस्तु न प्रेयः प्रियतमं अपितु सर्बमेव प्रियतमं; तु किन्तु परं केवलं विरहो विच्छेदः असह्य अतीव दुःखकरत्वात् सोढ़मशक्यः। यदिशब्दः सम्भावनायां एतत् सर्वं सम्भाव्यत इत्यर्थः।

अत्र प्रथमपादे गेहनयनरूपविषयभेदेन एकस्याः सीताया अनेकधोल्लेखात् उल्लेखालङ्कारः, तत्र च भेदेऽभेदाध्यवसायमूलातिशयोक्तियोगोऽप्ययः। द्वितीयतृतीयपादयोः समासाभावेऽपि "मुखं तव कुरङ्गाक्षि! सरोजमितिनान्यथे"तिवत् रूपकद्वयं; तथा "किमस्या न प्रेय" इति वाक्यं प्रति पूर्वेषां त्रयाणां वाक्यानां हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गं; तथा प्रियतमायाः सीताया अप्रियतमविरहोत्पत्तेर्विषमालङ्कारश्चेत्येतेषां निरपेक्षस्थितेः संसृष्टिः।

"यदि (व्य) पक्षान्तरं। सम्भावना" इति शब्दकल्पद्रुमः। शिखरिणी वृत्तं। ३८॥

(ञ) प्रविश्येति। प्रतीहारी अन्तःपुरद्वाररक्षिका काचित् स्त्री। "द्वारस्थिता च प्रतीहारी"ति मेदिनी।

उपस्थित इत्यनेन वक्ष्यमाण दुर्म्मुखइत्यस्यान्वयात् 'उपस्थितो दुर्म्मुख' इतिवाक्यं भवेदित्यभिप्रेत्य प्रतीहार्य्या 'देव उपस्थित' इत्युक्तं। किन्तु पूर्वश्लोकस्थ'विरह' इत्यनेनापि

(१) यदि पुनरसह्यो न विरह इति पाठान्तरं

रामः। अये! कः?।

प्रती। आसस्सपरिचारओ देवस्स दुम्मुहो। (ट)

रामः। स्वगतं। शुद्धान्तचारी दुर्म्मुखः, स मया पौरजानपदानपसर्पितुं प्रयुक्तः। प्रकाशं। आगच्छतु। (ठ)

प्रतीहारी निष्क्रान्ता।

प्रविश्य दुर्म्मुखः। स्वगतं। हा कधं सीदादेइए ईरिसं अचिन्तणिज्जं जणाववादं देवस्स कधइस्सं, अहवा णिओओ क्खु ईरिसो मन्दभाअस्स। (ड)

(ट) आसन्नपरिचारको देवस्य दुर्म्मुखः।

(ड) हा कथं सीतादेव्या ईदृशमचिन्तनीयं जनापवादं देवस्य कथयिष्यामि? अथवा नियोगः खलु ईदृशो मन्दभागस्य।

---

'उपस्थित' इत्यस्यान्वयसम्भवेन "सीतायाविरह उपस्थित" इति वाक्यात् आसन्नसीताविरहसूचनादिकं पताकास्थानमिदं। तथाचोक्तं साहित्यदर्पणे—

"द्वार्थोवचनविन्यासः सुश्लिष्टः काव्ययोजितः।

प्रधानार्थान्तरापेक्षी पताकास्थानकं परं" ॥

(ट) प्रतीति। देवस्य भवतः। आसन्नो निकटवर्त्ती सन् परिचरति सेवते इत्यासन्नपरिचारकः। 'खान्सामा' इति यस्य भाषा। दुष्टं अप्रियभाषणेन निन्दितं मुखं यस्य स दुर्म्मुखः दुर्म्मुखनामा कश्चित्जनः। एष तु जन्मक्लीवः क्लतक्लीबोवा विश्वस्तो ह्यस्यान्तःपुरकिङ्कर आसीदिति मन्तव्यं अन्यथा अन्तःपुरकिङ्करत्वं परचित्तपरिज्ञानाय प्रेषणञ्च न स्यात्।

(ठ) राम इति। शुद्धान्तचारी अन्तःपुरस्थायी। पौरजानपदान् अयोध्यावासिनः तत्प्रदेशवासिनश्च जनान् अपसर्पितुं पर्य्यटितुं अनुरक्ता विरक्ता वा, निन्दाकारकाः प्रशंसाकारका वा जना इति परीक्षितुमित्यर्थः प्रयुक्तः प्रेरितः। इति शिरश्चालनेन सूतिः।

(ड) प्रविश्येति। देवस्य समीप इतिशेषः। मन्दभागस्य अल्पभाग्यस्य ममेति-

सीता। उत्स्वप्नायते। हा अज्जउत्त ! (१) कहिंसि ?। (ढ)

रामः। अये ! सैवेयं रणरणकदायिनी चिरदर्शनाद्विरह-भावना देव्याः स्वप्नोद्वेगं करोति। सस्नेहमङ्गमस्याः परामृशन्। (ण)

अद्वैतं सुखदुःखयोरनुगुणं सर्वास्ववस्थासु यत्
विश्रामो हृदयस्य यत्र, जरसा यस्मिन्नहार्य्योरसः।
कालेनावरणात्ययात् परिणते यत् स्नेहसारे स्थितं
भद्रं तस्य(२) सुमानुषस्य कथमप्येकं हि तत्प्राप्यते (३) ॥४०

---

(ढ)। हा आर्य्यपुत्र ! कस्मिन्नसि ?।

---

शेषः। ईदृशः खलु नियोगः सकलवृत्तान्तं विदित्वा स यथायथं ममान्तिके वक्तव्यः एवमेवादेशोऽस्तीत्यर्थः। सुतरां रामस्याग्रहातिशये सीतापवादो वक्तव्य एवेति सज्जनस्यापवादप्रकाशात् मन्दमेव भाग्यं ममेति भावः।

(ढ) सीतेति। उत्पन्नः स्वप्नो यस्याः सा उत्स्वप्ना सा इवाचरतीति उत्स्वप्नायते स्वप्ने प्रलपतीत्यर्थः। निद्रितावस्थायां विषयानुभवः स्वप्नः।

(ण) रामइति। रणरणकदायिनी उद्वेगकारिणी। विरहभावना मम विच्छेदचिन्ता। स्वप्नोद्वेगं स्वप्नेऽपि तादृशमेव विरहोद्वेगं करोतीत्यर्थः। दुश्चिन्ता जाग्रदवस्थायां यदर्थं कृता स्वप्नेऽपि सा तत्दर्शयतीति रीतिः। अङ्गं परामृशन् अङ्गे हस्तं स्पर्शयन्।

ईदृक्परमपतिव्रतायाः सीताया निरन्तरं सुखन्तु नास्त्येव, किन्तु कथं वनवासादिविविधदारुणक्लेश एवासीदिति विभाव्य भृशमनुतप्त आह अद्वैतमिति। यत् भार्य्यारूपं वस्तु सुखदुःखयोरद्वैतं अभिन्नमाश्रयं यतः सुखेन सुखि, दुःखेन च दुःखीत्यर्थः। तथा सर्वास्ववस्थासु सम्पत्सु विपत्सु च अनुगुणं अनुकूलं न तु सम्पत्तावनुकूलं विपत्तौ तु प्रतिकूलमिति भावः। यत्र भार्य्यारूपे वस्तुनि हृदयस्य सांसारिकाशेषक्लेशभोगपरिश्रान्तस्य

---

(१) सौम्य इत्यधिकः पाठः क्वापि।

(२) प्रेम इति क्वचित्पाठः। (३) प्रार्थ्यते इति पाठभेदः।

दुर्म्म। उपसृत्य। जअदि जअदि देओ। (त)

रामः। ब्रूहि यदुपलब्धम्। (थ)

दुर्म्म। उवत्थुअन्ति देअं पोरजाणवदा, विसुमरिदा अह्मे महाराअदसरहस्स रामदेएण त्ति। (द)

(त)। जयति जयति देवः।

(द)। उपस्तुवन्ति देवं पौरजानपदाः, विस्मारिता वयं महाराजदशरथस्य रामदेवेनेति।

मनसः विश्रामः अमापनोदनं विषयान्तरक्लिष्टं मनः यत्प्राप्य हृष्यतीत्यर्थः। यस्मिन् भार्य्यारूपे वस्तुनि जरसा वार्द्धक्येनापि रसोऽनुरागो न हार्य्यः न हर्त्तुं दूरीकर्त्तुं शक्यः वार्द्धक्ये हि प्रायेणोत्साहादयो मनोवृत्तयो नश्यन्ति किन्तु भार्य्यायामनुरागो न नश्यतीति भावः। यत्भार्य्यारूपं वस्तु कालेन पुत्राद्युत्पत्तिप्रभृतिसमयेन आवरणस्य लज्जासङ्कोचादेरत्ययापदगमात् परिणते परिपक्के स्नेहसारे स्नेहस्योत्कृष्टांशे स्थितं कामवृत्त्याद्यभावेन केवलाकृतिमप्रणयभावं भवतीत्यर्थः। तस्य सुमानुषस्य भार्य्यारूपसज्जनस्य तत्प्रसिद्धं एकं केवलं निरवच्छिन्नमिति यावत् भद्रं मङ्गलं कथमपि महाकष्टेनेत्यर्थः प्राप्यते पत्येति शेषः। क्वचित् कस्यचिज्जनस्य पत्नी जन्मान्तरीयमहातपःक्लेशादिना निरवच्छिन्नसुखिनी स्यात् नतु सर्वेषां सुतरां सीताया निरवच्छिन्नं सुखं नाभूदिति कृत्वा मसानुशोचनमनर्थकमिति भावः।

अत्र भार्य्यायाः प्रियतमत्वस्थापनकार्य्यं प्रति बहुतरकारणोक्तेः समुच्चयोऽलङ्कारः।

द्वयोर्भावो द्विता, द्वितैव द्वैतं प्रज्ञादित्वात् स्वार्थे अण्, ततो नञ्समासः।

शार्दूलविक्रीड़ितं वृत्तं "सूर्य्याश्वैर्मसजस्तताः सगुरवः शार्द्दूलविक्रीड़ित"मितिलक्षणात्॥ ४०॥

(थ) रामइति। यदुपलब्धं ज्ञातं तद्ब्रूहीत्यर्थः।

(द) दुर्म्मुइति। उपस्तुवन्ति प्रशंसन्ति। रामदेवेन देववत् प्रभाशालिना रामेण वयं महाराजदशरथस्य विस्मारिताः विस्मृतिं प्रापिताः। दशरथादधिकगुणवान् राम इत्यर्थः उत्कृष्टवस्तुलाभे पूर्वलब्धनिकृष्टवस्तुविस्मृतिः स्वाभाविकीति भावः।

रामः। अर्थवाद एषः, दोषन्तु मे कञ्चित् कथय, येन स प्रतिविधीयते। (ध)

दुर्मु। साम्रम्। सुणादु देओ। कर्णे एवमिवम्। (न)

रामः। अहह! तीव्रसंवेगो वाग्वज्रः। इति मूर्च्छति। (प)

दुर्मु। आस्ससदु देओ। (फ)

---

(न)। शृणोतु देवः।

(फ)। आश्वसितु देवः।

महाराजदशरथस्येति "स्मृत्यर्थकर्म्मणी"ति कर्म्मणि षष्ठी।

(ध) राम इति। अर्थस्य गुणस्य वादः कथनमित्यर्थवादः प्रशंसेत्यर्थः। "अर्थवादः प्रशंसाचे"ति हलायुधः। केचित्तु प्रशंसानिन्दान्यतरस्य वादः कथनमर्थवादः। तथाच पूर्वमीमांसार्थसंग्रहे लौगाक्षिभास्करः।

"प्राशस्त्यनिन्दान्यतरपरं वाक्यमर्थवादः।" इति।

तथाचार्थवादः प्राधान्येन द्विविधः स्तुत्यर्थवादो निन्दार्थवादश्चेति। अत्र तु एष "विस्मारिता" इत्यादिना त्वयोक्तः अर्थवादः स्तुत्यर्थवादः प्रशंसाकथनमित्यर्थः। प्रतिविधीयते प्रतिकारः क्रियते विनाश्यत इति यावत्।

(न) दुर्मु इति। 'कर्णे एवमेव' मिति कविवचनं। एवमेवमित्यस्य दुर्म्मुखपाठ्यत्वेतु 'एव्व एव्व'मिति स्यात्। कर्णे कर्णसमीपे मुखमुपनीय एवमेवं ईदृशमीदृशं दुर्म्मुखोवदतीत्यर्थः। दुर्म्मुखेन निभृतमुक्तवचनन्त्वेतत् यथा "अस्माकं राजा राम एतावान् सरलबुद्धि र्यत् लङ्कायामेकाकिनी युवतिः सीतावस्थितेति दोषावश्यम्भावसम्भावनायामपि तेनासंशयमेव गृहीता सुतरामन्याय्यमेत"दित्यादिरूपं किञ्चित्। स्वाभाविकस्वरेणैतदुच्चारणे यदि कश्चिदन्यः शृणुयात्, सीता वा जागरिता शृणुयात्तदा महान् दोषः स्यादिति निभृतोक्तिज्ञापनार्थमुक्तं कर्ण इत्यादि।

(प)। अहहेति महाखेदसूचकमव्ययं। तीव्रो महान् सम्वेगो यस्य सः। वाक्

रामः। आश्वस्य। (व)

हा हा धिक् परगृहवासदूषणं यद्
वैदेह्याः प्रशमितमद्भुतैरुपायैः।
एतत्तत् पुनरपि दैवदुर्विपाका-
दालर्कं विषमिव सर्वतः प्रसृप्तम् ॥ ४१ ॥

तत् किमत्र मन्दभाग्यः करोमि। विमृश्य सकरुणं।

अथवा किमन्यत्। (भ)

दुर्मुखोक्तवाक्यमेव वज्र इतिरूपकालङ्कारः वज्रवत् महाप्रहारेण अतिदुःसहवेदनाकरत्वादिति भावः।

(व) आश्वस्य लब्धसंज्ञो भूत्वेत्यर्थः। आङ्पूर्वश्वसधातोरनुज्ञायां प्रयोग एव मूर्च्छारोगस्य महौषधमिति नाटककवयोमन्यन्तेस्मेति निर्णीयते; तथाच प्रायेण सर्वत्र "आश्वसिहि आश्वसितु" इत्युक्तिमात्र मेव मूर्च्छापन्नश्चैतन्यमापद्यत इति दृश्यते।

हाहेति। वैदेह्याः सीतायाः यत् परगृहवासदूषणं एकाकिन्या लङ्कावस्थानजनितदोषसंशयः अद्भुतैरुपायैः आश्चर्य्यैरग्निपरीक्षादिभिः साधनैः प्रशमितं दूरीकृतं, तदेतत् परगृहवासदूषणं दैवदुर्विपाकात् दुरदृष्टपरिणामात् अलर्कस्य चित्रकुक्कुरस्य इदं इत्यालर्कं विषमिव पुनरपि सर्वतः सर्वाङ्गेषु सर्वासु दिक्षुच प्रसृतं व्याप्तं। यथा चित्रकुक्कुरदंशविषं तदानीं मन्त्रौषधादिना उपशमितमपि कालान्तरे सर्वाङ्गेषु व्याप्तं सदुत्पद्यते, तद्वदग्निपरीक्षादिना सीतायाः परगृहवासदोषसंशयस्तदानीमपनीतोऽपि इदानीं सर्वदेशेषु व्याप्त इत्यर्थः।

तत्रोपमालङ्कारः। प्रहर्षिणीवृत्तं ॥ ४१ ॥

(भ) तदिति। तत्तस्मात्। प्राणाधिकसीतापरित्यागस्य कर्त्तुमशक्यत्वात् सीतारक्षणे च दारुणलोकापवादस्य दुःसहत्वात् एतयोर्मध्ये किं करोमीत्यर्थः। विमृश्य विविच्य। अन्यत् किं करोमीत्यर्थः। लोकसन्तोषाय सीतामेव त्यजामीति भावः।

सतां केनापि कार्य्येण लोकस्याराधनं व्रतम्।
यत् पूरितं (१) हि तातेन माञ्च प्राणांश्च मुञ्चता॥ ४२॥

सम्प्रत्येव भगवता वशिष्ठेन सन्दिष्टं। अपि च। (म)

यत्सावित्रैर्दीपितं भूमिपालैः—
लोकश्रेष्ठैः साधुशुद्धं चरित्रम्।
मत्सम्बन्धात् कश्मला किंवदन्ती
स्याच्चेदस्मिन् हन्त! धिङ्मामधन्यम्॥ ४३॥

---

सीतापरित्यागे युक्तिमाह सतामिति। सतां साधूनां केनापि अनिर्व्वचनीयेन दुष्करेणापीत्यर्थः कार्य्येण कर्म्मणा लोकस्य जनस्य आराधनं सन्तोषः व्रतं व्रतवदवश्यकर्त्तव्यमित्यर्थः। हि तथाहि तातेन वहुदर्शिना राज्ञा दशरथेन माञ्च प्राणांश्च मुञ्चता त्यजता सता यत् व्रतं पूरितं परिसमापितं। प्रतिज्ञाभङ्गे पापं मिथ्यावादितया प्रजानामविश्वासेनासन्तोषश्च स्यादिति विविच्य तातेन लोकानां सन्तोषायैव अहं निर्वासितः तच्छोकेन प्राणांश्च त्यक्ताः सुतरां मया लोकसन्तोषाय ततोऽल्पतरसीतापरित्याग एव कर्त्तव्य इति भावः।

अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः, तथा मुञ्चतेत्येकया क्रियया माञ्च प्राणांश्च इत्यनयोरन्वयात् तुल्ययोगिताचेत्यनयोरङ्गाङ्गिभावेन सङ्करालङ्कारः॥ ४२॥

सीतापरित्यागस्य कर्त्तव्यतायां युक्त्यन्तरमाह सम्प्रतीति। सम्प्रत्येव नतु वहुपूर्व्वं, येन विस्मृतिः स्यादिति भावः। सन्दिष्टं अष्टावक्रमुखेन "युक्तः प्रजानामनुरञ्जने स्या" इत्यनेन सर्व्वं विहायापि लोकानुरागवर्द्धनं कर्त्तव्यमिति वाचिकं प्रेरितमित्यर्थः। सुतरां वशिष्ठोपदेशोऽपि सीतापरित्यागपक्षमेव प्रमाणयतीति भावः। अपिच सीतापरित्यागे अन्यच्च युक्तिरस्तीत्यर्थः!

तद्युक्त्यन्तरमाह यदिति। सवितुः सूर्य्यस्यापत्यानीति सावित्राः तैः सूर्य्यवंशीयैः लोकश्रेष्ठैः भूमिपालैः यत् शुद्धं निर्म्मलं चरित्रं साधु सम्यक् दीपितं प्रकाशितं मासीत्,

---

(१) पूजितमिति क्वापि पाठः।

हा देवि! देवयजनसम्भवे! हा स्वजन्मानुग्रहपवित्रीकृत-वसुन्धरे! हा जनकवंशनन्दिनि! हा पावकवशिष्ठारुन्धती-प्रशस्तशीलशालिनि! हा रामैकजीविते! हा महारण्यवास-प्रियसखि! हा तातप्रिये! हा स्तोकप्रियवादिनि! कथमेवं विधायास्तवायमीदृशः परिणामः। (य)

चेत् यदि मत्सम्बन्धात् मम सम्पर्कात् अस्मिन् तस्मिन् चरित्रे कश्मला मलिना निन्दारूपेत्यर्थः किंवदन्ती जनश्रुतिः स्यात्। हन्त खेदे! तर्हि अधन्यं पापिनं मां धिक् निन्दामीत्यर्थः। सीताचरणे निन्दारूपजनश्रुतेरनिवार्य्यत्वात् सीतापरित्याग एवावश्यं कर्त्तव्य इति भावः।

"कश्मलं मलिने त्रिष्वि"ति हेमः।

शालिनीवृत्तं "मात्तौगौ चेच्छालिनी वेदलोकै"रिति लक्षणात्। ४३॥

एवं परित्यागस्यावश्यकर्त्तव्यत्वनिश्चयेन शोकोदयाद्विलपति हादेवीति। देवा इज्यन्ते पूज्यन्तेऽस्मिन्निति देवयजनं यज्ञस्थलं तस्मात् सम्भवति या तत्सम्बोधनं। अशुक्रशोणितजाततया वीजदोषोऽपि ते नास्तीति भावः। स्वस्या आत्मनो जन्मैवानुग्रहो दया तेन पवित्रीकृता वसुन्धरा पृथिवी यया सा। तथाच ब्रह्मवैवर्त्ते

"शतजन्मपुण्यवतां गृहे जाता पतिव्रता।
पतिव्रताप्रसूः पूता जीवन्मुक्तः पिता तथा।"

ईदृशपतिव्रतारत्नत्यागो दारुणदुःखकर इति भावः। जनकवंशनन्दिनि जनककुलानन्दकारिणि! धार्म्मिकस्यानन्दो धर्म्मेणैवोत्पद्यत इति महाधर्म्मवती त्वमिति भावः। पावकोवह्निः। पावकवशिष्ठारुन्धतीभिः प्रशंसितं यत् शीलं स्वभावः तेन शालत इति सा सीताचरित्रं अग्निना परीक्षाकाले वशिष्ठारुन्धतीभ्यान्तु सर्वदैव प्रशंसितमिति रामायणे द्रष्टव्यं। पावकः सर्वदेवमयः, वशिष्ठस्त्रिकालज्ञोब्रह्मर्षिः, अरुन्धती च पतिव्रताशिरोमणिः अतिसत्यवादिभिरमीभिर्यतस्त्वं प्रशंसिता, सुतरां त्वं परमपतिव्रता, नात्यत्र संशय इति भावः।

त्वया जगन्ति पुण्यानि त्वय्यपुण्या जनोक्तयः ।
नाथवन्तस्त्वयालोकास्त्वमनाथा विपत्स्यसे ॥ ४४ ॥

राम एव एकमद्वितीयं जीवितं जीवनं यस्याः सा, हा राममयजीवन इत्यर्थः सुतरामीदृश्याः परित्यागात् महती कृतघ्नता स्यादिति भावः। महारण्यवासप्रियसखि ! महावनवासेऽपि सहवर्त्तिनि ! या महारण्यवासे मम शुश्रूषार्थं अनावश्यकत्वेऽपि स्वयमेव सहचारिणी बभूव, तामेवाहमेकाकिनीं महारण्ये विसर्ज्जयामीति मत्तो जगत्यां कृतघ्नो नास्तीति भावः। हा तातप्रिये ! पितृप्रीतिकारिणि ! सुतरां तव परित्यागेन स्वर्गस्थो महागुरुः पितापि मां प्रति महाविरक्तो भविष्यतीति भावः। स्तोकमल्पं प्रियं प्रीतिकरञ्च वदितुं शीलं यस्याः सा, तेन त्वं ममातीव प्रीतिपात्रभूतासि, तेन तव परित्यागो हृदयविदारक इति भावः।

अत्र गद्यभागे परिकरालङ्कारः "उक्तिर्विशेषणैः साभिप्रायैः परिकरो मत" इति लक्षणात्।

एवंविधाया असाधारणनानागुणशालिन्या इत्यर्थः। अयं मया क्रियमाणः परित्यागरूपः। ईदृशोदारुण इत्यर्थः। परिणामः शेषफलं।

अत्रांशे विभावनाविशेषोक्त्योः सन्देहसङ्करालङ्कारः।

त्वयेति। त्वया करणभूतया जगन्ति भुवनानि पुण्यानि पादरजःस्पर्शादिना पवित्रभूतानि, किन्तु त्वयि अपुण्याः अपवित्राः दुष्टा इत्यर्थः जनोक्तयः 'लङ्कायामेकाकिनी स्थिता सीता कथं चरित्ररक्षणक्षमा आसी'देवम्भूता जनप्रवादा वर्त्तन्त इतिशेषः। तथा त्वया लोका नाथवन्तः अधिपतिशालिनः लक्ष्मीरूपत्वात् त्वमेव जनानां नाथा ईश्वरीत्यर्थः, किन्तु त्वं अनाथा प्रभुशून्या रक्षकरहितेति यावत् सती विपत्स्यसे वने विपदं प्राप्स्यसि। रामेण मनसि सीताया निर्वासनस्य निश्चितत्वात् "अनाथाविपत्स्यस" इत्युक्त-मिति बोध्यं।

अत्र पूर्व्वार्द्धे लोकचरित्रवैचित्र्याद्विरोधसमाधानं, परार्द्धेच ईश्वरेच्छयेति विरोधाभासोऽलङ्कारः।

तथा 'त्वयि त्व'मित्यनयोः परं तुशब्दः किन्तुशब्दो वा भेदज्ञापनार्थं, वाच्यः; किन्तु

दुर्म्मुखं प्रति। ब्रूहि लक्ष्मणम्, एष ते नूतनो राजा रामः समाज्ञापयति। कर्णे एवमेवं। (र)

दुर्म्मु। कधं दाणिं अग्गिपरिसुद्धाए गब्भपरिप्फुड़िद पवित्तर-

---

(ल) कथमिदानीं अग्निपरिशुद्धाया गर्भपरिस्फुटितपवित्ररघुकुलसन्तानाया देव्या दुर्जनवचनादेवमनार्य्यमध्यवसितं देवेन ?।

---

नोक्त इति वाच्यानभिधानदोषः; सच 'त्वया जगन्ति पुण्यानि वाचोऽपुण्यास्तु ते नृणाम्' इतिपाठेन 'लक्ष्मनाथा' इति पाठेन च समाधेयः।

पतिव्रतायाः पादरजःस्पर्शे पृथिव्याः पवित्रत्वे प्रमाणं यथा—

ब्रह्मवैवर्त्तपुराणे—"सतीनां पादरजसा सद्यः पूता वसुन्धरा।

पतिव्रतां नमस्कृत्य मुच्यते पातकान्नरः।"

सीताया लक्ष्मीरूपत्वे प्रमाणं यथा पद्मपुराणे—

"अथ लोकेश्वरी लक्ष्मी र्जनकस्य पुरे स्वतः।

शुभक्षेत्रे हलोत्खाते तारेचोत्तरफल्गुने"। इत्यादि। ४४।

(र) नूतनः अदृष्टपूर्वाश्रुतपूर्वकर्म्मा इत्यर्थः। य एवमग्निपरीक्षया निर्दोषतया निश्चितां आसन्नप्रसवां अभिन्नहृदयां एकान्तविश्वासकारिणीं परमप्रियतमां निर्वासयितु मर्हति, स नूतन एवेति भावः। इयन्तु गभीरविषादाक्षेपोक्तिः। कर्णे दुर्म्मुखस्य कर्ण-समीपे मुखमुपनीय एवमेवमाहेत्यर्थः। तद्वचनन्तु यथा "सम्प्रत्येव सीता पञ्चवटी-दर्शनाय आग्रहं कृतवती, अतएव तत्प्रदर्शनच्छलेन रथेन तत्र नीत्वा विसर्ज्य द्रुतं निवृत-स्त्वागच्छ" इति इत्येव लक्ष्मणं ब्रूहीत्यर्थः।

अत्र 'नितान्तनीचजातीयस्य कस्यचित् सामान्यकिङ्करस्य वचनविश्वासेन सीतापरि-त्यागो रामस्य विचारनैपुण्यशून्यतां अवैधोपायेनाप्युत्पन्नयशःप्रियताञ्च प्रकटयति" इति केचिदिदानीन्तनाः शिक्षितम्मन्याः समालोचका रामचरित्रे दोषमारोपयन्ति; नतु जानन्ति ते, यत्, इदानीमिव तदानीं नासन् प्रायेण मिथ्यावादिनः, येन रामस्य दुर्म्मुख-

हुउलसन्ताणाए देईए दुज्जणवअणादो एव्वं अणज्जं अज्झव-
सिदं देवेण ?। (ल)

राम:। शान्तम्। कथं दुर्जनाः पौरजानपदाः। (व)

इक्ष्वाकुवंशोऽभिमतः प्रजानां
जातञ्च दैवाद्वचनीयवीजम्।
यच्चाद्भुतं कर्म्म विशुद्धिकाले
प्रत्येतु कस्तद्भुवि (१) दूरवृत्तम् ?॥ ४५॥

---

वचने संशयो भवेत्, अपिच सीताहरणस्य श्रुतत्वात् अग्निपरीक्षायाश्चाश्रुतत्वात् लोकापवादो रामेणानुमितोपीत्यलं पल्लवितेन।

(ल)। गर्भे परिस्फुटितः प्रकाशितः पवित्रो रघुकुलसन्तानो यस्याः तस्याः गर्भिणी मरणसम्भवे गर्भनाशावश्यम्भावात् गुरुतरपातकमेतदिति भावः। अनार्य्यं असाधु, अध्यवसितं निश्चितं अत्यन्तासङ्गतमेतदिति भावः।

(व) राम इति। शान्तं विरतं भवतु इति शेषः प्रजाम्प्रति तव दुर्जन इति वाक्यं नवाच्य मित्यर्थः।

पौरजानपदानामदुर्ज्जनत्वं प्रतिपादयितुमाह इक्ष्वाक्विति। प्रजानां इक्ष्वाकुवंशः अभिमतः राजत्वेन अभीष्टः अतएव इक्ष्वाकुवंशीयं मां प्रति स्वभावतो विद्वेषवशात् अपवादं घोषयन्तीति न सम्भवतीति भावः। तर्हि कथमपवादं कुर्वन्तीत्याह, दैवात् दुरदृष्टवशात् वचनीयबीजं लङ्कायामेकाकिन्या अवस्थानरूपं निन्दाकारणं जातं सुतरां प्रकृष्टकारणं प्राप्यैव अपवदन्ति कथमन्यथा तदपवादविषयपरिहारः स्यादिति भावः।

अग्निपरीक्षया सीताचरित्रविशुद्धिं विश्वस्य अपवादान्निवर्त्तन्ता मितिचेत्तत्राह, विशुद्धिकाले अग्निपरीक्षया निर्दोषत्वप्रतिपादनसमये यच्च अद्भुतं स्वयमग्निर्देवेन सीतामङ्के निधाय तस्या निर्दोषत्वं सुखेनैव यत् प्रतिपादितं तादृशं आश्चर्य्यं कर्म्म आसीदिति शेषः दूरवृत्तं अतिदूरवर्त्तिलङ्कायां जातं तत् कर्म्म भुवि पृथिव्यां को जनः प्रत्येतु विश्वसितु अपि तु

---

(१) कस्तद्ब्रवीति इति क्वापि पाठः।

तद्गच्छ ।

दुर्म्मु। हा देइ ! । इति निष्क्रान्तः । (अ)

रामः। हा कष्टमतिवीभत्सकर्म्मा नृशंसोऽस्मि संवृत्तः । (ष)

शैशवात् प्रभृति पोषितां प्रियां
सौहृदादपृथगाश्रयामिमाम् । (१)

(अ)। हा देवि ? ।

कोऽपि नेत्यर्थः। दूरवृत्तस्य प्रत्यक्षाभावात् लोकपरम्परया श्रवणस्य तु प्रायेणैवालीकत्वाच्च तदविश्वासो न दोषायेति भावः।

अत्र यतो दूरवृत्तं अतः कः प्रत्येत्विति प्रत्ययाभावं प्रति दूरवृत्तत्व पदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमुक्तार्थापत्तिश्चालङ्कारः।

अभिमतइति "आनुवन्धमती"त्यादिना वर्त्तमाने क्तः। प्रजानामिति "वर्त्तमानाधिकरणयोः सौव" इति कर्त्तरि षष्ठी।

इन्द्रवज्रा वृत्तं ॥ ४५ ॥

(ष) राम इति। अतिबीभत्सं अकारणसङ्घार्य्यापरित्यागात् अतिनिन्दनीयं कर्म्म यस्य स तथोक्तः। नृशंसः क्रूरः।

नृशंसतां प्रति कारणमाह शैशवादिति। शैशवात् प्रभृति बाल्यकालादवधि पोषितां पालितां प्रियां प्रीतिकरीं सौहृदात् प्रणयात् अपृथगाश्रयां एकस्थानस्थितां इमां सीतां सौनिकः पशुपक्षिमांसविक्रयकारी (कषाइ इति यस्य प्रसिद्धिः) गृहशकुन्तिकां गृहपालितपक्षिणीमिव छद्मना कपटतया मृत्यवे मारणाय परिददामि अर्पयामि। अनन्तहिंस्रसमाकुले महारण्ये निर्वासनात् मरणमस्या अवश्यम्भावीति परमप्रियतमाया ईदृशमरणसम्पादकादन्यः कोनाम नृशंसोऽस्तीति भावः।

अत्र पूर्णोपमालङ्कारः, तेनाहमतीव कदर्य्य इति ध्वन्यत इत्यलङ्कारेण वस्तुध्वनिः।

(१) अपृथगाश्रयामिमामिति पाठान्तरं ।

छद्मना परिददामि मृत्यवे
सौनिको गृहशकुन्तिकामिव ॥ ४६ ॥

तत् किमित्यस्पर्शनीयः पातकी देवीं दूषयामि। (स)

सीतायाः शिरः स्वैरमुन्नमय्य बाहुमाकर्षन्। (ह)

अपूर्वकर्म्मचाण्डालमयि मुग्धे ! विमुञ्च माम्।
श्रितासि चन्दनभ्रान्त्या दुर्विपाकं विषद्रुमम् ॥ ४७ ॥

सूनया प्राणिहिंसया संसृष्ट इति सौनिकः "तेन दीव्यती"त्यादिना इकन्। "मैंसिकः सौनिकश्च मांसिकः कौठिकस्तथे"ति हेमः।

रथोद्धता वृत्तं ॥ ४६ ॥

(स) तदिति। अस्पर्शनीयः स्पर्शायोग्यः। पातकी अपतितभार्य्यापरित्यागेन पातित्यजनकपापवान्। देवीं सीतां देवीवत् सच्चरित्रामिति भावः। दूषयामि स्पर्शेन अपवित्रां पापिनीं वा करोमि।

अपतितपरित्यागे पातित्यमाह गौतमः। "ब्रह्महा-सुराप-गुरुतल्पग-पितृमातृ-सुतत्यागि - पितृमातृयोनिसम्बन्धाग-स्तेन-नास्तिक-निन्दितकर्म्माभ्यासि-पतिताऽत्यागयपतित-त्यागिनश्च पतिताः।"

पतितस्पर्शे स्नानमाह मनुः—

दिवाकीर्त्तिमुदक्याञ्च पतितं सूतिकां तथा।
शवं तत् स्पृष्टिनञ्चैव स्पृष्ट्वा स्नानेन शुध्यति।"

पतितस्पर्शेतु तत् पापसंक्रममेवाह गरुड़पुराणं—

"आलापाद् गात्रसंस्पर्शात् संवासात् सहभोजनात्।
आसनाच्छयनाद् यानात् पापं संक्रमते नृणाम्।"

(ह) सीताया इति। स्वैरं मन्दं उन्नमय्य उत्थाप्य।

अपूर्वेति। अयि मुग्धे ! सरलबुद्धिशालिनि ! न तु सज्जनदुर्जनविवेकशालिनी-त्यर्थः, अपूर्वं : अदृष्टपूर्वाश्रुतपूर्व इत्यर्थः, कर्म्मणा कृतघ्नतानृशंसव्यवहारादिना कार्य्येण

उत्थाय । हन्त ! विपर्य्यस्तः सम्प्रति जीवलोकः, अद्य वसितं जीवितप्रयोजनं रामस्य, शून्यमधुना जीर्णारण्यं जगत्, असारः संसारः, कष्टप्रायं शरीरं । अशरणोऽस्मि, किं करोमि, का गतिः, क्व गच्छामि । अथवा ( च )

चाण्डालः, नतु जात्या चाण्डालः तं कृतघ्नतादिकर्म्मणा यद्यपि केचित् रत्नाकरादयः कर्म्म-चाण्डाला आसन्, तथापि ईदृशभार्य्यापरित्यागात् कदर्य्यातिकदर्य्यः कर्म्मचाण्डालः कश्चिदपि नासीत् नवा वर्त्तत इति अपूर्वपदप्रयोगस्याभिप्रायः । मां विमुञ्च स्वयमेव परित्यज । कथ-मित्याह चन्दनभ्रान्त्या चन्दनतरुभ्रमेण दुष्टोविपाकः परिणामफलं मरणमित्यर्थः यस्य तं विषद्रुमं विषवृक्षं श्रितासि अवलम्बितवत्यसि । सत्पुरुषभ्रमेण अतिदुर्जनं मां पतित्वेन प्राप्तवतीत्यर्थः । सुतरां तत्परित्याग एव श्रेयानिति भावः ।

अत्र वस्तुतश्चन्दनभ्रमेण विषवृक्षाश्रयाभावात् वाक्यार्थोऽसम्भवन् चन्दनभ्रमेण विष-वृक्षाश्रय इव सत्पुरुषभ्रमेण अतिदुर्जनाश्रयः कृत इति विम्बप्रतिविम्बभावं वोधयतीति असम्भवद्वस्तुसम्बन्धा निदर्शना, तथा त्यागं प्रति विषवृक्षाश्रयस्य हेतुत्वात् कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासश्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः । ४७ ।

( च) हन्तेति । हन्त खेदे । जीवलोकः सजीवपदार्थः । विपर्य्यस्तः विपरीतः सम्वृत्तः । पूर्व्वं य एव लक्ष्मणादयो दासीदासादयश्च त्वया सहैकत्रावस्थाने परमस्नेहालापव्यवहारा-दिना उत्तरोत्तरवर्द्धमानसुखकरा आसन्, त एवेदानीं तवाभावेन तव स्मृतेरुत्थापकतया क्रमिकवर्द्धमानदुःखसाधका भवेयुरित्यर्थः । अद्य सीतापरित्यागदिने रामस्य जीवितप्रयोजनं जीवनोद्देश्यं ऐहिकसुखमित्यर्थः पर्य्यवसितं परिसमाप्तं इतः परं तव शोकेन सर्वदैव सर्वथा दुःखस्यैवावश्यम्भावादिति भावः । जीर्णारण्यं जीर्णं शुष्कविरलवृक्षप्रायं अरण्यमिव जगत् भुवनं शून्यं शून्यमिवेत्यर्थः तव शोकजनितदुःखस्यैव सर्व्वामोदनिवारकतया आश्वास-साधकपदार्थाभावादिति भावः । निविड़ारण्ये नवपत्रपल्लवदर्शनादिना कियानाश्वासः सम्भवति, शुष्कारण्ये तु विषाद एवेति ज्ञापनाय जीर्णपदं प्रयुक्तमिति बोध्यं । न विद्यते सारो वर उत्कृष्टपदार्थः सुखमिति यावत् यस्मिन् सः असारः संसारः जगत् सुखशून्यं

दुःखसम्वेदनायैव रामे चैतन्यमर्पितम्। (१)
मर्म्मोपघातिभिः प्राणै र्वज्रकीलायितं स्थिरैः (२)॥ ४८॥

हा अम्ब अरुन्धति! हा भगवन्तौ वशिष्ठविश्वामित्रौ! हा भगवन् पावक! हा देवि भूतधात्रि! हा तात जनक! हा तात! हा मातरः! हा प्रियसख महाराज सुग्रीव! हा सौम्य हनूमन्! हा परमोपकारिन् लङ्काधिपते विभीषण! हा सखि त्रिजटे! दूषिताः स्थ, परिभूताःस्थ रामहतकेन। अथवा कोनामाहमेतेषामाह्वाने? (क)

जगदित्यर्थः। सीताऽभावेन सर्व्वस्यैव दुःखत्वादिति भावः। कष्टप्रायं दुःखबहुलं एतेन किञ्चित् सुखमस्तीति विज्ञायते तत्तु वैराग्येन वनवासादौ न तु गृह इति भावः। अशरणः रक्षकशून्योऽस्मि दारुणदुःखहस्तादिति भावः। का गतिरुपायः आश्वासं प्रतीति भावः। अथवा किम्वा आश्वासोपायान्वेषणं निस्फलमित्यर्थः।

कुत इत्याह। दुःखसम्वेदनायैव कष्टानुभवायैव रामे मयि चैतन्यं अर्पितं निहितं विधिनेति शेषः। मर्म्म जीवस्थानं उपहन्तुं प्रहर्त्तुं शीलं येषां तैः स्थिरैः अपसारयितुं इष्यमाणेरपि निश्चलैः प्राणैः वज्रकीलं वज्रनिर्म्माणसाधनवस्तुनिर्म्मितशङ्कुः (पेरेक इति यस्य प्रसिद्धिः) तेन इव आचरितमिति वज्रकीलायितं। नितान्तकठिनतया वज्रकीलं यथा कथमप्यपसारयितुं न शक्यते, तथा दारुणदुःखयातनयापि प्राणा न यान्तीत्यर्थः। प्राणानां सद्भाव एव मर्म्मपीड़ा स्यात्तु प्राणाभाव इति प्राणा एव मर्म्मोपघातिन इति भावः।

अत्र पूर्व्वार्द्धे एवशब्दोध्रुवशब्दसमानार्थ स्तेन वाच्या भावाभिमानिनी क्रियोत्प्रेक्षा, द्वितीयार्द्धेतु क्यचा सादृश्यबोधनादुपमालङ्कारः अनयोस्तिलतण्डुलवत् संसृष्टिः।

"मर्म्म जीवस्थान"मिति राजनिर्घण्टः॥ ४८॥

(क) हा अम्बेति। पावक! वह्ने!। भूतधात्रि! पृथिवि! तात! दशरथ! मातरः कौशल्यादयः? त्रिजटा नाम काचित् राक्षसी लङ्कावस्थानकाले सीतायास्तत्राव-

(१) आहितमिति क्वापि पाठः। (२) हृदीति पाठान्तरं।

ते हि मन्ये महात्मानः कृतघ्नेन दुरात्मना ।
मया गृहीतनामानः स्पृश्यन्त इव पाप्मना ॥ ४८ ॥

धानकारिणी सकलभयनिवारिणी सान्त्वनाकारिणी आसीत्, परमोपकारित्वात्तस्याः सम्बोधनं । दूषिताः स्थ, परिभूता अवमानिताः स्थ, सीतापरित्यागेन यूयमिति शेषः। तथाच सर्वैरेव युष्माभिः नितान्तनिर्मलचरित्रतया सीतायाः प्रशंसा कृता, इदानीं तस्या एव चरित्रदोषापवादेन परित्यागात् मया सर्वेषामेव मिथ्यावादित्वदोषः प्रतिपादितः, वाक्याविश्वासेन अवमानना च कृतेति भावः। हतः पातित्यजनकसद्भार्य्यापरित्यागपापेन नष्टप्रायः, हतएव हतकः कुत्सायां कप्रत्ययः रामश्चासौ हतकश्चेति रामहतकः अभिधानादि विशेषणस्य परनिपातः। आह्वाने सम्बोधने अहं कः अपितु कोऽपि न, अनधिकारीत्यर्थः।

अत्र हेतुमाह ते हीति। हि यस्मात् कृतघ्नेन सीतायाः प्रशंसोद्गारादिना महोपकारिणां तेषां दोषावमानाभ्यामपकारिणेत्यर्थः। दुरात्मना अपतितभार्य्यात्यागात् पापात्मना मया गृहीतानि उच्चारितानि नामानि येषां ते तथोक्ताः ते अरुन्धत्यादयो महात्मानः पुरुषवन्तः पाप्मना पापेन स्पृश्यन्ते सम्बध्यन्त इव इत्यहं मन्ये।

अत्र भावाभिमानिनी वाच्या क्रियोत्प्रेक्षाऽलङ्कारः, तथा पापस्पर्शं प्रति मया गृहीत नामत्वं हेतुरिति पदार्थहेतुकं काव्यलिङ्गञ्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः।

कृतघ्नमाह प्रायश्चित्ततत्त्वधृतस्कान्दपुराणं—

"कृतस्य दोषं वदति सकामान्न करोति यः।
न स्मरेच्च कृतं यस्तु आग्रमान् यस्तु दूषयेत्।
सर्व्वांस्तानृषिभिः सार्द्धं कृतघ्नानब्रवीन्मनुः।"

कृतघ्नस्य प्रायश्चित्तानपनेयपापत्वमपि तत्रैवोक्तं, यथा—

"ब्रह्मघ्ने च सुरापे च चौरे च गुरुतल्पगे।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः॥" ४८

योऽहं

विस्रम्भादुरसि निपत्य लब्धनिद्रा-
मुन्मुच्य प्रियगृहिणीं गृहस्य शोभाम् ।
आतङ्कस्फुरितकठोरगर्भगुर्वीं
क्रव्याद्भ्यो बलिमिव निर्घृणः क्षिपामि ॥ ५० ॥

सीतायाः पादौ शिरसि कृत्वा । देवि ! देवि ! अयं पश्चिमस्ते रामस्य शिरसि पादपङ्कजस्पर्शः । इति रोदिति । ( ख )

विस्रम्भादिति । निर्घृणः निर्दयः विस्रम्भात् 'अयं मम प्रियतमः पति'रिति विश्वासात् उरसि वक्षसि निपत्य स्थित्वा लब्धनिद्रां गृहस्य शोभां लक्ष्मीस्वरूपां आतङ्केन कयाचित् शङ्कया आतङ्कजनितदीर्घश्वासेनेत्यर्थः स्फुरितः कम्पितः कठोरः पूर्णो यो गर्भस्तेन गुर्वीं भारवती तां प्रियगृहिणीं प्रियतमां भार्य्यां उन्मुच्य उत्तोल्य क्रव्याद्भ्यो मांसभोजिजन्तुभ्यः व्याघ्रादिभ्यः इत्यर्थः बलिमिव खाद्यमिव क्षिपामि अर्पयामि । इतोऽधिका का नाम नृशंसताऽस्तीति भावः ।

अत्रोपमालङ्कारः ।

क्रव्यं मांसमदन्तीति क्रव्यादः "क्रव्येचेति अत्तेः क्विप् ।

"कारुण्यं करुणा घृणा" इत्यमरः ।

प्रहर्षिणी वृत्तं ॥ ५० ॥

( ख ) सीताया इति । कृत्वा अर्पयित्वा । रामस्य शिरसि ते तव पादपङ्कजस्पर्शः अयं पश्चिमः शेषः नातःपरं पुनर्भविष्यतीत्यर्थः ।

ननु रामस्य शिरसि सीतायाः पादस्थापनं नितान्तमनुचितमिव प्रतिभाति ।

"गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः ।
पतिरेको गुरुःस्त्रीणां सर्वस्याभ्यागतोगुरुः ।"

इत्यङ्गिरोवचनेन रामस्य सीताया महागुरुत्वादिति चेत् सत्यं—

नेपथ्ये। अब्रह्मण्यम् अब्रह्मण्यम्। (ग)

रामः। ज्ञायतां भोः! किमेतत्। (घ)

पुनर्नेपथ्ये। ऋषीणामुग्रतपसां यमुनातीरवासिनाम्।

लवणत्रासितः स्तोमस्त्रातारं (१) त्वामुपस्थितः॥ ५१॥

रामः। आः! कथमद्यापि राक्षसत्रासः? तद् यावदस्य दुरात्मनः कुम्भीनसीपुत्रस्य समुन्मूलनाय शत्रुघ्नं प्रेषयामि। कतिचित् पदानि गत्वा पुनः प्रतिनिवृत्य। हा देवि! कथमेवंविधा गमिष्यसि। भगवति! वसुन्धरे! श्लाघ्यां दुहितरमवेक्षस्व जानकीम्। (ङ)

---

"पृथिव्यां यानि तीर्थानि सतीपादेषु तान्यपि।
तेजश्च सर्वदेवानां मुनीनाञ्च सतीषु च।"

इतिस्मृतेर्यदा यदेव सीतायां महासतीज्ञानं तदा तदैव शिरसा रामेण तत्पदपङ्कज-स्पर्शाः कृताः, अयन्तु तेषां शेष इति दिक्।

(ग) नेपथ्य इति। ब्रह्मणे विप्राय हितं ब्रह्मण्यं, न ब्रह्मण्यं अब्रह्मण्यं ब्राह्मणानामहितं उत्पात इत्यर्थः। उपस्थितमिति शेषः।

"वेदस्तत्त्वं तपोब्रह्म ब्रह्माविप्रः प्रजापति"रित्यमरः।

(घ) राम इति। एतदुक्तं किं कथमिति ज्ञायतामित्यर्थः। परिजनानुद्दिश्य रामस्योक्तिरियं।

ऋषीणामिति। उग्रं घोरं दुश्चरं तपो येषां तेषां यमुनातीरवासिनां ऋषीणां स्तामः समूहः लवणेन लवणाख्यराक्षसविशेषेण त्रासितः भयं प्रापितः सन् त्रातारं रक्षकं त्वां उपस्थितः। लवणादात्मनो रक्षयितुं तव समीपमागत इत्यर्थः॥ ५१॥

(ङ) राम इति। आ इति कोपसूचकमव्ययं तथाच "आस्तु स्यात् कोपपीड़यो"रित्यमरः। अद्यापि रावणबधादव्यवहितपरकालेऽपि। सानुचरसवंशरावणबधेन विरोधिनो राक्षसा भयेन शान्तिमुपगताः, अनुकूलास्तु पूर्वस्मादेव सनातनधर्माविरोधि

---

(१) शरण्यं इति क्वचित् पाठः।

जनकानां रघूनाञ्च यत्कृत्स्नं गोत्रमङ्गलम् ।
यां (१) देवयजने पुण्ये पुण्यशीलामजीजनः ॥ ५२ ॥

इति निष्क्रान्तः ।

सीता । हा सोम्म अज्जउत्त ! कहिंसि ? । सहसोत्थाय । हद्दी हद्दी ! दुस्सिविण रणरणअविप्पलद्धाहं अज्जउत्तं आक्कन्दामि

---

वर्त्तन्ते सुतरां अस्मिन् समये राक्षसत्रासः असम्भव एवेति भावः । दुरात्मनः कर्मणा विरुद्धाचरणेन पापात्मनः । कुम्भीनसी नाम काचित् राक्षसी तत्पुत्रस्य लवणस्येत्यर्थः । समुन्मूलनाय सम्यगुच्छेदाय । तथाच रामायणे

"तस्य पत्नी महाभागा प्रिया कुम्भीनसीति या ।
विश्वावसोरपत्यं सा ह्यनलायां महाप्रभा ॥
तस्याः पुत्रो महावीर्य्यो लवणो नाम दारुणः ।
वाल्यात्प्रभृति दुष्टात्मा पापान्येव समाचरत् ॥"

अभिज्ञानशकुन्तले शकुन्तलाया विरहविधुरस्य राज्ञोदुष्मन्तस्य विलापमाकर्ण्य तस्य समुत्तेजनार्थं यथा मातलि विदूषकनिपीड़न-वृतान्तो ग्रथितः तथाऽत्रापि सीताशोक-कातरस्य रामस्य समुत्तेजनार्थमयमंशः कविना निबद्ध इति तस्य छायाग्रहणमिवैतदिति प्रतिभाति ।

एवं विधा गर्भभरालसा । श्लाघ्यां सच्चरितादिभिः प्रशस्यां ।

जनकानामिति । जनकानां जनकवंश्यानां रघूनां रघुवंश्यानाञ्च यत् वस्तु कृत्स्नं सकलं गोत्रमङ्गलं वंशस्य मङ्गलस्वरूपं तथा यां पुण्यशीलां पुण्ये पवित्रे देवयजने यज्ञस्थले अजीजनः, त्वं उत्पादितवती ; तां दुहितरं अवेचस्व इति पूर्व्वेणान्वयः ।

अत्र पूर्व्वार्द्धे निरङ्गं केवलं रूपकमलङ्कारः ।

सीतायाः प्राप्त्यनन्तरमेव जनकरघुवंश्ययोः प्रभूतमङ्गलोत्पत्तेः कृत्स्नं गोत्रमङ्गलमित्युक्तं ॥ ५२ ॥

---

( १ ) तां इति पाठान्तरं

हद्धी हद्धी! कधं एआइणी मं उज्झिअ अज्जउत्तो गदो, ता किं दाणिं एदं, भोदु, तस्स कुविस्सं जइ तं पेक्खन्ती अत्तणो पहविस्सं। को एत्थ परिजणो?। (च)

प्रविश्य दुर्मुखः। देइ! कुमारलक्खणोविस्सवेदि, सज्जो रहो, आरोहदु देईत्ति। (छ)

सीता। इअमहं आरुहह्मि। उत्थाय परिक्रम्य। परिप्फुरदि विअ मे गब्भभारो, ता सणिअं गच्छह्म। (ज)

---

(च)। हा सौम्य आर्य्यपुत्र? कासिन्नसि? हा धिक् हा धिक् दुःस्वप्नरणरणकविप्रलब्धाहं आर्य्यपुत्रं आक्रन्दामि। हा धिक् हा धिक्! कथमेकाकिनीं मां उज्झित्वा आर्य्यपुत्रो गतः, तत् किमिदानीमेतत्? भवतु, तस्य कोपिष्यामि यदि तं प्रेक्षमाणा आत्मनः प्रभविष्यामि। कोऽत्र परिजनः?।

(छ)। देवि! कुमारलक्ष्मणो विज्ञापयति, सज्जो रथः, आरोहतु देवीति।

(ज)। इयमहमारोहामि। परिस्फुरतीव मे गर्भभारः, तत् शनैर्गच्छामः।

---

(च) सीतेति। 'हा सौम्य आर्य्यपुत्र! कासिन्नसि' इत्यन्तः स्वप्नप्रलापः। हा धिगित्यादिना तदेव प्रकटयति। दुःस्वप्ने यः रणरणक उद्वेग स्तेन विप्रलब्धा 'रामोऽत्र नास्ती'त्येवंरूपेण प्रतारिता अहं आर्य्यपुत्रं रामं आक्रन्दामि आह्वयामि "क्रन्दने रोदनाह्वाने" इत्यमरः। नतु वस्तुत एवार्य्यपुत्राह्वानप्रयोजनमस्तीति भावः। इतस्ततो दृष्टिपातेन राममनवलोक्याह हा धिगित्यादि। उज्झित्वा परित्यज्य। एतत् मामेकाकिनीं परित्यज्य गमनं, किं कथं ज्ञातमितिशेषः। तन्न जानामीति भावः। तस्य कोपिष्यामि रामं प्रति कपटकोपं करिष्यामीत्यर्थः। प्रेक्षमाणा पश्यन्ती आत्मनः प्रभविष्यामि स्वाधीना स्थातुं शक्ष्यामीत्यर्थः। रामस्य रूपलावण्यदर्शनात् सर्वदैवाहमवशात्मा विस्मृतसकलहृदय भावा भवामि सुतरां निर्द्दिष्टकोपं कर्त्तुं शक्नोमि नवेति महान् संशय एवेति भावः।

(छ) प्रविश्येति। सज्जः सम्भृतः गमनोपकरणादिना संयुक्तः।

(ज) सीतेति। परिस्फुरतीव चलतीव। शनैः मन्दं मन्दं।

दुर्मु। इदो इदो देई। (झ)

सीता। णमोणमो तवोधणाण, णमोणमो रहुउलदेवदाणं, णमोणमो अज्जउत्तचरणकमलाणं, णमो णमो सअलगुरुअणाणं। (ञ)

इति निष्क्रान्ताः सर्वे। (ट)

## इति चित्रदर्शनो नाम प्रथमोऽङ्कः॥ (ठ)॥

(झ) इत इतो देवी।

(ञ)। नमोनमस्तपोधनानां, नमोनमो रघुकुलदेवतानां, नमोनम आर्य्यपुत्र-चरणकमलानां, नमोनमः सकलगुरुजनानां।

(झ) दुर्म्मुइति। इत इतः अस्मात् अस्मात् स्थानात् देवी आगच्छतु इति शेषः।

(ञ) सीनेति। तपोधनानामित्यादौ सर्व्वत्र "चतुर्थ्यर्थे षष्ठी"ति पिङ्गलसूत्रेण षष्ठी। आर्य्यपुत्रचरणकमलानामिति गुरुत्वाद्बहुवचनं।

"माङ्गल्यपुष्परत्नाद्यैः पूज्याननभिवाद्य च।
न निष्क्रमेद् गृहात् प्राज्ञः सदाचारपरो नरः॥"

इतिज्योतिषतत्त्वधृतवचनादत्र पूज्यानामभिवादनं कृतमिति बोध्यं।

(ट)। सर्व्वे सीतादुर्म्मुखपरिजनाः। राजमहिष्याः सीतायाः शरीररक्षार्थं तूष्णीम्भूतबहुतरपरिजनसम्भवात् केवलसीतादुर्म्मुखयोः प्रत्यक्षत्वेऽपि निष्क्रान्ताः सर्व्वे इत्युक्ति र्नासङ्गता।

(ठ) इतीति। चित्रस्य दर्शनं यत्र सः। नाम प्रसिद्धः। अङ्कः परिच्छेद समाप्त इतिशेषः। एवमन्यत्रापि व्याख्येयं।

"प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः।" इत्यादि

"अन्तर्निष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्त्तितः।" इत्यन्तमङ्कलक्षणं साहित्यदर्पणे द्रष्टव्यमिति।

इति श्रीहरिदाससिद्धान्तवागीशविरचितायामुत्तररामचरितटीकायां
सर्व्वार्थबोधिनीसमाख्यायां प्रथमाङ्कविवरणं समाप्तं ॥ ० ॥





# द्वितीयोऽङ्कः ।

नेपथ्ये । **स्वागतं तपोधनायाः ?। (क)**

प्रविश्याध्वगवेशा तापसी । **अये ! वनदेवतेयं फलकुसुमपल्लवार्घेण मामुपतिष्ठते । (ख)**

---

(क) नेपथ्य इति। तप एव धनं प्राधान्येनोपार्जनीयं यस्यास्तस्याः स्वागतं सुखेन आगमनं किमु इति काकुः तवागमने कोपि क्लेशो न जातः किमित्यर्थः।

(ख)। प्रविश्येति। अध्वगवेशा पथिकवेशा दण्डच्छत्रधारिणीत्यर्थः। वनदेवता वनाधिकारिणी तपःप्रभाववती काचन मानवी सन्न्यासिनी। सा चेयं पञ्चवटीवाससमये सीतया सार्द्धं सखित्वं कृतवती वासन्ती च नामेति तृतीयाङ्के व्यक्तीभविष्यति। फलकुसुमपल्लवैर्विरचितमर्घ्यं तेन। उपतिष्ठते उपास्ते। "पथ्याराधनयोश्चे"त्यात्मनेपदं। यद्यपि

"सिद्धार्थमक्षतञ्चैव दूर्वां च तिलमेव च।
यवं गन्धं फलं पुष्पं अष्टाङ्गं त्वर्घ्यमुच्यते॥"

इति महाकपिलपञ्चरात्रादिवचनात् अष्टाङ्गार्घ्यं सम्भवति; किन्तु फलकुसुमपल्लवरूपद्रव्यत्रयात्मकमर्घ्यं क्वापि न दृश्यते, तथापि यथालाभोपपन्नद्रव्यकल्पितार्घ्यस्यापि देयत्व-

प्रविश्य वनदेवता। अर्घ्यं विकीर्य्य (ग)

यथेच्छं भोग्यं (१) वो वनमिदमयं मे सुदिवसः
सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति।
तरुच्छाया तोयं यदपि तपसो (२) योग्यमशनं
फलं वा मूलं वा तदपि न पराधीनमिह वः॥ १

वचनादत्र वनभूमिसुलभैरष्टाङ्गार्घ्यान्तर्गतैः फलकुसुमपल्लवैः कल्पितमर्घ्यमभिहितमिति न दोषः। तथाच गन्धर्वतन्त्रे

"उक्तानुक्तैस्तथापुष्पै र्जलजैः स्थलजैरपि।
पत्रैः सर्वैर्यथालाभं भक्तिमान् सततं यजेत्॥"

(ग) प्रविश्येति। विकीर्य्य निक्षिप्य तापसीं प्रतीतिशेषः।

यथेच्छमिति। इदं वनं वो युष्माकं यथेच्छं यथाभिलाषं भोग्यं व्यवहार्य्यं। तथा अयं विद्यमानो दिवस इत्यर्थः मे मम सुदिवसः शुभदिनं तव समागमादितिशेषः। कथमित्याह हि यस्मात् सतां लोकानां सद्भिः साधुभिः सङ्गः संसर्गः कथमपि अनिर्व्वचनीयेनेत्यर्थः पुण्येन भवति। वनस्य यथेच्छभोग्यत्वं प्रति हेतुमाह तरुच्छायेति इह वने तरुच्छाया, तोयं जलं, तपसो योग्यं तपस्विनामुचितं फलं वा मूलं वा यदपि अश्यत इत्यशनं भोजनीयमस्तीति शेषः तदपि सर्वं वो युष्माकं न पराधीनं न परानुमत्यपेक्षमित्यर्थः स्वकीयमिव सर्वं व्यवहार्य्यं न तु कस्यचिदपि अनुमतिरपेक्षणीयेति भावः।

अत्र "अयं मे सुदिवसः, सता"मित्याद्यंशे सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, तथा यथेच्छभोग्यत्वरूपकार्य्यस्य अपराधीनत्वरूपकारणेन समर्थनादर्थान्तर न्यासान्तरञ्च इत्यनयोः सजातीयसङ्करः।

तथा सुदिवसत्वं प्रति हेतोरनुक्तेर्निर्हेतुत्वदोषः, स च "भवत्सङ्गात्, सङ्गो भवति सह पुण्येन सुजनै"रितिद्वितीयचरणपाठेन समाधेयः।

"सत्साधौ पूजिते लोके" इत्यादि व्याड़िः।
शिखरिणी वृत्तं॥ १॥

---

(१) यथेच्छाभोग्यमिति पाठान्तरं। (२) तपसामिति क्वापि पाठः।

तपा किमत्रोच्यत (ष)

प्रियप्रायावृत्तिर्विनयमधुरो (१) वाचि नियमः
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः।
पुरोवा पश्चाद्वा तदिदमविपर्य्यासितरसं
रहस्यं साधूनामनुपधि विशुद्धं विजयते॥ २

इत्युपविशतः। (क)

(ष) तापेति। अत्र भवत्याधिकृते वने किमुच्यते मयेति शेषः। अत्र सदाचारविनयादिकं सर्व्वमेव सुस्थितमिति किमपि वक्तव्यं नास्तीति भावः।

तदेव सदाचारादिकं दर्शयति प्रियेति। साधूनां सज्जनानां वृत्तिः व्यवहारः प्रायेण प्रियेति प्रियप्राया बाहुल्येन प्रीतिकारिणीत्यर्थः वाचि वाक्ये नियमः रीतिः वाक्यव्यवहार इति यावत् विनयेन मधुरः मनोहरः, तथा मतिर्बुद्धिः प्रकृत्या स्वभावेनैव कल्याणी परेषां मङ्गलकारिणी, तथा परिचयः परस्परं विशेषेण ज्ञानं अनवगीतः प्रतारणादिदोषाभावात् अनिन्दितः। सुतरां पुरः प्रथमे वा पश्चात् शेषे वा अविपर्य्यासितः अपरिवर्त्तितः रसः अनुरागो यस्मिन् तत् तथोक्तं, तत् प्रसिद्धमिदं अनुपधि कपटताशून्यं अतएव विशुद्धं निर्म्मलं रहसि निर्ज्जने भवं अन्यैरज्ञेयं चरित्रमित्यर्थः विजयते उत्कर्षेण वर्त्तते।

अत्र अप्रस्तुतात् साधुचरित्रसामान्यात् प्रस्तुतस्य वनदेवताचरित्ररूपविशेषस्य प्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः। तथा चरित्रोत्कर्षं प्रति प्रियप्रायवृत्तित्वप्रभृतिबहुकारणोक्तेः समुच्चयश्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः।

"कपटोऽस्त्री व्याजदम्भोपधयश्छद्म कैतव" इत्यमरः।

विजयत इति "विपराभ्यां जि" रित्यात्मनेपदं।

शिखरिणी वृत्तं॥ २॥

(१) मसृण इति पाठभेदः।

वन। कां पुनरत्रभवतीमवगच्छामि ?। (ङ)

ताप। आत्रेय्यस्मि। (च)

वन। आत्रेयि ! कुतः पुनरिहागम्यते, किं प्रयोजनं वा दण्डकारण्यप्रवेशे ? (१)। (छ)

आत्रेयी। अस्मिन्नगस्त्यप्रमुखाः प्रदेशे
भूयांस उद्गीथविदो वसन्ति।
तेभ्योऽधिगन्तुं निगमान्तविद्यां
वाल्मीकिपार्श्वादिह पर्य्यटामि ॥ ३ ॥

---

(ङ) वनेति। भवती का इति ज्ञातुमिच्छामीत्यर्थः।

(च) तापेति। ब्राह्मणवत् सकलसंस्कारैः संस्कृता काचित् ब्राह्मणजातीया स्त्री आत्रेयी। तथाच यमः

"जन्मप्रभृतिसंस्कारैः संस्कृता ब्रह्मवच्च या।
गर्भिणी वा तथा या स्यात्तामात्रेयीं विनिर्द्दिशेत् ॥"

अस्या विशेषनामापि देवदत्तादिवदात्रेयीति बोध्यं।

(छ) वनेति। कुतः कस्मात् स्थानादित्यर्थः।

अस्मिन्निति। अस्मिन् प्रदेशे दण्डकारण्यभूभागे अगस्त्यप्रमुखाः अगस्त्यादयो भूयांसः बहवः उद्गीथः सामवेदस्य अंशविशेष स्तं विदन्ति ये ते उद्गीथविदः विशेषवाचिन उद्गीथशब्दस्य सामान्यपरत्वाङ्गीकारात् सामवेदज्ञा इत्यर्थःवसन्ति। तेषां वेदज्ञत्वेन वेदान्तज्ञं अवश्यमेव सम्भवपरमिति भावः। तेभ्योऽगस्त्यप्रमुखमुनिभ्यः निगमोवेदः तस्यान्तः शेषभागः तद्विद्यां वेदान्तविद्यां उपनिषदमितियावत् अधिगन्तुमध्येतुं वाल्मीकि-पार्श्वात् वाल्मीकेराश्रमादित्यर्थः इह दण्डकारण्ये पर्य्यटामि अगस्त्यादीना माश्रममन्विष्या-न्विष्य परिभ्रमामीत्यर्थः।

"ओ मित्येकाक्षर मुद्गीथ मुपासीत" इत्यादि छान्दोग्योपनिषत्।

---

(१) किम्प्रयोजनो वा दण्डकारण्यप्रचार इति पाठान्तरं।

वन। यदि तावदन्येऽपि मुनयस्त्वमेवहि पुराणब्रह्मवादिनं प्राचेतसमृषिं ब्रह्मपारायणायोपासते, तत् कोऽयमत्रार्य्याया दीर्घप्रवासप्रयासः? (ञ)

आत्रे। तत्र महानध्ययनप्रत्यूह इति दीर्घप्रवासोऽङ्गीकृतः। (झ

वन। कीदृशः?।

"वेदान्तोनाम उपनिषत् प्रमाणं, तदुपकारीणि च शारीरकसूत्रादीनी"ति वेदान्तसारः।

ननु "सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्रयोर्नेच्छन्ति। सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्री शूद्री यदि जानीयान्मृतः सोऽधोगच्छती"ति तिथ्यादितत्त्वधृत नृसिंहतापनीयश्रुत्या स्त्रिया वेदाध्ययननिषेधेन कथमत्र"तेभ्योऽधिगन्तुं निगमान्तविद्या" मित्युक्तमिति चेत् सत्यं द्विविधाः स्त्रियः, ब्रह्मवादिन्यः गृहस्थाश्च, तत्र ब्रह्मवादिनीनां वेदाध्ययनं विहितमेव। यथा हारीतः—

"द्विविधाः स्त्रियो ब्रह्मवादिन्यः सद्योवध्वश्च। तत्र ब्रह्मवादिनीनामुपनयनं अग्नीन्धनं वेदाध्ययनं स्वगृहेच भैक्षचर्य्ये"ति।

यमश्च "पुराकल्पे पु नारीणां मौञ्जीबन्धनमिष्यते।

अध्यापनञ्च वेदानां सावित्रीवाचनं तथा।"

अतएवोक्तश्रुतिस्तु गृहस्थायाः स्त्रिया वेदाध्ययननिषेधपरेति बोध्यं। इन्द्रवज्रा वृत्तं॥ ३॥

(ञ) वनेति। पुराणः प्राचीनो ब्रह्मवादी वेदवक्ता तं प्राचीनवेदाध्यापकमित्यर्थः। प्राचेतसमृषिं वाल्मीकिमुनिं। ब्रह्मणो वेदस्य पारं अन्तं अयनं गमनं तस्मै सम्पूर्णवेदज्ञानलाभायेत्यर्थः। उपासते आराध्नुवन्ति अध्यापकत्वेनावलम्बन्त इत्यर्थः।

(झ) आत्र इति। अत्र वाल्मीकेः सकाशे। अध्ययनप्रत्यूहः अध्ययनविघ्नः। "विघ्नोऽन्तरायः प्रत्यूह" इत्यमरः।

आत्रे। तस्य भगवतः केनापि देवताविशेषेण सर्वप्रकाराद्भुतं स्तन्यत्यागमात्रके वयसि वर्त्तमानं दारकद्वयमुपनीतं। तत् खलु न केवलमृषीनामपितु (१) सचराचराणां भूतानामान्तराणि तत्त्वान्युपस्नेहयति। (ञ)

वन। अपि! तयोर्नामसंविज्ञानमस्ति ?। (ट)

आत्रे। तयैव किल देवतया तयोः कुशलवाविति नामनी प्रभावश्चाख्यातः। (ठ)

वन। कीदृशः प्रभावः ?।

आत्रे। तयोःकिल सरहस्यजृम्भकास्त्राणग्राजन्मसिद्धानीति। (ड)

(ञ) आत्र इति। तस्य भगवतः वाल्मीकेः समीप इत्यर्थः, केनापि अविज्ञातनाम प्रभावेणेत्यर्थः। देवताविशेषेण आत्रेय्या तु नासौ देवता परिचिता किन्तु गङ्गयेति कविरेव तृतीयाङ्के प्रकाशयिष्यति। स्तन्यत्यागमात्रके वयसि तृतीयवर्षारम्भे दारकद्वयं वालकयुगलं उपनीतं उपस्थाप्य अर्पितं। तत् दारकद्वयं। सचराचराणां स्थावरजङ्गमात्मकानां भूतानां प्राणिनां। तत्र जङ्गमभूतानि मनुष्यपशुपक्ष्यादयः, स्थावरभूतानि केचित् वृहत्कायसर्पादयः, ये स्वस्थानाच्चलितुं न शक्नुवन्ति। आन्तराणि तत्त्वानि अन्तःकरणानि, उपस्नेहयति वात्सल्ययुक्तानि करोति।

(ट) वनेति। नामसम्विज्ञानं नामपरिचयः। अपिशब्दः प्रश्ने अस्ति किमित्यर्थः। भवत्या इति शेषः।

(ठ) आत्र इति। तयैव देवतया गङ्गयेत्यर्थः। कुशो लवश्चेति नामनी (नामद्वयं) आख्याते, प्रभावो माहात्म्यञ्च आख्यात इति वाक्यभेदेनान्वयः कर्त्तव्यः अन्यथा "नपुंसकानपुंसकयोर्नपुंसकमेकवद्वे"ति वचनेन आख्यात इत्यस्य नपुंसकत्वं प्रसज्येत।

(ड) आत्र इति। रहसि निर्जने भव इति रहस्यं मन्त्रस्तत्सहितानि।

(१) केवलमृषीनामेव न किन्तु तिरश्चां भूतानामपि अन्तराणि इति पाठान्तरं

वन । अहो नु भोः ! चित्रमेतत् ( १ ) । ( ढ )

आत्रे । तौ च भगवता वाल्मीकिना धात्रीकर्म्मवत्सलतां (२) परिगृह्य पोषितौ परिरक्षितौ च, वृत्तचौड़कर्म्मणोश्च (३) तयोस्त्रयीवर्जमितरा विद्याः सावधानेन परिनिष्ठापिताः, समनन्तरञ्च गर्भैकादशे वर्षे क्षात्रेण कल्पेनोपनीय तौ त्रयीविद्यामध्यापितौ, नह्येताभ्यामतिप्रदीप्तप्रज्ञाभ्यामस्मदादेः सहाध्ययनयोगोऽस्ति । (ण)

यत :—

( ढ ) वनेति । अहोनुभोरित्येकमेव विस्मयविशेषद्योतकमव्ययं । एतत् सरहस्य जृम्भकास्त्राणामाजन्मसिद्धत्वं चित्रं आश्चर्यं अन्येषां शिक्षयैव तद्दर्शनादिति भावः ।

( ण ) आत्र इति । तौ कुशलवौ । धात्रीकर्म्मणा उपमातृकार्य्येण वत्सलतां स्नेहं परिगृह्य स्वीकृत्य समस्तविषयनिःस्पृहेणापि सता अतिमनोहरत्वात् तयोरुपरि ममतां विधायेत्यर्थः । पोषितौ वर्द्धितौ । वृत्तं सम्पन्नं चौड़कर्म्म चूड़ाकार्य्यं ययोः तयोः । तयोः कुशलवयोः त्रयीवर्जं वेदं विहाय इतरा व्याकरणाद्यो विद्याः, सावधानेन तयोः शिक्षां प्रत्येकाग्रताविशिष्टेन परिनिष्ठापिताः आरोपिताः तौ अध्यापितावित्यर्थः । समनन्तरञ्च ततः परञ्च गर्भात् मातुरुदरसंयोगात् एकादशे गर्भाधानवमाससहितैकादशे इत्यर्थः । क्षात्रेण कल्पेन क्षत्रियविधानानुसारिणा उपनीय उपनयनसंस्कारं कृत्वा । अतिप्रदीप्तप्रज्ञाभ्यां प्रखरबुद्धिशालिभ्यां एताभ्यां कुशलवाभ्यां सह अस्मदादेः मादृशस्वल्पबुद्धेर्जनस्येत्यर्थः अध्ययनयोगः एकयोगेनाध्ययनं नहि अस्ति नहि सम्भवतीत्यर्थः । तत्र कारणमाह यत इति ।

त्रयीं वर्जयतीति त्रयीवर्जं कर्म्मण्यण्, परिनिष्ठापिता इति क्रियाविशेषणमेतत्। एतच्च उपनयनात् प्राक् वेदोच्चारणनिषेधादुक्तं । यथा मनुः—

( १ ) इति हि भोश्चित्रमिति क्वचित् पाठः । ( २ ) धात्रीकर्म्मवस्तुत इति क्वापि पाठः । ( ३ ) वृत्तचड़ौ च परिपाठितौ इति क्वचित् पाठः ।

वितरति गुरुः प्राज्ञे विद्यां यथैव, तथा जड़े,
न तु खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा।
भवति च पुन (१) र्भूयान् भेदः फलं प्रति, तद् यथा
प्रभवति शुचिर्विम्बोद्ग्राहे मणि र्न मृदां चयः॥ ४॥

"नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते।
शूद्रेण हि समस्तावद् यावद्वेदे न जायते।"

गर्भैकादशैकादशवर्षयोः चवियाणामुपनयनमुख्यकालत्वात् गर्भैकादशे वर्षे इत्युक्तं।
तथाच मनुयाज्ञवल्क्यौ—

"गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनं।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः।"
गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योपनायनं।
राज्ञामेकादशे सैके विशामेके यथाकुलं।"

अस्मत्प्रणीतस्मृतिचिन्तामणौ सर्वमेतत् प्रपञ्चितं।

रुरुचर्म्म, मौर्वी मेखला, शणसूत्रमयमुपवीतमित्यादि चवियोपनयनकल्पः मनुसंहितामिताचरादौ द्रष्टव्यः।

अत्र चयीतरा विद्या इत्यनेनैवोपपत्तौ चयीवर्जमिति वर्जशब्दोपादानादधिकपदत्वदोषः, स तु चयीतरा इति पाठेनैव समाधेयः।

वितरतीति। गुरुरध्यापकः प्राज्ञे बुद्धिमति छात्रे यथा विद्यां वितरति ददाति, जड़े निर्वोधे छात्रेऽपि तथैव विद्यां वितरतीत्यर्थः। तु किन्तु तयो र्ज्ञाने शास्त्रार्थवोधविषये शक्तिं सामर्थ्यं न खलु करोति बुद्धिमतश्छात्रस्य न खलु सामर्थ्यविशेषं जनयति, वा किम्वा शक्तिं अपहन्ति निर्वोधच्छात्रस्य सामर्थ्यं न खलु विनाशयति सुवोधनिर्वोधयोः समानाध्यापनात् समानभावेनैव शास्त्रज्ञानं वर्द्धयितुमिच्छतीत्यर्थः। पुनः किन्तु फलं शास्त्रज्ञानं प्रति शास्त्रीयज्ञानप्रकाशकाल इत्यर्थः भूयान् भेदः महावैषम्यं भवति बुद्धिमान्

(१) तयोरिति पाठान्तरं।

वन। अयमसावध्ययनप्रत्यूहः ?। (त)

आत्रे। अपरश्च। (थ)

वन। अथापरः कः ?।

आत्रे। अथ स ब्रह्मर्षिरेकदा मध्यन्दिनसमये (१) नदीं तमसामनुप्रपन्नः, तत्र युग्मचारिणोः क्रौञ्चयोरेकं व्याधेन विध्यमानं ददर्श, आकस्मिकप्रत्यवभासाञ्च दैवीं वाचमनुष्टुभेन च्छन्दसा परिणतामभ्युदैरयत्। (२) (द)

बाहुल्येन शास्त्रज्ञानवान्, निर्बोधस्तु सर्वथैव क्वचित् ज्ञानहीनः क्वचिद्वा किञ्चिद्ज्ञानी स्यादित्यर्थः। तत् वैषम्यं यथा, शुचिर्निर्म्मलो मणिश्चन्द्रकान्तादिरत्नं विम्बोद्ग्राहे प्रतिविम्बग्रहणे प्रभवति समर्थो भवति, मृदां चयः मृत्तिकानां स्तूपः न विम्बोद्ग्राहे प्रभवतीत्यर्थः। युगपत् समानमधीयानानां मध्ये कस्यचिद्बुद्धिमतो ज्ञानोत्कर्षे अन्येषामल्पमतीनां तत्राध्ययनं नितान्तापमानकरमिति तत्कृतो ममाध्ययनप्रत्यूह इति भावः।

अत्राप्रस्तुतात् प्राज्ञ सामान्यात् प्रस्तुतयोः प्राज्ञविशेषयोः कुशलवयोः प्रतीतिः तथा अप्रस्तुतात् जड़सामान्यात् प्रस्तुतात्रेयीरूपजड़विशेषप्रतीतेश्च अप्रस्तुतप्रशंसा, तथा प्राज्ञे नखलु शक्तिं करोति, नवा जड़े शक्तिं अपहन्तीति क्रमिकान्वयबोधात् यथासंख्यं, तथा श्रौती उपमाचेत्येतेषामङ्गाङ्गिभावेन सङ्करालङ्कारः।

तथा 'न मृदां चय' इत्यत्र तुशब्दः किन्तुशब्दो वा वाच्यो नोक्त इति वाच्यानभिधानदोषः स तु 'नतु मृच्चय' इति पाठेन समाधेयः।

प्राज्ञे जड़े इति सम्प्रदाने अधिकरणत्वविवक्षया सप्तमी।

हरिणी वृत्तं ॥ ४ ॥

(त) वनेति। अत्र असौ इति तच्छब्दसमानार्थः, तेन सोऽयमित्यर्थः।

(थ) आत्र इति। अपरश्च तत्राध्ययनप्रत्यूहोऽस्तीतिशेषः।

(द) आत्र इति। ब्रह्मा ब्राह्मणश्चासौ ऋषिश्चेति ब्रह्मर्षिः। मध्यन्दिन समये

(१) माध्यन्दिनसवनाय इति पठान्तरं। (२) अनुष्टुप् छन्दसा परिच्छिन्नामिति पाठभेदः।

"मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेक मवधीः काममोहितम्" ॥ ५ ॥

इति ।

मध्याह्नकाले । तमसां तमसाभिधानां नदीं अनुप्रपन्नः प्राप्तो गत इत्यर्थः । युग्मेन मिथुनभावेन चरत इति युग्मचारिणो तयोर्विहरतोरित्यर्थः क्रौञ्चयोः पक्षिविशेषयोः एकं पुरुषक्रौञ्चं । विध्यमानं वाणेन ताड्यमानं । आकस्मिकः सहसोत्पन्नः नतु चिन्ताप्रसूत इत्यर्थः प्रत्यवभासः प्रकाशो यस्या स्तां । परिणतां स्वयमेव ग्रथितीभूतामित्यर्थः अभ्युदैरयत् उच्चारितवन्

दनस्य मध्यमिति मध्यन्दिनं "धेनवनडुहादयश्चे"ति निपातनात् सिद्धं ।

"क्रुङ् क्रौञ्चोऽथ वकः कह्व" इत्यमरः ।

अनुष्टुप्छन्दसो लक्षणं यथा श्रुतबोधे---

"पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः ।
गुरु षष्ठन्तु पादानां शेषेष्वनियमो मतः ॥"

अतएव ज्ञापकादकारान्तोपि अनुष्टुभशब्दो मन्तव्यः ।

किमभ्युदैरयदित्याह मेति । हे निषाद ! चाण्डाल ! व्याध इति केचित् त्वं शाश्वतीः समाः नित्यान् वत्सरान् चिरकालमित्यर्थः प्रतिष्ठां आश्रयं मा अगमः न प्राप्स्यसि चिर कालं त्वं सुखेनावस्थानं न प्राप्स्यसीत्यर्थः यत् यस्मात् त्वं क्रौञ्चमिथुनात् (कोँचवक इति प्रसिद्ध) पक्षि विशेषद्वयमध्यादित्यर्थः कामेन मोहितं विषयान्तरज्ञानशून्यमित्यर्थः अन्यथा हन्तुं त्वं नाशक इति भावः एकं पुंक्रौञ्चं अवधीर्निहतवानसि । इति सम्भाव्यमानमावोक्ति र्नत्वभिसम्पातः ।

अतएव ब्रह्मर्षिवाक्यात् "शृङ्गाराहारनिद्राणां यश्च भङ्गं करोति च । स व्रजेत् कालसूत्रञ्च स्वामिनश्च विशेषतः ।" इति ब्रह्मवैवर्त्तपुराणाच्च रममाणताड़न हत्यादिकं पापजनकमिति बोध्यं ।

"निषादश्वपचावन्तेवासि चान्डाल पुक्कसाः" ।

"सम्वत्सरोवत्सरोऽब्दो हायनोऽस्त्री शरत् समाः ।"

"शाश्वतस्तु ध्रुवोनित्य"मिति चामरः ।

वन । चित्रम्, आम्नायादन्योऽयं नूतनश्छन्दसामवतारः । (ध)

आत्रे । तेन खलु पुनः समयेन तं भगवन्तमाविर्भूतशब्दब्रह्म-प्रकाशमृषिमुपसंगम्य भगवान् भूतभावनः पद्मयोनिरवोचत्; ऋषे ! प्रबुद्धोऽसि वागात्मनि ब्रह्मणि, तद्ब्रूहि रामचरितम्,

---

वाल्मीकिना शोकेनोच्यमानत्वादिदमेव वाक्यं प्रथमं श्लोकनाम्नाऽभूत् । तथाच वाल्मीकीयरामायणं—

"तस्येत्थं ब्रुवतश्चिन्ता बभूव हृदि वीक्षतः ।
शोकार्त्तेनास्य शकुनेः किमिदं व्याहृतं मया ।
चिन्तयन् स महाप्राज्ञः चकार मतिमान् मतिं ।
शिष्यश्चैवाब्रवीद्वाक्यं इदं स मुनिपुङ्गवः ।
पादबद्धोऽक्षरसमस्तन्त्रीलयसमन्वितः ।
शोकार्त्तस्य प्रवृत्तोमे श्लोको भवतु नान्यथा ।"

एतदनुसारादेव अन्यदपि छन्दोबद्धं वाक्यं श्लोक इत्याख्यायते । तथा इमं श्लोकं सार्द्धद्वयवर्षमध्ये चेत् मुखस्थं कर्त्तुं शक्नुयात् तदा स बालको महामेधावीस्यादिति लोकप्रवादः ॥ ५ ॥

( ध ) वनेति । चित्रम् आश्चर्यं श्रुतमिति शेषः । आम्नायते सम्यगभ्यस्यत इत्याम्नायोवेदः "ज्ञाभ्यासे"ति म्नाधातोर्घञ "श्रुतिः स्त्रीवेद आम्नाय" इत्यमरः । आम्नायाद्वेदात् वेदान्तर्गतानुष्टुप्छन्दसइत्यर्थः अन्यो भिन्नो नूतनः प्रथमः अयं छन्दसां अवतारः आविर्भावः । वेदे ईदृक्छन्दोऽस्त्येव किन्तु मनुष्यकृतभाषायामयमेव प्रथमोऽनुष्टुभ आविर्भाव इत्यर्थः । तथाच वेदान्तदर्शनभाष्ये शङ्करभगवत्पूज्यपादधृतं ।

"एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।
दृश्यतेत्वग्र्यायाबुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ।" कठोपनिषद्वाक्यं ।

उपनिषदादौ ईदृशान्यपराण्यपि अविकलान्यनुष्टुप्छन्दांसि दृश्यन्ते ।

( न ) आत्र इति । तं वाल्मीकिं । आविर्भूतः प्रकाशितः शब्दब्रह्मणः "मानिषादे"त्यादिशब्दरूपपरमात्मनः प्रकाशः विकासः उच्चारणमिति यावत् यस्मात् तं तथोक्तं ।

**अव्याहतज्योतिरार्षं ते चक्षुः प्रतिभातु, आद्यः कविरसि, इत्युपक्रान्तर्हितः। अथ भगवान् प्राचेतसः प्रथमं शब्दब्रह्मणस्तादृशं विवर्त्तमितिहासं रामायणं प्रणिनाय। (न)**

---

भूतानि प्राणिनः भावयति उत्पादयतीति भूतभावनो जगत्स्रष्टा पद्मं विष्णोर्नाभिकमलं योनिरुत्पत्तिस्थानं यस्य सः पद्मयोनिर्ब्रह्मा। वागात्मनि शब्दरूपे ब्रह्मणि प्रबुद्धोऽसि प्रकृष्टज्ञानवानसि वाहुल्येन शब्दब्रह्म ज्ञातवानसीत्यर्थः। तत्तस्मात्। रामचरितकथने यावती भाषाज्ञानस्यावश्यकता तावत्तव जातमिति भावः।

ननु साम्प्रतमपि सीतारामौ जीवतः सुतरामज्ञातत्वात् तयोर्भविष्यच्चरितकथनमसम्भवमेव इत्यत आह अव्याहतेति। अव्याहतं केनाप्यनिवारितसामर्थ्यं ज्योतिस्तेजो यस्य तत्तादृशं आर्षं ऋषिसम्बन्धीयं चक्षुः प्रतिभातु, भूतभविष्यद्वर्त्तमानज्ञानं तव भवत्वित्यर्थः; अतएव तव भविष्यतोऽपि सम्यग्ज्ञानात् भविष्यद्रामचरितकथनं नासम्भवमिति भावः। आद्यः कविः प्रथमो वर्णनाकारी विद्वानसि सम्यग् रामचरितकथनादिति भावः। अथानन्तरं। प्राचेतसो वाल्मीकिः। शब्दब्रह्मणः शब्दस्वरूप ब्रह्मणः। तादृशं विवर्त्तं रामायणत्वेन मिथ्याप्रतीतिविषयं। वास्तविकपक्षे रामायणाख्यः शब्दसमूहोपि ब्रह्मैव सुतरां तस्य रामायणत्वेन या पृथक् प्रतीतिः सा मिथ्याप्रतीतिरेव रज्जौ सर्पप्रतीतिवदितिवोध्यं। इतिहासं पुरावृत्तं। रामोऽयते ज्ञायते यस्मात् तद् रामायणं तदाख्यं ग्रन्थं प्रणिनाय विरचयामास। तस्य रामायणस्यालोचनयैव कालो गच्छति नत्वध्यापनावसरोऽस्तीति द्वितीयो विघ्न इति वोध्यं।

इदं कविभ्य इत्यादि श्लोकव्याख्यानावसरे शब्दस्य ब्रह्मत्वप्रतिपादिका श्रुतिरुक्ता।

विवर्त्तनिरूपणं यथा वेदान्तसारे—

"स तत्त्वतोऽन्यथा प्रथा विकार इत्युदाहृतः।
अतत्त्वतोऽन्यथाप्रथा विवर्त्त इत्युदीरितः॥

केचित्तु विवर्त्तः परिणाम इति वर्णयन्ति, तदसङ्गतं ब्रह्मणः परिणामाभावात्। तथाच वेदान्तदर्शनभाष्यटीकायां वाचस्पतिमिश्राः—

"विवर्त्तस्तु प्रपञ्चोऽयं ब्रह्मणोऽपरिणामिनः।
अनादिवासनोद्भूतो न सारूप्यमपेक्षते॥"

बन। हन्त! तर्हि पण्डितः (१) संसारः। (प)

आत्रे। तस्मादवोचं, तत्र महानध्ययनप्रत्यूह (२) इति।

बन। युज्यते। (फ)

आत्रे। विश्रान्तास्मि भद्रे! सम्प्रत्यगस्त्याश्रमस्य पन्थानं ब्रूहि। (ब)

बन। इतः पञ्चवटीमनुप्रविश्य गम्यतामनेन गोदावरीतीरेण

आत्रे। सवाष्पं। अप्येतत्तपोवनम्? अप्येषा पञ्चवटी? अपि सरिदियं गोदावरी? अप्ययं गिरिः प्रस्रवणः? अपि वनदेवता जनस्थानवासिनो वासन्ती त्वम्?। (भ)

बास। अस्त्येतत् सर्व्वम्। (म)

---

(प) वनेति। हन्तेति हर्षसूचकमव्ययं। तर्हि तादृश रामायणे रचिते सति संसारो जगज्जनः पण्डितोजात इति शेषः। "मानिषादे"त्यादिवत् सरलभाषया रचितत्वेन रामायणस्य वेदादतीवसुगमत्वात् सर्व्वएव तत् बुध्यन्निति भावः।

(फ) वनेति। युज्यते, त्वया यद्विघ्नकारणं दर्शितं तदयुक्तिसङ्गतमित्यर्थः।

(ब) आत्र इति। विश्रान्तास्मि कृतविश्रामास्मि।

(भ) आत्र इति। पूर्व्वं बहुशो दृष्टानां एकत्रावस्थितानां मध्ये वनदेवतया केवलपञ्चवटीगोदावर्य्योः परिचयकरणेनापि सर्व्वेषां ज्ञानोदयात् स्थिरनिश्चयाय क्रमश एकैकं पृच्छति अप्येतदिति। अयमपिशब्दः सर्व्वत्र प्रश्नबोधकः। तथाचामरः—

"गर्हासमुच्चयप्रश्न शङ्कासम्भावनास्वपि।"

(म) बासेति। पूर्व्वं आत्रेय्या 'वनदेवते'ति सामान्यतो ज्ञातं, इदानीन्तु बासन्तीत्वेन विशेषतः परिचिता, सुतरां बासन्तीति नाम्ना उल्लेख एव श्रोतॄणां विशेषज्ञानं स्यादिति कविना पूर्व्वं 'वन' इत्युक्तं इदानीन्तु तस्मिन्नेवार्थे 'बास' इति प्रयुज्यत इति न दोषः। एतत् सर्व्वं अस्ति, त्वया यद्यत् पृष्टं तत्तदेव सत्यमस्तीत्यर्थः।

---

(१) मण्डित इति पाठान्तरं। (२) तदनुरोधान्नस्तत्र हि—इति पाठभेदः।

आत्रे। वत्से! जानकि!

स एष ते वल्लभवन्धुवर्ग:
प्रासङ्गिकीनां विषय: कथानाम् ।
त्वां नामशेषामपि दृश्यमान:
प्रत्यक्षदृश्यामिव न: करोति ॥ ६ ॥

वास। सभयं स्वगतम्। कथं नामशेषामित्याह ?। प्रकाशम्। आर्य्ये! किमत्याहितं सीतादेव्या: ?। (य)

आत्रे। न केवलमत्याहितं सापवादमपि। (र)

वास। कथमिव ? (ल)

---

स एष इति। प्रसङ्गेन परस्परालापप्रयोगेन संसृष्टा इति प्रासङ्गिक्य: तासां कथानां वाक्यानां विषय: प्रतिपाद्य:, अस्माभि: सह पूर्वं तव कथोपकथनसमये त्वया "वासन्ती अतीवविनयलज्जामधुरभाषिणी काचित् मम सखी आसीत्, पञ्चवटीवनमतीवामोदस्थानं एवं प्रकारेण वर्णित इत्यर्थ:, दृश्यमान: मयेति शेष:,स एष ते तव वल्लभ: प्रियो बन्धुवर्ग:। वनहरिणादीनामपि सीताया बन्धुमध्ये गणनात् वर्गशब्दोक्ति:। नामशेषामपि नाममात्रावशिष्टामपि मृतामपीत्यर्थ: नोऽस्माकं प्रत्यक्षदृश्यामिव साक्षादवलोक्यमानामिव करोति। परिवारदर्शनात् परिवार्य्यस्मरणस्यावश्यकत्वादितिभाव:।

अत्र भावाभिमानिनी वाच्या क्रियोत्प्रेक्षाऽलङ्कार:। तथा अतीताया: सीताया: प्रत्यक्षायमाणत्वाद्भाविकालङ्कारश्चेत्यनयोरङ्गाङ्गिभावेन सङ्कर:। उपजातिवृत्तम् ॥ ६ ॥

(य) वासेति। अत्याहितं जीवानपेक्षि किमपि कर्म्म वृत्तं किं ? येन कर्म्मणा जीवनं यातुमर्हति तादृशं किमपि कर्म्म जातं किमित्यर्थ:।

"अत्याहितं महाभीति: कर्म्म जीवानपेक्षि च"त्यमर:।

(र) आत्र इति। अत्याहितन्तु जातमेव तव कलङ्कोऽपि जात इति समुदायार्थ:।

(ल) वासेति। कथमिव इत्यस्यार्थे "केमन धारा" "कि रकम" इति प्रचलितवङ्गभाषा।

आत्रे। कर्णे एवमेव। (ब)

वास। अहह! दारुणो दैवनिर्घातः। इति मूर्च्छति। (श)

आत्रे। भद्रे! समाश्वसिहि समाश्वसिहि।

वास। हा प्रियसखि! हा महाभागे! ईदृशस्ते निर्म्माणभागः। रामभद्र! रामभद्र! अथवा अलं त्वया, आर्य्ये आत्रेयि! अथ तस्मादरण्यात् परित्यज्य निवृत्ते लक्ष्मणे सीतादेव्याः किं वृत्त- मिति काचिदस्ति प्रवृत्तिः?। (ष)

आत्रे। नहि नहि। (स)

(ब) आत्र इति। "लङ्कायामेकाकिनी सीता स्थितेति नितरामेव तस्याश्चरित्र-दोषो जात इति लोकापवादेन रामस्यादेशात् लक्ष्मणो रथेन सीतामानीय महारण्ये जाह्नवीतीरे विसृज्य गत" इत्येवमेव वाक्यं कर्णे कर्णसमीपे मुखमुपनीय कथयतीत्यर्थः। अत्राप्यन्येषामश्रवणार्यं कर्णे इत्युक्तं।

(श) वासेति। अहहेति महाखेदे। दैवनिर्घातः दुरदृष्टकृतप्रहारः।

(ष) वासेति। महाभागे! महाभाग्यवति! ते तव निर्म्माणभागः सृष्टेरंशः जीवनस्य शेषांश इत्यर्थः, ईदृशः, यत्तुभशरणा महारण्ये मृतेति वाक्यशेषः। सम्राड्महिष्यास्तव अशरणायाः सत्या महारण्ये मरणं नितान्तविस्मयविषादकरमिति भावः। रामभद्र! रामभद्रेति विषादे द्विरुक्तिः। रामभद्र! लोकापवादमात्रेण त्वमीदृशीं प्राणप्रियतमां निर्व्वास्य नितान्तगर्हितं कृतवानिति भावः। अलं त्वया निन्दितेनेत्यर्थः, तव निन्दयेदानीं किमपि फलं नास्तीति भावः। वृत्तं भूतं का दशा जातेत्यर्थः। इति अस्मिन् विषये काचित् प्रवृत्तिः कापि वार्त्ता अस्ति किमित्यर्थः। तव ज्ञातेति शेषः।

(स) आत्र इति। नहि काचिदपि प्रवृत्ति रस्तीति शेषः। अवधारणे द्विरुक्तिः।

वास। हा कष्टम्, आर्य्यारुन्धतीवशिष्ठाधिष्ठिते रघुकुलरट्टे (१) जीवन्तीषु च प्रवृद्धराज्ञीषु कथमिदं जातम्?। (ह)

आत्रे। ऋष्यशृङ्गसत्रे (२) गुरुजनस्तदासीत्। सम्प्रति परिसमाप्तं तद्द्वादशवार्षिकं सत्रम्, ऋष्यशृङ्गेण च सम्पूज्य विसर्जिता गुरवः, ततो भगवत्यरुन्धती "नाहं वधूरहितामयोध्यां गमिष्यामी"त्याह, तदेव राममातृभिरनुमोदितम्। तदनुरोधाद्भगवतो वशिष्ठस्य परिशुद्धा वाचो यथा, "वाल्मीकितपोवनं गत्वा तत्र वत्स्याम" इति। (च)

वास। अथ स राजा किमारम्भः (३) सम्प्रति?। (क)

(ह) वासीति। आर्य्याभ्यां अरुन्धतीवशिष्ठाभ्यां अधिष्ठिते अवलम्बिते दुर्दैवशान्तियुक्तिदानादिना सर्व्वापद्भ्यो रचित इत्यर्थः। प्रवृद्धराज्ञीषु प्राचीनासु महिषीषु कौशल्यादिष्वित्यर्थः। इदं सीताया निर्वासनं। अरुन्धतीवशिष्ठादयः कथमस्माद्दारुणव्यापारात् रामं न निवर्त्तितवन्त इति भावः।

(च) आत्र इति। सम्पूज्य दानमानाभ्यां सत्कृत्य। विसर्जिताः प्रेषिताः गुरवो वशिष्ठादयः। राममातृभिः कौशल्यादिभिः अनुमोदितं कर्त्तव्यतया स्वीकृतं। तदनुरोधात् तासां अरुन्धतीकौशल्यादीनामाग्रहात्। परिशुद्धा निर्दोषाः युक्तियुक्ता इत्यर्थः अभवन्निति शेषः।

(क) वासीति। अथ प्रश्ने। आक्रोशेन रामभद्र इत्यनुक्त्वा राजा इत्युक्तं। कः प्रश्नविषयः जिज्ञास्य इति यावत् आरम्भो यस्य सः किमारम्भः। सम्प्रति किं कुरुत इत्यर्थः।

---

(१)...धिष्ठितेषु रघुकदम्बकेषु इति पाठान्तरं। (२) ऋष्यशृङ्गाश्रमे इति क्वचित् पाठः। (३) किमाचार इति पाठभेदः।

वास। अहह! धिक्, परिणीतमपि। (ग)

आत्रे। शान्तं पापम्। (घ)

वास। का तर्हि यज्ञे सहधर्म्मचारिणी?। (ङ)

आत्रे। हिरण्मयी सीताप्रतिकृतिः। (च)

वास। हन्त भोः। (छ)

(ग) वासेति। यथा "यजमानः पठती"ति श्रुतिप्रतिपादितपाठाभावात् मूकस्य यज्ञे अधिकाराभावः "तिर्य्यक्पङ्ग्वार्षेयदेवानां नावाधिकार" इति मीमांसादर्शनसूत्रात् तथा "सपत्नीकोधर्म्ममाचरे" दितिविधौ सपत्नीकत्वस्य कर्त्तृविशेषणतया श्रूयमाणत्वेन पत्न्यभावे यज्ञे अधिकाराभावः स्यात् अत एव निर्वासितसीतस्य रामस्यापि दारान्तरमन्तरेण यज्ञे अधिकारो न स्यादेव किन्तु "क्रतुरश्वमेधः प्रक्रान्त" इतिश्रवणात् रामेण दारान्तरं संगृहीतमेवेति निश्चित्य निन्दति अहहेति।

धिक् निन्दामीत्यर्थः। परिणीतमपि दारान्तरं संगृहीतमपीत्यर्थः। प्राणप्रियतमा सीता निर्वासिता, तदनन्तरञ्चेत् विपत्नीक एव तिष्ठेत्तदापि कियानाश्वासः स्यात् सत्यप्रेमिकत्वात् परिणयान्तरे कृते तु मिथ्याप्रेमिकतया रामस्य नितान्तलघुचेतस्त्वमेव सम्भाव्यत इतिभावः।

(घ) आत्र इति। पापं पापवत् अरुचिकरं रामस्य परिणयान्तरसम्बन्धीयवाक्यं शान्तं विरतं भवत्वित्यर्थः। रामेण परिणयान्तरं न कृतमिति भावः।

(ङ) वासेति। सहधर्म्मचारिणी अभिन्नतया धर्म्मकारिणी पत्नीत्यर्थः।

(च) आत्र इति। हिरण्मयी सुवर्णमयी स्वर्णनिर्म्मितेत्यर्थः सीताप्रतिकृतिः सीतायाः प्रतिमा, यज्ञे सहधर्म्मचारिणीति वाक्यशेषः! युक्तञ्चैतत्—

"यथोक्तवस्तुसम्पत्तौ ग्राह्यं तदनुकारि यत्।
यवानामिव गोधूमा व्रीहीनामिव शालयः।"

इति कात्यायनवचनात्।

(छ) वासेति हन्तभोरिति हर्षविषादसूचकमेकमव्ययं।

वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि कोहि विज्ञातुमर्हति ॥ ७ ॥

आर्व । विसृष्टश्च वामदेवानुमन्त्रितो मेध्योऽश्वः, उपकल्पिताश्च यथाशास्त्रं तस्य रक्षितारः, तेषामधिष्ठाता च लक्ष्मणात्मजश्चन्द्र-केतुः दत्तदिव्यास्त्रसम्प्रदायः चतुरङ्गसाधनान्वितोऽनुप्रहितः (१)। (ज)।

वज्रादपीति। वज्रादपि कठोराणि निष्ठुराणि कथमन्यथा प्राणप्रियतमां निर्वास-यितुं समर्थानीतिभावः, तथा कुसुमादपि मृदूनि पुष्पादपि कोमलानि स्नेहपरतन्त्राणी-त्यर्थः कथमन्यथा निर्वासितायाः सीतायाः प्रतिमां सहधर्माचरणार्थमवलम्बन्त इति भावः। लोकोत्तराणां लोकश्रेष्ठानां चेतांसि मनांसि को जनो विज्ञातुं यथार्थतया बोद्धुं अर्हति अपितु कोपि नेत्यर्थः। प्राणप्रियतमा निर्वासितेति विषादः, पुनस्तस्याएव प्रतिमा यज्ञे सहधर्माचरणायावलम्बितेति आदरातिशयप्रकाशात् हर्षः।—लोकापवाद-जनितप्रजाविरागमोचनार्थमेव सीता निर्वासिता, रामस्य तु सीतां प्रति गाढ़विश्वासः प्रणयातिशयश्चास्त्येव इति भावः।

अत्र कठोरमृद्वोर्विरूपयोः सङ्घटनाद्विषमालङ्कारः, तथा अप्रस्तुतात् लोकोत्तर-सामान्यात् प्रस्तुतस्य रामरूपविशेषस्य प्रतीतेरप्रस्तुतप्रशंसा अर्थापत्तिश्चेत्येतेषामङ्गाङ्गि-भावेन सङ्करः।

हेत्वर्थे हिशब्दः, तथाच चेतोवैचित्र्यात् विज्ञातुं नार्हतीत्यर्थः॥ ७ ॥

(ज) आर्व इति। वामदेवेन तदाख्येन तेनचिन्मुनिना अनुमन्त्रितः मन्त्रपाठेन संस्कृतः, मेध्यः यज्ञे हिंसनीयः "मेधृ हिंसायां"मित्यस्मात् यण् अश्वमेधे हि छिन्नाश्वमांसै र्हूयत इति प्रयोगे द्रष्टव्यं। विसृष्टः प्रेरितः। शास्त्रं शास्त्रविधानमनतिक्रम्येति यथाशास्त्रं तस्य अश्वस्य रक्षितारः उपकल्पिताः निर्द्दिष्टाः, अधिष्ठाता नेता सेनापति-

(१) चतुरङ्गबलान्वितोऽनुप्रहितः इति पाठभेदः।

वास। सस्नेहकौतुकास्यम्। कुमारलक्ष्मणस्यापि पुत्रः? हन्त! मातर्जीवामि। (झ)

आत्रे। अत्रान्तरे ब्राह्मणेन मृतं पुत्रमुत्क्षिप्य राजद्वारे सोरस्ताड़नमब्रह्मण्यमुद्घोषितं, ततो न राजापराधमन्तरेण प्रजास्वकालमृत्युश्चरतीति आत्मदोषं निरूपयति करुणामये रामभद्रे सहसैवाशरीरिणी वागुदचरत्। (ञ)

"शम्बूको नाम वृषलः पृथिव्यां तप्यते तपः।
शीर्षच्छेद्यः स ते राम! तं हत्वा जीवय द्विजम्॥ ८॥

रितियावत् दत्तो दिव्यानामुत्कृष्टानामस्त्राणां सम्प्रदायः समूहो यस्मै सः, चत्वारि अङ्गानि यस्य तेन चतुरङ्गेन साधनेन सैन्येन अन्वितः युक्तः अनुग्रहितः तस्याश्वस्य पश्चात् प्रेरितः। रामेणेति शेषः।

"हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयमित्यमरः।

(झ) वासेति। स्निग्धलक्ष्मणनामश्रवणात् स्नेहः, तत्पुत्रः सेनापतिरिति कौतुकं, द्रष्टुमशक्यत्वादस्रमिति बोध्यं। कुमारो बालकः। यं लक्ष्मणं क्षुद्रबालकमिव दृष्टवती, तस्य पुत्रः, सच सेनापतिकोक्तौति महत् कौतुकं आश्चर्य्यञ्चेति भावः।

यथा "भूतमस्ति भूतमस्ती"त्यादि लौकिकोक्तौ द्वितीयं "भूतमस्ती"ति वाक्यमेव विस्मयव्यञ्जकं तथाऽत्रापि "मात जींवामी"ति वाक्यमेव विस्मयव्यञ्जकमिति दिक्। हन्त हर्षे।

(ञ) आत्र इति। अत्रान्तरे अस्मिन्नवकाशे समय इत्यर्थः।

ब्राह्मणेन केनचिदिति शेषः। उत्क्षिप्य उत्तोल्य संस्थाप्येत्यर्थः। उरसो वक्षसस्ताड़नेन सह इति सोरस्ताड़नं वक्षसि कराघातं कृत्वेत्यर्थः। ब्रह्मणे विप्राय हितं ब्रह्मण्यं, न ब्रह्मण्यं अब्रह्मण्यं ब्राह्मणस्याहितं अमङ्गलमित्यर्थः। उद्घोषितं उच्चैः शब्दितं अब्रह्मण्यमिति कृत्वा उच्चैः शब्दः कृत इत्यर्थः। ततस्तदनन्तरं। अन्तरेण विना। आत्मदोषं आत्मनः शासनदोषं निरूपयति निर्णयति सति। करुणामये, अन्यथा अनेक-

इत्युपश्रुत्यैव कृपाणपाणिः पुष्पकं विमानमारुह्य सर्वा दिशो विदिशश्च शूद्रतापसान्वेषणाय जगत्पतिः सञ्चरितुमारब्धवान् । (ट)

वास । शम्बूको नाम धूमपः शूद्रोऽस्मिन्नेव जनस्थाने तपश्चरति, तदपि नाम रामभद्रः पुनरपीदं वनमलङ्कुर्य्यात् । (ठ)

आत्रे । भद्रे ! गम्यतेऽधुना ।

---

कोटिप्रजेश्वरस्य रामस्य कस्यचित् पुत्रमरणादुद्वेगो न स्यादिति भावः । सहसा तत्क्षणात् । शरीरं शरीरादुत्पत्तिः सा विद्यते यस्या इति शरीरिणी केनचिदुच्चारिता सा न भवतीत्यशरीरिणी आकाशवाणीत्यर्थः । उदचरत् उत्थिता ।

राजापराधात् प्रजानामुपद्रव उक्तो महाभारते—

"असाधुशासनाद्राज्ञो महाभीतिरुपप्लवः ।

प्रवर्त्तते च नियतमकालऋतुरीतयः ॥"

अशरीरिणीं वाचमाह शम्बुक इति । शम्बुकोनाम वृषलः शूद्रः पृथिव्यां तपस्तप्यते चरतीत्यर्थः ! हे राम ! ते तव स शम्बूकः शीर्षे मस्तकावच्छेदे च्छेद्यः छेदनार्हः तस्य शिरश्छेदः कर्त्तव्य इत्यर्थः अतएव तं हत्वा द्विजं ब्राह्मणपुत्रं जीवय ।

शीर्षे छेद्य इति गले बद्धा गौरितिवदधिकरणे सप्तमी ।

(ट) इत्युपेति । अवैवशब्दः शीघ्रत्वसूचनाय । जगत्पतिः पृथिवीश्वरो रामः कृपाणपाणिः खड्गहस्तः सन् पुष्पकं पुष्पकनामकं विमानं व्योमयानं । विदिश अग्न्यादिकोणान् ।

"दिशोर्मध्ये विदिक् स्त्रिया"मित्यमरः ।

(ठ) वासेति । धूमपो यज्ञीयधूममात्रपानकारी नित्योपवासीत्यर्थः । तत्तस्मात्हेतोः । अलङ्कुर्य्यात् आगमनेन शोभयेत् । प्रथमोऽपिशब्दः प्रश्ने, नामशब्दः सम्भावनायां । अलङ्कुर्य्यादिति सम्भावनां कर्त्तुमर्हामि किमित्यर्थः । द्वितीयोऽपिशब्दः समुच्चये ।

बास । एवमस्तु, कठोरीभूतोऽयं दिवसः । तथाहि (ड)

कण्डूलद्विपगण्डपिण्डकषणोत्कम्पेन सम्पातिभि—
र्घर्म्मस्रंसितबन्धनैः स्वकुसुमैरर्च्चन्ति गोदावरीम् ।
छायाऽपस्किरमाणविष्किरमुखव्याकृष्टकीटत्वचः
कूजत्क्लान्तकपोतकुक्कुटकुलाः कूले कुलायद्रुमाः ॥८॥

(ड) वासेति । कठोरीभूतः दारुणातपसन्तापाद्दुरतिक्रम इत्यर्थः । तथाहि तमेवार्थं जानीहीत्यर्थः ।

कण्डूलेति । कूले तीरे गोदावर्य्या इत्यर्थः स्थिता इति शेषः । छायायां अपस्किरमाणाः कीटवहिष्करणार्थं तरुषु चञ्चुवातं कुर्वन्तो ये विष्किराः पक्षिणः, तेषां मुखैः करणभूतैः व्याकृष्टा आकृष्य बहिष्कृताः कीटा याभ्यः तास्तथोक्ता त्वचो वल्कलानि येषां ते तथोक्ताः, तथा कूजन्ति शब्दायमानानि क्लान्तानि आतपतापात् खिन्नानि कपोतकुक्कुटानां समूहा येषु ते तथोक्ताः कुलायद्रुमाः नीड़वृक्षाः कण्डूलानां कण्डूयनयुक्तानां द्विपगण्डपिण्डानां हस्तिकपोलदेशानां कषणेन घर्षणेन य उत्कम्पः चलनं तेन सम्पातिभिः पतद्भिः तथा घर्म्मेण आतपतापेन स्रंसितानि ध्वस्तानि बन्धनानि वृन्तानि येषां तैः स्वकुसुमैः स्वकीयपुष्पैः गोदावरीं नदीं अर्च्चन्ति पूजयन्तीव । दारुणातपतापस्येदृशं व्यापार इति भावः ।

अत्र अर्च्चन्तीत्यत्र इवशब्दाभावात् वृक्षाणाञ्च पूजनायोग्यत्वात् इवशब्दोऽध्याहार्य्य इति प्रतीयमाना भावाभिमानिनी क्रियोत्प्रेक्षाऽलङ्कारः स्वभावोक्तिश्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः वृत्त्यनुप्रासश्च शब्दालङ्कारः ।

"विविष्किरपतत्रयः" "कुलायो नीड़मस्त्रियाम्" मितिचामरः ।

"घर्म्मः स्यादातपे ग्रीष्मेऽप्युष्म स्वेदाम्भसोरपी"ति मेदिनी ।

अर्च्चतिरयं भौवादिकः । कण्डूरेषामस्तीति कण्डूलाः सिध्मादित्वाल्लच् । अपस्किरमाण इति अपपूर्वात् किरतेः "अपस्किर" इत्यात्मनेपदविधानविषयत्वादानश् "अपाच्चतुष्पा"दित्यादिना सुट् ।

शार्दूलविक्रीड़ितं वृत्तं ॥ ८ ॥

इति परिक्रम्य निष्क्रान्ते। (ढ)

**विष्कम्भकः॥ (ण)**

ततः प्रविशति सदयोद्यतखड्गो रामभद्रः। (त)

रामः। **रे हस्त! दक्षिण! मृतस्य शिशोर्द्विजस्य**
**जीवातवे विसृज शूद्रमुनौ कृपाणम्।**

(ढ) इतीति। परिक्रम्य इतस्ततः पादविक्षेपं कृत्वा निष्क्रान्ते आत्रेयीवासन्त्याविति शेषः।

(ण) विष्केति। भूतानां भाविनीनाञ्च घटनानामुपस्थापकः संयोजको वा संक्षिप्तः प्रबन्धोविष्कम्भकः। तथाच साहित्यदर्पणे—

"वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः।
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः॥"

तथाचास्मिन् प्रबन्धे सीतानिर्वासनं कुशलवयोर्जन्म, तयोर्वाल्मीकिसमीपे समर्पणं शिक्षाचेत्यादीनामतीतघटनानामुपस्थापनं तथा शम्बूकवधार्थं रामस्य भ्रमणं, शम्बूकवधः, अश्वमेधायोजनञ्चेत्यादीनां भविष्यद्घटनानामुपस्थापनं द्रष्टव्यं। सचायं शुद्धो विष्कम्भकः मध्यमाभ्यामात्रेयीवासन्तीभ्यां प्रयोजितत्वात्, यथा साहित्यदर्पणे—

"मधेन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः।
शुद्धः स्यात् सतु सङ्कीर्णो नीचमध्यमकल्पितः॥"

(त) तत इति। सदयं सकरुणं उद्यत उत्तोलितः खड्गो येन सः। वधार्हापराधं विना वधोद्यमात् सदयेत्युक्तं।

रे हस्तेति। रे इत्यवज्ञयसम्बोधनसूचकमव्ययं। अवज्ञा च सीतानिर्वासनकरणार्थेवेति बोध्यं। रे दक्षिण हस्त! मृतस्य द्विजस्य शिशोः ब्राह्मणबालकस्य जीवातवे जीवनाय शूद्रएव मुनिस्तस्मिन् कृपाणं खड्गं विसृज निक्षिप, ब्राह्मणशिशूज्जीवनमेव प्रहारस्य

(१) कुशलकान्त इति पाठान्तरं

रामस्य गात्रमसि, दुर्वहगर्भखिन्न-
सीताविवासनपटोः (१) करुणा कुतस्ते ? ॥ १० ॥

अथ कथञ्चित् प्रहृत्य । कृतं रामसदृशं कर्म्म, अपि जीवेत् स ब्राह्मणशिशुः ? । (थ)

---

मुख्यमुद्दिश्य नतु शम्बूकहत्येति भावः। ननु प्रहारयोग्यापराधाभावे कथं प्रहरासि दयैव मां निवारयतीत्याह त्वं रामस्य गात्रं अङ्गमित्यर्थ असि भवसि, तेन किमित्याह दुर्वहो यो गर्भः गर्भभार इत्यर्थः तेन खिन्ना श्रान्ता या सीता तस्या विवासने वनप्रेरणे पटुर्निपुण स्तस्य ते तव कुतः करुणा दया कुतोऽपि नेत्यर्थः। प्रायेण सर्वस्यैव कार्य्यस्य दक्षिणहस्तेन क्रियमाणत्वात् सीतानिर्वासनस्यापि दक्षिणहस्तेनैव कृतत्वोक्तिरुपचारात् सङ्गच्छते। यः पूर्णगर्भभारक्लान्तायाः प्राणप्रियतमायाः सीताया निर्वासनं कृतवान्, तस्य तव निःसम्पर्कसापराधजनप्रहारे दया न सम्भवत्येवेति भावः।

अत्र करुणाभावं प्रति सीताविवासनपटुत्वं हेतुरिति पदार्थहेतुकं काव्यलिङ्ग-मलङ्कारः अर्थापत्तिश्चेत्यनयोरङ्गाङ्गित्वेन सङ्करः।

"जीवातुरस्त्रियां भक्ते जीविते जीवनौषधे" इति मेदिनी।

ननु "अग्निहोत्रं तपः सत्यं वेदानाञ्चानुपालनं
आतिथ्यं वैश्वदेवञ्च इष्टमित्यभिधीयते।
इष्टापूर्त्तौ द्विजातीनां धर्म्मः सामान्य इष्यते
अधिकारी भवेच्छूद्रः पूर्त्तधर्म्मे, न वैदिके॥"

इति हारीतवचनात् शूद्रस्य तपश्चरणे अधिकाराभावात् पापमेव, सुतरां अपराधोऽपि मन्तव्य एव किन्तु स न प्राणदण्डार्ह इति, सत्यं, "शम्बूको नाम वृषल" इत्याद्याकाश-वाणीविश्वासादेव रामेण शम्बूकस्य प्राणदण्डः कृतो न तु शास्त्रत इति दिक्। वसन्त-तिलकावृत्तं॥ १०॥

(थ) अथेति। अथ अनन्तरं। कथञ्चित् कष्टेनेत्यर्थः, प्रहारायोग्ये अपराधिनि

---

(१) सीताप्रवासनपटोरितिपाठान्तरं।

प्रविश्य दिव्यपुरुषः। जयति जयति देवः । ( द )

दत्ताभये त्वयि यमादपि दण्डधारे
सञ्जीवितः शिशुरयं मम चेयमृद्धिः ।
शम्बूक एष शिरसा चरणौ नतस्ते
सत्सङ्गजानि निधनान्यपि तारयन्ति ॥ ११ ॥

---

प्रहारकरणे दुःखमेव स्यादिति कवेरभिप्रायः। रामसदृशं रामोचितं। येन निरपराधायाः सीतायाः निर्वासनेन हत्या कृता तस्य अतिनृशंसस्य रामस्य निरपराधशम्बूकहत्याकरणं योग्यमेव अनुरूपत्वादिति भावः। गभीरविषादाक्षेपोक्तिरियं। अपिशब्दः प्रश्ने।

( द ) प्रविश्येति। दिव्यपुरुषः स्वर्गीयाकृतिविशिष्टः कश्चित् पुरुष इत्यर्थः।

दत्तेति। यमादपि दत्तं अभयं येन तादृशे भगवन्नारायणावतारतया यमभयनिवारके इत्यर्थः। देवयोनिविशेषः शम्बूको रामं नारायणावतारत्वेन जानातीति तस्य ईदृशोक्तिः सङ्गच्छत इति भाव्यं। त्वयि रामचन्द्रे दण्डधारे दन्डकारिणि सति अयं शिशुः सञ्जीवितः, मम च इयं दिव्याकृतिलाभरूपा ऋद्धिः अभ्युदयः। अतएव एष शम्बूकः शिरसा ते तव चरणौ नतः नमस्करोतीत्यर्थः। ननु दन्डविधानात् कथमृद्धिः स्यादित्याह सत्सङ्गजानि सतां संसर्गादुत्पन्नानि निधनान्यपि मरणान्यपि तारयन्ति "सद्वृत्तसन्निकर्षोहि क्षणार्द्धमपिशस्यत" इत्युक्तेः पापादुद्धारयन्तीत्यर्थः।

अत्र दन्डरूपकारणात् ऋद्धिरूपविरुद्धफलोत्पत्तेर्विषमालङ्कारः, तथा ऋद्धिरूपविशेषस्य सत्सङ्गजातनिधनकृततारणरूपसामान्येन समर्थनात् अर्थान्तरन्यासश्च अनयोः संसृष्टिः।

राजदण्डस्य पापनाशकत्वमभ्युदयहेतुत्वञ्चाह मनुः—

"राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः ।
निर्म्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥

वसन्ततिलका वृत्तं ॥ ११ ॥

रामः। इयमपि प्रियं नः, तदनुभूयतामुग्रस्य तपसः परिपाकः। (ध)

यत्रानन्दाश्च मोदाश्च यत्र पुण्याश्च (१) सम्पदः।
वैराजा नाम ते लोका स्तैजसाः सन्तु ते ध्रुवाः (२) ॥१२॥

शम्बूः। युष्मत्पादप्रसादोपाय एव महिमा, किमत्र तपसा (३) अथवा महदुपकृतं तपसा। (न)

(ध) राम इति। इयमपि ब्राह्मणशिशो र्जीवनं तत्र च दिव्यदेहप्राप्तिः एतद्द्वयमपीत्यर्थः। यद्यपि ब्राह्मणशिशो र्जीवनमेव हत्याया मुख्यमुद्देश्यमासीत् तथापि प्रसङ्गसिद्धापि शम्बूकस्य दिव्यदेहप्राप्तिः प्रीतिजनिकैव सतां पराभ्युदयदर्शनेन प्रीतेरेवं सम्भवादिति भावः। तत् तस्मात्। उग्रस्य दारुणस्य दुष्करस्येत्यर्थः। परिपाकः फलं। शूद्रस्यैव तपस्यनधिकारः, किन्तु देवयोनिविशेषस्य शम्बूकस्य तपस्यधिकार आसीदेव सुतरां तस्य फलमपि सम्भवत्येवेति बोध्यं।

किन्तत् फलमित्याह यत्रेति। यत्र येषु लोकेषु आनन्दाः ब्रह्मप्रीतयः, मोदा नानाविधसम्भोगाः, यत्र येषु च पुण्याः पवित्रा नतु मर्त्यवत् दुर्व्यवहारादिना कलुषिताः सम्पदः धनजनादिसम्पत्तयः सन्तीतिशेषः। विराजो ब्रह्मण इमे इति वैराजा ब्रह्मसम्बन्धीयाः नाम्नाच वैराजाः तैजसाः आलोकमया स्ते लोका ब्रह्मलोका इत्यर्थः ते तव ध्रुवा नित्या अक्षया इति यावत् सन्तु भवन्तु। त्वं चिरमेव ब्रह्मलोके तिष्ठेत्यर्थः। एतदेव तव तपसः फलं, नत्वयमाशीर्वादो वरो वेति भावः ॥ १२ ॥

(न) शम्बूरिति। युष्माकं पादस्य चरणस्य प्रसादः अनुग्रह एव उपायः कारणं यस्य स तथोक्तः, एष मम ब्रह्मलोकलाभरूपः महिमा माहात्म्यं। अत्र महिम्नि विषये तपसा किं कृतमित्यर्थः। ममेयं ब्रह्मलोकप्राप्तिसम्भावना तवानुग्रहादेव नतु तपसेत्यर्थः।

(१) पुण्याभिसम्भवाः इति क्वापि पाठः। (२) शिवा इति पाठभेदः। (३) नतु तपसः फलमिति पाठान्तरं।

अन्वेष्टव्यो यदसि भुवने भूतनाथः शरण्यो
मामन्विष्यन्निह वृषलकं योजनानां शतानि ।
क्रान्त्वा प्राप्तः, स इह तपसां (१) सम्प्रसादोऽन्यथा चेत्
क्वायोध्यायाः पुनरुपगमो दण्डकायां वने यः ? ॥१३॥

रामः । किं नाम दण्डकेयम् ? । सर्वतोऽवलोक्य । आं । (प)

---

तपसा कृतं महान्तमुपकारमाह अन्वेष्टव्य इति । भुवने जगति भूतानां प्राणिनां नाथः पतिः तथा शरणेषु रक्षकेषु साधुः शरण्यः रक्षकश्रेष्ठ इत्यर्थः अतएव अन्वेष्टव्यः सर्वेषां साक्षात्कर्त्तव्यस्त्वं वृषलकं कुत्सितशूद्रं मां अन्विष्यन् विचिन्वन् सन् योजनानां शतानि क्रान्त्वा विलङ्घ्य इह अस्मिन् महारण्ये यत् प्राप्तोऽसि आगतोऽसि, स तवागमः तपसां मत्कृतानामित्यर्थः सम्प्रसादः अनुग्रहः अनुग्रहजन्य इत्यर्थः । चेत् यदि अन्यथा तपःकृतानुग्रहजन्यो न स्वीक्रियेतेत्यर्थः तदा अयोध्याया निजराजधान्याः सकाशात् दण्डकायां वने दण्डकारण्ये वो युस्माकं क्व कस्मिन् निमित्ते पुनः द्वितीयवारं हेतुं विनेत्यर्थः उपगम आगमनं भवेदितिशेषः कथमपि नेत्यर्थः ।

अत्र "विपुलेन सागरशयस्य कुक्षि"णेत्यादिसाहित्यदर्पणोदाहृतवत् एकस्मिन् रामे अन्वेषणकर्मत्वकर्तृत्वयोर्विरूपयोः सङ्घटनाद्विषमालङ्कारः, तथा वधोद्देशजनितरामगमने तपोऽनुग्रहजन्यत्वमध्यवसितमिति भेदे अभेदाध्यवसायरूपा अतिशयोक्तिश्चेत्यनयोः संसृष्टिः ।

"शरणं गृहरक्षित्रो"रित्यमरः ।

शरण्य इति साधावर्थे यप्रत्ययः । वृषलकमिति कुत्सायां कप्रत्ययः ।

"दन्डकायां वने" इति 'अम्बिका कलत्र'मित्यादिवदुभयोरप्यजहल्लिङ्गत्वात् लिङ्गवैषम्येऽपि विशेष्यविशेषणता ।

मन्दाक्रान्ता वृत्तं ॥ १३ ॥

(प) राम इति । आंशब्दो निश्चये, दण्डकैवेयमित्यर्थः ।

---

(१) तपस इति पाठभेदः ।

स्निग्धश्यामाः क्वचिदपरतो भीषणाभोगरूक्षाः
स्थाने स्थाने मुखरककुभो झाङ्कृतैर्निर्झराणाम् । (१)
एते तीर्थाश्रमगिरिसरिद्गर्त्तकान्तारमिश्राः (२)
संदृश्यन्ते परिचितभुवो दण्डकारण्यभागाः ॥ १४ ॥

"आं ज्ञाननिश्चयस्मृत्यो"रिति मेदिनी।

स्निग्धेति। क्वचित् कस्मिंश्चिद्विभागे स्निग्धाः नवपत्रपल्लवशालित्वात् तैलाक्ता इव, श्यामाः श्यामलाश्च, तथा अपरतः अन्यस्मिन् विभागे भीषणो य आभोगः परिपूर्णता विस्तीर्णतेति यावत् तेन रूक्षाः कर्कशाः, स्थाने स्थाने पदे पदे निर्झराणां पार्वत्यप्रस्रवणानां झाङ्कृतैः झामितिशब्दैः मुखराः शब्दायमानाः ककुभो दिशो येषु ते, तीर्थानि मुनिगणसेवितजलानि, आश्रमाः मुनीनां तपोवनानि, गिरयः पर्वताः, सरितो नद्यः, गर्त्ताः बिलानि, कान्ताराः दुर्गमाः पन्थानः तैर्मिश्रा युक्ताः, परिचिताः पूर्वं ज्ञाताः भुवः स्थानानि येषु ते, एते सम्मुखवर्त्तिनः दण्डकारण्यभागाः दण्डकारण्यस्य प्रदेशाः संदृश्यन्ते अवलोक्यन्ते।

अत्र स्वभावोक्तिरलङ्कारः। भयानको रसः।

"आभोगः परिपूर्णता"। "दिशस्तु ककुभः काष्ठाः"। "निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ"। "महारण्ये दुर्गपथे कान्तारः पुंनपुंसक" मिति चामरः।

इक्ष्वाकुराजपुत्रो दण्डनामा शुक्राचार्यकन्यां अरजानाम्नीं बलेन धर्षितवान्, शुक्राचार्यस्तच्छ्रुत्वा "अद्यावधि सप्ताहमध्ये तव राज्यं स्थावरजङ्गमात्मकं सर्वमेव नाशं प्राप्स्यति, त्वञ्च मरिष्यसीति" शप्त्वा तन्निकटवर्त्तिनो जनानबोचत् "सत्वरं यूयमस्मात् राज्यादपसृत्य तिष्ठते"ति ततश्च दण्डराज्यं अरण्यतया परिणतं, जनाश्च तस्माद्देशादपसृत्य स्थिताः तेन दण्डराज्यं दण्डकारण्यं, तेषां जनानां निवासस्थानञ्च जनस्थानमित्युच्यते इति रामायणवार्त्ताऽत्रानुसन्धेया। मन्दाक्रान्ता वृत्तं ॥ १४ ॥

(१) द्राङ्कैः, श्वाङ्कृतैरिति पाठान्तरद्वयं।

(२) गर्भकान्तारमिश्रा इति पाठान्तरं।

शम्ब्। दण्डकेयं, अत्र किल निवसता देवेन (फ)

चतुर्द्दशसहस्राणि रक्षसां भीमकर्म्मणाम्।
त्रयश्च दूषणखरत्रिमूर्द्धानो रणे हताः (१)॥ १५॥

येन सिद्धक्षेत्रेऽस्मिन् जनस्थाने मादृशानामपि भीरुजानपदानामकुतोभयः (२) सञ्चारो जातः। (ब)

रामः। न केवलं दण्डकेयं, (३) जनस्थानमपि? (भ)

शम्ब्। बाढ़ं, एतानि सर्वभूतलोमहर्षणान्युन्मत्तचण्डश्वापदकुलसङ्कुलगिरिगह्वराणि जनस्थानपर्य्यन्तानि दीर्घारण्यानि दक्षिणां दिशमभिवर्त्तन्ते (म) तथाहि

---

(फ) शम्बुरिति। देवेन भवतेत्यर्थः।

चतुरिति। भीमं भयङ्करं कर्म्म हिंसादिकं येषां तेषां रक्षसां राक्षसानां चतुर्दशसहस्राणि तथा तेषां नेता दूषणः खरः त्रिमूर्द्धा त्रिशिराः एते त्रयश्च रणे हताः व्यापादिताः।

त्रयो मूर्द्धानो यस्येति विग्रहे "द्वित्रिभ्यां मूर्द्धन्" इतिराजादित्वात् अत्प्रत्ययेन 'त्रिमूर्द्ध' इत्येवं प्रयोगः स्यात् तथाच भट्टी "रघुतनयमुपाययौ त्रिमूर्द्ध" इति सुतरामत्र च्युतसंस्कारतादोषः, स च……'त्रिमूर्द्धाः समरे हता' इति पाठेन समाधेयः।

पथ्यावक्त्रं वृत्तं॥ १५॥

(ब) येनेति। येन दूषणखरादिराक्षसवधेन। सिद्धानां अणिमादिसिद्धानां क्षेत्रे स्थाने। न विद्यते कुतोऽपि भयं यस्मिन् सः अकुतोभयः, सञ्चारो गमनागमनं।

(भ) राम इति। अत्रापिशब्दः प्रश्ने। सीतासमेतपर्य्यटनस्थानदर्शनेन गभीरविषादोक्तिरियं रामस्य।

(म) शम्बुरिति। बाढ़ं सत्यं, दण्डकेयं जनस्थानञ्चेदमिति स्वीकारोक्तीत्यर्थः

---

(१) निपातिता इति क्वापि पाठः। (२) भीरुजनानामिति पाठभेदः। (३) न केवलं दण्डका, किन्तु न केवलं दण्डकेव, न केवलं दण्डकारण्यमिति पाठान्तराणि।

निष्कूजस्तिमिताः क्वचित् क्वचिदपि प्रोच्चण्डसत्त्वस्वनाः
स्वेच्छासुप्तगभीरभोगभुजगश्वासप्रदीप्ताग्नयः।
सीमानः प्रदरोदरेषु विलसत् स्वल्पाम्भसो यास्वयं
तृष्यद्भिः प्रतिसूर्य्यकैरजगरस्वेदद्रवः पीयते ॥ १६ ॥

"भयप्रतिज्ञयोर्बाढ़"मिति द्वान्तनानार्थेऽमरः "प्रतिज्ञा अङ्गीकार" इति तट्टीका च। सर्वेषां भूतानां प्राणिनां लोमहर्षणानि भयेन रोमाञ्चजनकानि, तथा उन्नतानि चित्रप्रायाणि चण्डाणि अत्यन्तक्रुद्धानि च यानि श्वापदकुलानि व्याघ्रादिहिंस्रजन्तुगणाः तैः सङ्कुलानि व्याप्तानि गिरिगह्वराणि पर्वतगुहा येषु तानि, जनस्थानं पर्यन्तः सीमा येषां तानि। अभि लक्ष्यीकृत्य वर्त्तन्ते दक्षिणदिग्लम्बमानानीत्यर्थः।

निष्कूजेति। क्वचित् कस्मिंश्चिद्भागे निष्कूजाः हिंस्रसञ्चारात् पक्ष्यादीनामपि शब्दरहिताः, अतएव स्तिमिताः निश्चलाः, तथा क्वचिदपि भागे प्रोच्चण्डाः भयङ्कराः सत्त्वानां जन्तूनां स्वनाः शब्दा यासु ताः, क्वचिच्च स्वेच्छया नतु केनाप्युपद्रवेण क्लान्ततयेत्यर्थः सुप्ता निद्रिता ये गभीरभोगा विशालशरीरा भुजगाः सर्पाः तेषां श्वासेन निश्वासवायुना प्रदीप्तोऽग्नि र्यासु ताः, प्रदराणां विदीर्णभूमिगर्त्तानां उदरेषु मध्येषु विलसत् प्रकाशमानं स्वल्पं अम्भो जलं यासां ताः सीमानः भागविशेषाः वर्त्तन्ते इति शेषः। यासु सीमसु तृष्यद्भिः पिपासुभिः प्रतिसूर्य्यकैः क्रकलासैः अजगराणां महावृहत्सर्पाणां अयं दृश्यमानः स्वेदद्रवः घर्म्मजलं पीयते। सुतरां लोमहर्षणमिदं वनमिति भावः।

अत्र स्वभावोक्तिरलङ्कारः। गभीरशब्दस्य निम्नार्थे शक्तत्वात् अत्र तु विशालार्थे लक्षणया प्रयोगात् तस्याश्च लक्षणाया रूढ़िप्रयोजनाभावात् नेयार्थत्वदोषः, स च विशाल-भोगेति पाठेन समाधेयः।

निष्कूजस्तिमिता इत्यनेन हिंस्रजन्तुसञ्चारो व्यज्यत इति वस्तुना वस्तुध्वनिः।

"चण्डस्त्वत्यन्त कोपनः।" "द्रव्यासु व्यवसायेसु सत्त्वमस्त्री तु जन्तुषु।" "भोगः सुखे स्त्र्यादिभृता वहेश्च फणकाययोः।" "दरोऽस्त्रियां भयेश्वभ्रे" इति चामरः।" प्रतिसूर्य्यकः क्रकलासः।" "अजगरः स्वनामख्यातवृहत्सर्पः" इति च शब्दकल्पद्रुमः।

रामः। पश्यामि च जनस्थानं भूतपूर्वखरालयम्।
प्रत्यक्षानिव (१) वृत्तान्तान् पूर्वाननुभवामि च ॥१७॥

सर्वतोऽवलोक्य। सर्वथा प्रियारामा हि वैदेह्यासीत्, एतानि तानि नाम कान्ताराणि, किमतः परं भयानकं स्यात्। (य)

शार्द्दूलविक्रीडितं वृत्तं ॥ १६ ॥

पश्यामीति। भूतपूर्वः खरस्य तदाख्यराक्षसस्य आलयो निवासो यस्मिन् तत् तथोक्तं जनस्थानं पश्यामि च, पूर्व्वानतीतान् वृत्तान्तान् खरदूषणादिभिः सह युद्धादिघटनावलीरित्यर्थः प्रत्यक्षानिव अनुभवामि च। दर्शनसमय एव अतीतघटनावलीना प्रत्यक्षवदनुभव इत्यर्थः।

अत्र पश्यामि अनुभवामीति क्रियासमुच्चयोऽयमलङ्कारः, तथा अतीतघटनानां प्रत्यक्षायमाणत्वात् भाविकालङ्कारश्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः। तथाच साहित्यदर्पणे—

"अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यतः।
यत्प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतं॥"

केचित्तु प्रत्यक्षत्वोत् प्रेक्षा इति वदन्ति।

पूर्वं भूत इति भूतपूर्वः "षष्ठ्यन्ताद्भूतपूर्वाभिधेये रूप्यश्चे"ति ज्ञापकात् भूतशब्दस्य पूर्वनिपातः॥ १७॥

(य) सर्वेति। सर्वतः समन्ततः सर्वासु दिक्षु इत्यर्थः "समन्ततस्तु परितः सर्वतो विष्वगित्यपी"त्यमरः अत्रारामपदेन वनमात्रमभिप्रेतं तेन प्रियः प्रीतिकर आरामोवनं यस्याः सा। हि शब्दोऽवधारणे। एतानि दृश्यमानानि, तानि येषु पूर्वं सीतया सह पर्य्यटितं तानीत्यर्थः, कान्ताराणि महारण्यानि। अत एकाकिनो मम वनदर्शनात् परं किं वस्तु भयानकं दारुणदुःखकरत्वेन भयङ्करं स्यात् अपि तु किमपि नेत्यर्थः। येषु वनेषु सीतया सह महामोदेन भ्रमणं कृतवान् अद्य तेष्वेव वनेषु सीतां विना केवलमहं भ्रमामीति महादुःखकरमेतदिति भावः।

(१) प्रत्यक्षमिवेति पाठान्तरं।

सास्रम्। त्वया सह निवत्स्यामि वनेषु मधुगन्धिषु।
इति हा रामतैवासौ (१) स्नेहस्तस्याः स तादृशः ॥१८॥
अकिञ्चिदपि कुर्वाणः सौख्यै र्दुःखान्यपोहति।
तत्तस्य किमपिद्रव्यं योहि यस्य प्रियोजनः ॥ १९ ॥

त्वयेति। त्वया रामेण सह मधुना पुष्परसेन गन्ध इति मधुगन्धः स एषा मस्तीति मधुगन्धीनि तेषु, प्रस्फुटितनानाकुसुमशालिष्वित्यर्थः वनेषु निवत्स्यामि, स्थास्यामि, न तु त्वां विना राजधान्यामपि स्थातुमिच्छामीति भावः। इति एवं उक्तिविशेषः सीता अरमत आनन्दं प्रकाशितवती। हा इति शोकसूचकमव्ययं। स सत्यः सीतायाः स्नेहः स इव सीतायाः स्नेह इव दृश्यत इति तादृश आसीदिति शेषः। सीतास्नेहः सीतास्नेह इवासीदित्यर्थः।

अत्र एकस्यैव स्नेहस्य उपमानोपमेयत्वकल्पनात् अनन्वयाऽलङ्कारः।

"उपमानोपमेयत्व मेकस्यैवत्वनन्वय" इति साहित्यदर्पणात्।

तेन तत् स्नेहस्यासाधारणत्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ १८ ॥

अकिञ्चिदिति। अकिञ्चिदपि कुर्वाणः कञ्चिदपि दुःखनाशोपायं न कुर्वाणोऽपीत्यर्थः प्रयो जनः, सौख्यैः अवलोकनालापादिजनिताभिरविच्छिन्नसुखधाराभिरित्यर्थः दुःखानि संसारक्लेशान् अपोहति नाशयति। कथमेतत् सम्भवतीत्याह, हि यस्मात् यो जनो यस्य प्रियः तत् स जन इत्यर्थः तस्य किमपि अनिर्वचनीयं अमूल्यं वा द्रव्यं धनं। सुतरां तादृशजनलाभेनैव दुःखनाशः सम्भवति, सीता च ममैवं प्रियजन आसीदिति भावः।

अत्र अप्रस्तुतात् प्रियजनसामान्यात् प्रस्तुतस्य सीतारूपविशेषप्रियजनस्य प्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः, तथा किञ्चिदकरणेऽपि दुःखनाशोत्पत्तेर्विभावना, सा च सौख्यैरितुक्तेरुक्तनिमित्ता, तथा दुःखनाशं प्रति प्रियजनस्य अमूल्यधनत्वं हेतुरिति कारणेन

(१) इति च रमतैवासौ, इति हा रमते सीता, इतीवारमतीवासौ इति पाठान्तराणि।

शम्बू। तदलमेभिर्दुरासदैः। अथैतानि मदकलमयूरकण्ठ कोमलच्छविभिरवकीर्णानि पर्य्यन्तै (१) रविरलनिविष्ट नील-बहलच्छायतरुषण्डमण्डितानि असम्भ्रान्तविविधमृगयूथानि पश्यतु महानुभावः प्रशान्तगम्भीराणि मध्यमारण्यकानि। (२)

---

कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः, तथा प्रियोजनः किमपि द्रव्यमिति निरङ्गं केवलं रूपकमित्येनेषामङ्गाङ्गित्वेन सङ्करः। तथा कुर्वाण इत्यनेन सम्बन्धयोग्यस्य नञः किञ्चिदित्येनेन योगात् अभवन्मतनसम्बन्ध दोषः स च 'किञ्चिदपि न कुर्वाण' इति पठेन समाधेयः।

"द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु"इत्यमरः।

सुखानां कर्म्माणि (दर्शनादीनि) इति "गुणवचनब्राह्मणादिभ्य" इत्यादिना यण् इति सौख्यानि। तदिति "य आचार स्तदविकरण" मितिवत् द्रव्यमित्यस्य विशेषणत्वेन नपुंसकं ॥ १९ ॥

(२) शम्बुरिति। भीषणवनदर्शनजनितोयं रामस्य विषाद इति भमेण कोमल-वनदर्शनेन तं विषादमपनेतुमाह तदलमित्यादि। दुःखेन आसद्यते चक्षुषा गृह्यत इति दुरासदानि, तैरेभिर्वनै रलं विषादभीतिवर्द्धकतया एषां वनानां वर्णनं दर्शनञ्च निष्प्रयो-जनमित्यर्थः। अथेति वाक्यान्तरारम्भे। महानुभावो महाप्रभावो भवान् एतानि अग्रवर्त्तीनि, मदकला अव्यक्तशब्दकारिणो ये मयूराः तेषां कण्ठानामिव कोमला स्निग्धा छविः कान्तिर्येषां तैः, पर्य्यन्तैः परिसरैः शेषभागैरिति यावत् अवकीर्णानि विच्छिन्नानि वेष्टितानीत्यर्थः, तथा अविरलं अनवकाशं घनमिति यावत् यथा तथा निविष्टाः स्थिता अतएव नीला श्यामला, बहला गाढ़ा च छाया येषां ते तथोक्ता ये तरुणा नवीना तरु-षण्डा वृक्षसमूहा स्तैर्मण्डितानि भूषितानि, तथा असम्भ्रान्तं भयाभावात् अचकितं विवि-धानां नानाप्रकाराणां मृगाणां हरिणानां यूथं समूहो येषु तानि, तथा प्रशान्तानि

---

(१) पर्वतैरिति क्वापि पाठः।

इह समदशकुन्ताक्रान्तवानीरवीरुत्-
प्रसवसुरभिशीतस्वच्छतोया वहन्ति ।
फलभरपरिणामश्यामजम्बूनिकुञ्ज-
स्खलनमुखरभूरिस्रोतसो निर्झरिण्यः ॥ २० ॥

अपि च ( ल ) दधति कुहरभाजामत्र भल्लूकयूना-
मनुरसितगुरूणि स्त्यानमम्बूकृतानि ।

---

सौम्यानि च तानि, गम्भीराणि दुरवगाहानि अनन्तानि चेति, तानि, मध्यमारण्यकानि मध्यवर्त्तीनि वनानि पश्यतु । शान्तस्निग्धवस्तुदर्शनेन मनसः प्रफुल्लता स्यादिति वक्तुरभिप्रायः ।

"मदकलः । अव्यक्तप्रलापी" । "बहलः । दृढ़" । इति च शब्दकल्पद्रुमः । यद्यपि "कदम्बे षन्डमस्त्रियाम्" नित्यमरेण पद्मादिसमूहएव षन्डशब्दस्य शक्तिरभिहिता, तथापि प्राणिसमूहवाचकसङ्घशब्दस्य "कैकोव्यञ्जनसङ्घस्य" इत्यदावप्राणिसमूहेऽपि प्रयोगवत् अजहत् स्वार्थलक्षणया तरुषन्डेत्यत्रापि सामान्यसमूहेपि षण्डशब्दस्य प्रयोगः ।

इहेति । इह मध्यमारण्ये समदैः मत्तैः, शकुन्तैः पक्षिभिः, आक्रान्तानां उड्डीय आश्रितानां वानीरवीरुधां वेतसलतानां प्रसवैः पुष्पैः सुरभीणि सुगन्धानि, शीतानि स्वभावशीतलानि स्वच्छानि अतीवनिर्म्मलानि तोयानि जलानि यासां तास्तथोक्ताः । तथा फलभराणां फलसमूहानां परिणामेन पक्कतया श्यामाः श्यामवर्णा ये जम्बूनिकुञ्जा घनीभूतजम्बूवृक्षा छादितदेशा इत्यर्थः, तेषु स्खलनेन प्रतिघातेन मुखराणि शब्दायमानानि भूरीणि प्रचुराणि स्रोतांसि प्रवाहा यासां ता स्तथोक्ता निर्झरिण्यो नद्यो वहन्ति प्रवहन्ति ।

अत्र स्वभावोक्तिरलङ्कारः । मालिनी वृत्तं ॥ २० ॥

( ल ) अपिचेति । अन्यच्च वक्तव्यमस्तीति शेषः ।

दधतीति । अत्र मध्यमारण्ये कुहरभाजां गिरिगह्वरवासिनां भल्लूकयूनां तरुणभल्लूकानां अनुरसितेन प्रतिध्वनिना गुरूणि वर्द्धितानीत्यर्थः अम्बूकृतानि सनिष्ठीवशब्दाः

शिशिरकटुकषायः स्त्यायते शल्लकीना-
मिभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः॥ २१ ॥

रामः। सवाष्पस्तम्भम्। भद्र! शिवास्ते पन्थानः, देवयानं प्रतिपद्यस्व पुण्येभ्यो लोकेभ्यः। (ब)

---

घुत्कारशब्दा इति यावत् घुत्कारस्तु भल्लूकानां स्वभावः स्तनानं वृद्धिं दधति धारयन्ति, घुत्कारशब्दा व्रजन्तः अयन्त इत्यर्थः। शल्लकीनां लताविशेषाणां शिशिरः शीतलः कटुः कटुरसः कषायः सुरभिश्च इभैर्हस्तिभिः दलिता मर्द्दिताः अतएव विकीर्णा इतस्ततो विक्षिप्ता ये ग्रन्थयः संयुक्तदेशास्तेषां निष्यन्दस्य निर्य्यासरसस्य गन्धः स्त्यायते वर्द्धते हस्तिमदगन्धप्रसारादिति भावः।

अत्र अम्बूकृतानां वृद्धिं प्रति अनुरसितगुरुत्वं हेतुरिति पदार्थहेतुकं काव्यलिङ्ग-मलङ्कारः।

यौवने बलाधिक्यात् ध्वनेर्दीर्घत्वसूचनाय भल्लूकयूनामिति युवशब्दप्रयोगः।

"अम्बूकृतं सनिष्ठीव" मित्यमरः। "कटुतिक्तकषायास्तु सौरभे च प्रकीर्त्तिता" इति हलायुधः। "अष्टकं शल्लकीलतायाः" मित्यमरकोषटीका। श्लोकद्वयमिदमविकलं महावीरचरिते मालतीमाधवे च दृश्यते।

मालिनी वृत्तं॥ २१॥

(ब) राम इति। वाष्पस्तम्भेन अश्रुनिरोधेन सहेतिसवाष्पस्तम्भं आहेतिक्रिया-विशेषणं। शम्बूकसमीपे अश्रुपतने अविदितवृत्तान्तकशम्बूकस्य जिज्ञासा स्यात् तत्-कथने च धर्य्यापगमेन लाघवं स्यादिति कवेर्भावः।

पन्थानो गमनमार्गाः शिवा मङ्गलकराः सन्त्विति शेषः। निर्विघ्नं तव गमनमस्त्वित्यर्थः। पुण्येभ्योलोकेभ्यः पवित्रस्थानेभ्यः ब्रह्मलोकेभ्यइत्यर्थः गन्तुमितिशेषः, देवयानं देवविमानं प्रतिपद्यस्व लभस्व इत्याशीर्वादः। त्वं गन्तुं मर्हसीति भङ्ग्यन्तरेण गमनाय अनुमोदनं। "देवयानं देवविमान"मितिशब्दकल्पद्रुमः।

शम्ब यावत् पुराणब्रह्मवादिनमगस्त्यमृषिमभिवाद्य शाश्वतं पदमनुप्रविशामि । इति निष्क्रान्तः । ( श )

रामः । एतत्तदेव हि वनं पुनरद्य दृष्टं

यस्मिन्नभूम चिरमेव पुरा वसन्तः

( श ) शम्बिति । पुराणब्रह्मवादिनं प्राचीनं वेदवक्तारं वेदाध्यापक मित्यर्थः । अभिवाद्य यावत् प्रणिपत्यैवेत्यर्थः, यावच्छब्दोऽयमवधारणे । शाश्वतं पदं नित्यं स्थानं ब्रह्मलोकं । अनुप्रविशामि गच्छामि । अगस्त्यसदृशमहापुरुषप्रणामस्य महाफल-जनकत्वात् समीपवर्त्तित्वेन सुलभं तं प्रणामं कः परित्यजतीति भावः । अत्र ब्रह्मलोकस्य नित्यत्वं ततः पतनराहित्यरूपं बोध्यं । तथाच देवीपुराणं—

"सत्यस्तु सप्तमो लोको ह्यपुनर्भववासिनाम् ।

ब्रह्मलोकः समाख्यातो ह्यप्रतीघातलक्षणः ॥"

एतदिति । अद्य तदेव एतद्वनं पुनर्दृष्टं, वनवासकाले प्रथमं एतद्वितीयवारं दृष्टमित्यर्थः । हिशब्दः पादपूरणे । यस्मिन् वने पुरा वनवासकाले चिरमेव बहु-कालमेव वसन्तस्तिष्ठन्तो वयं सीतारामलक्ष्मणाः स्वधर्म्मे स्वयोरारण्यकगृहस्थयो धर्म्मे आचारे रताः, वन्यफलमूलादिभोजनवल्कलपरिधानादयो वानप्रस्थधर्म्माः अतिथि-सत्कारादयो गृहस्थधर्म्मास्तेषु आसक्ताः सन्त आरण्यका वानप्रस्थाश्रमिणः, गृहिणो गृहस्थाः, सांसारिकेषु संसारिभोग्येषु सुखेषु च अङ्गनालिङ्गनभ्रातृवात्सल्या-नुभवादिषु रसज्ञाः आस्वादानुभवकारिणश्च अभूम भूतवन्तः स्मः । एकस्याः सीताया अभावेन तेषां किमपि सम्प्रति नास्तीति भावः ।

अत्र वनवासरूपं कार्य्यं कुर्वतां रामादीनां गृहस्थत्वादिकार्य्यकरणं दैवादिति "गृहिणी सचिवः सखीमिथ" इति साहित्यदर्पणोदाहृतवत् विशेषालङ्कारः । तथाच साहित्यदर्पणं—

आरण्यकाश्च गृहिणश्च रताः स्वधर्म्मे
सांसारिकेषु च सुखेषु वयं रसज्ञाः ॥ २२ ॥

अपिच (ब) एते त एव गिरयो विरुवन्मयूरा-
स्तान्येव मत्तहरिणानि वनस्थलानि।

---

"यदाधेयमनाधार मेकञ्चानेकगोचरं।
किञ्चित् प्रकुर्वतः कार्य्यमशक्यस्येतरस्य वा।
कार्य्यस्य करणं दैवाद्विशेषस्त्रिविधस्ततः॥"

पादपूरणमात्रप्रयोजनेन हिशब्दप्रयोगात् निरर्थकत्वदोषः, स च "एतत्तदेव विपिनं पुनरद्य दृष्ट" मिति पाठात् समाधेयः।

वानप्रस्थगृहस्थधर्म्मावृत्तौ गरुड़पुराणे। यथा—
"भूमौ मूलफलाशित्वं स्वाध्यायस्तप एव च।
संविभागो यथान्यायं धर्म्मोऽयं वनवासिनः॥" इत्यादिः
"पञ्चभिश्च महायज्ञैः श्रद्दधानो यजेदिह।
देवतातिथिशिष्टाशी नियतो वेदकर्म्मसु।" इत्यादिः।
"आस्वादे च रसं प्राहु"रिति शब्दार्णवः॥ २२॥

(ब) अपि च अन्यच्चेत्यर्थः, ब्रवीमीतिशेषः।

एत इति। विरुवन्तः शब्दायमाना मयूरा येषु ते, एते दृश्यमानाः त एव पूर्वदृष्टा एव गिरयः पर्वताः, तथा मत्ता हर्षदृप्ता हरिणा येषु तानि, तान्येव पूर्वदृष्टान्येव वनस्थलानि। आमञ्जवः अतिमनोहरा वञ्जुला अशोकवृक्षा लताश्च येषु तानि, तथा नीरन्ध्रा निरवकाशा घनाः नीलाः श्यामलाश्च निचुला वेतसा येषु तानि पूर्वदृष्टानि अमूनि दृश्यमानानि सरित्तटानि नदीतीराणि। सर्व्वत्र सन्तीति क्रिययान्वयः।

अतएवात्र तुल्ययोगितालङ्कारः। न चात्र सन्तीत्यनुक्त्या न्यूनपदत्वदोष इति वाच्यं वामनादिभिरस्तीत्यध्याहारादौ तद्दोषस्यानङ्गीकारात्।

आमञ्जुवञ्जुललतानि च तान्यमूनि
नीरन्ध्रनील (१) निचुलानि सरित्तटानि ॥ २३ ॥
मेघमालेव यश्चायमारादपि विभाव्यते।
गिरिः प्रस्रवणः सोऽयं यत्र गोदावरी नदी ॥ २४ ॥
अस्यैवासीन्महति शिखरे गृध्रराजस्य वास-
स्तस्याधस्ताद्वयमपि रता स्तेषु पर्णोटजेषु।

"वकुलोवञ्जुलोऽशोके" इत्यमरः। "वाणीरे कविभेदे स्यान्निचुलः स्थलवेतस" इति शब्दार्णवः।

पूर्वश्लोके अत्र च वसन्ततिलकावृत्तं ॥ २३ ॥

मेघेति। अयं यः मेघमालेव आरादपि दूरादपि विभाव्यते पर्वतत्वेन बुध्यते। सोऽयं प्रस्रवणोनाम गिरिः पर्वतोविद्यत इति शेषः। यत्र पर्वते गोदवरी नदी अस्तीति शेषः। यस्य पाददेशे प्रवहतीत्यर्थः।

अत्रोपमाऽलङ्कारः। नचात्र मेघमालेति स्त्रीलिङ्गत्वात् "सुधेव धवलयन्ति" इत्यादिवद्भग्नप्रक्रमत्वदोष इति वाच्यं "यत्र लिङ्गवचनभेदेऽपि न साधारणधर्मस्यान्यथाभाव स्तत्र न दोषः। यथा 'मुखं चन्द्र इवाभाती'ति दर्पणकारोक्तेः मुक्तत्वात्।

"आराद्दूरसमीपयो" रित्यमरः ॥ २४ ॥

अस्येति। असौव प्रस्रवणस्य महति शिखरे विशाले शृङ्गे गृध्रराजस्य पक्षिश्रेष्ठस्य जटायुष इत्यर्थः वास आसीत्, तस्य शृङ्गस्य अधस्तात् निम्नदेशे नीचस्थितेष्वित्यर्थः तेषु पूर्वाश्रितेषु पर्णोटजेषु पत्रनिर्म्मितकुटीरेषु वयमपि सीतारामलक्ष्मणाः रताः आसक्ताः स्थिता इति यावत्। यत्र निम्नदेशे गोदावर्य्या नद्याः पयसि जले विनतानां फलभारेणावनतानां जलपर्य्यन्तपतितानामित्यर्थः श्यामलानां श्यामवर्णानां अनोकहानां वृक्षाणां

(१) नीप इति पाठभेदः।

गोदावर्य्याः पयसि विनतश्यामलानोकहश्री (१)
रन्तः कूजन् मुखरशकुनो यत्र रम्यो वनान्तः॥ २५॥

आ, तदत्रैव सा पञ्चवटी, यत्रातिचिरनिवासेन विविध-विस्रम्भातिप्रसङ्गसाक्षिणः प्रदेशाः, प्रियायाः प्रियसखी च वासन्ती नाम वनदेवता प्रतिवसति, तत् किमिदमापतितमद्य रामस्य ?। (२) सम्प्रति हि (स)

श्रीः शोभा यस्मिन् स तथोक्तः, तथा मुखराः शब्दायमानाः शकुनाः पक्षिणो यत्र सः, अतएव अन्तर्मध्ये कूजन् शब्दं कुर्वन्निव स्थितः, रम्यो मनोहरः वनान्तः वनस्वरूपं वनमिति यावत्, विद्यत इति शेषः।

अत्र प्राणिकर्त्तव्यस्य कूजनस्य वनेन कर्त्तुमशक्यत्वात् कूजन्निवेत्यर्थोवाच्यः तेन भावाभिमानिनी प्रतीयमाना क्रियोत्प्रेक्षालङ्कारः।

"गृध्रराजः। जटायुपक्षी"ति शब्दकल्पद्रुमः। "अनोकहः कुठः सालः पलाशी द्रुद्रुमागमाः।" "अन्तः स्वरूपे नाशे ना" इति चामरः।

मन्दाक्रान्ता वृत्तं॥ २५॥

(स) आ इति। आ इति स्मरणसूचकमव्ययं। अत्रैव देशे। यत्र पञ्चवट्यां अतिचिरनिवासेन अतिदीर्घकालावस्थानेन एकत्र दीर्घकालावस्थानेन हि तत्स्थानसमावस्था सम्यक् परिज्ञाता स्यात् सुतरां तत्र विस्रम्भातिप्रसङ्गस्य सम्भव इति भावः। विस्रम्भेन फलमूलाद्याहरणार्थं लक्ष्मणेन वहुकालिकं दूरप्रस्थानं कृतं अन्येषाञ्चागमनासम्भवेन दर्शनासम्भव इति विश्वासेन, ये अतिप्रसङ्गाः स्वच्छन्दप्रेमालापविहारादीनामत्यन्तप्रसक्तयः प्रचुरसम्बन्धा इति यावत् ते विस्रम्भातिप्रसङ्गाः। विविधानां नानाप्रकाराणां विस्रम्भातिप्रसङ्गानां साक्षिणोद्रष्टारः प्रदेशाः स्थानानि सन्तीतिशेषः। तत् तस्मात् अद्य रामस्य इदं किं आपतितं उपस्थितं सीतया सह पूर्वदृष्टानां

(१) वितत⋯इति पाठान्तरं। (२) रामहतकस्येति क्वापि पाठः।

चिरोद्वेगारम्भी (१) प्रसृत इव तीव्रो विषरसः
कुतश्चित् संवेगान्निहित इव (२) शल्यस्य शकलः।
व्रणोरूढ़ग्रन्थिः स्फुटित इव हृन्मर्म्मणि पुन-
र्घनीभूतः शोको विकलयति सम्मूर्च्छयति च (३) ॥२६॥

तथापि पूर्वसुहृदो भूमिभागान् पश्यामि। निरूप्य। अहो! अनवस्थितो भूमिसन्निवेशः। तथाहि। (ह)

एतेषां अद्य तां विना एकाकिनो मम दर्शनं महादुःखकारणमिति भावः। तत् दुःखं प्रकाशयति सम्प्रतिहीत्यादिना। हि तथाहि।

"आ प्रगृह्यं स्मृतौ वाक्ये"। "समौ विस्रम्भविश्वासा"विति चामरः।

चिरोद्वेगेति। चिरं बहुकालस्थायिनं उद्वेगं हृदयोद्वेजनं मनोयन्त्रणामितियावत् आरभते उत्पादयतीति चिरोद्वेगारम्भी तीव्रः अत्युग्रो विषरसः विषद्रवः प्रसृत इव, तथा शल्यस्य शङ्कोः शकलः खण्डः कुतश्चित् अनिर्वचनीयात् सम्वेगात् निहित इव हृदये निखात इव, तथा हृन्मर्म्मणि हृदयमध्यदेशे रूढ़ग्रन्थिः उत्पन्नसन्धिः बद्धमूल इति यावत् व्रणः स्फोटकः स्फुटितः विदीर्ण इव, शोकः अतीतसीतास्मृतिः पुनर्घनीभूतः सन्, कालेन विलीनप्रायोऽपि उद्बोधकतत्तत्स्थानदर्शनादिना सान्द्रतां प्राप्तः सन् विकलयति व्याकुलीकरोति सम्मूर्च्छयति मोहं प्रापयति च मामिति शेषः।

अत्र तिसृणां क्रियोत्प्रेक्षाणां मिथो नैरपेक्ष्येण संसृष्टिः तथा विकलयतिसम्मूर्च्छयतीत्यनेकक्रिययोः शोक इत्येककर्त्तृकत्वात् दीपकञ्चालङ्कारः।

"गुणे रागे द्रवे रसः।" "वा पुंसि शल्यं शङ्कुर्ना" इति चामरः।

शिखरिणीवृत्तं ॥ २६ ॥

(ह) ननु शोकोद्दीपकत्वादेतेषां दर्शनं न क्रियतामित्याह तथापीति। यद्यपि

(१) चिराद्वेगारम्भीति पाठान्तरं। (२) चलित इव, प्रचल इव इति पाठभेदौ। (३) नूतन इव क्वापि पाठः।

पुरा यत्र स्रोतः, पुलिनमधुना तत्र सरितां,
विपर्य्यासं यातो घनविरलभावः क्षितिरुहाम्।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं
निवेशः शैलानां तदिदमिति बुद्धिं द्रढ़यति ॥ २७ ॥

एतेषां दर्शनं शोकोद्दीपकं तथापीत्यर्थः। पूर्वसुहृदः सुहृद इव पुरा प्रियाचरणकारिण इत्यर्थः। निरूप्य सर्वतोविशेषेणावलोक्य। अहोशब्दः आश्चर्य्ये। भूमिसन्निवेशः अस्य स्थानस्यावस्था अनवस्थितः पूर्व्वतो वैषम्यं प्राप्तः। वैषम्यं समर्थयति तथाहीति।

पुरेति। पुरा सीतया सहावस्थानकाले यत्र सरितां नदीनां स्रोतः प्रवाहः आसीदितिशेषः, अधुना तत्र स्थाने पुलिनं जलादुत्थितं बालुकामयं तटं जातमितिशेषः। तथा क्षितिरुहां वृक्षाणां घनविरलभावः विपर्य्यासं वैपरीत्यं यातः। यत्र वृक्षा घना आसन् तत्र विरला जाताः, यत्र च विरला आसन् तत्र घना जाता इत्यर्थः। अतएव बहोः कालात् प्रभूतसमयात् परमितिशेषः दृष्टं इदं वनं अपरमिव तद्भिन्नं वनमिव मन्ये अनुभवामि। ननु तदेवेदं वनमिति निश्चये को हेतुरित्याह शैलानां प्रस्रवणादिपर्वतानां निवेशः अवस्थानं 'इदं तत् वनं" इति बुद्धिं द्रढ़यति दृढ़ां करोति निश्चयज्ञानं जनयति। तरुनद्यादीनामन्यथाभावेऽपि पूर्वदृष्टशैलानामनन्यथाभावात् 'तदेवेतत् वनं'मिति मम निश्चय इतिभावः। इदन्त्वावच्छिन्नपक्षकं तद्वनत्वसाध्यकं पूर्वदृष्टतत्तच्छैलदर्शनसाधनकं ममेदमनुमानमभ्रान्तं हेत्वाभासाभावादिति वा भावः।

तत्र अपरवनवत् ज्ञानं प्रति पूर्वार्द्धवाक्यद्वयं हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, तथा "मुखमेणीदृशो भाति पूर्णचन्द्र इवापरः" इति साहित्यदर्पणोदाहृतवत् भावाभिमानिनी वाच्या द्रव्योत्प्रेक्षा, तथा तदलङ्कारकृतविच्छित्तिवशात् तत्तच्छैलदर्शनरूपसाधनात् तद्वनत्वप्रकारकज्ञानरूपसाध्योपपत्त्या अनुमानालङ्कारश्च इत्येतेषामङ्गाङ्गिभावेन सङ्करः।

"तोयोत्थितं तत् पुलिनं।" "प्रभूतं प्रचुरं प्राज्यं मदभ्रं बहुलं बहु" इतिचामरः। बहुशब्दो द्विविधः, संख्यावाचकः प्रचुरवाचकश्च, तत्र संख्यावाचकात् नित्यं बहुवचनं

हन्त ! परिहरन्तमपि मामितः पञ्चवटीस्नेहो वनादपकर्षतीव। (सकरुणम्)। (च)

यस्यां ते दिवसा स्तया सह मया नीता यथा (१) स्वे गृहे
यत्सम्बन्धिकथाभिरेव सततं दीर्घाभिरास्थीयते।
एकः सम्प्रति नाशितप्रियतमस्तामद्य रामः कथं
पापः पञ्चवटीं विलोकयतु वा, गच्छत्वसम्भाव्य वा ?॥२८

स्यात्, प्रचुरत्वावकात् एकवचनमपि ; तेन बह्वोरिति प्रयोगः साधुः। न्यायकुसुमाञ्जलावपि "किं बहुना, यं कार्वोऽपि विश्वकर्मेत्युपासते" इत्याद्यन्यत्रापि एकवचनं दृश्यते। शिखरिणी वृत्तं॥ २७॥

(च) हन्तेति। हन्त खेदे। परिहरन्तमपि परित्यजन्तमपि, पञ्चवटीं विहाय गच्छन्तमपीत्यर्थः। अपकर्षतीव पराद्वर्त्तयतीव इति क्रियोत्प्रेक्षा। स्वैरविहारस्थलत्वात् इमां विहाय गन्तुं नेच्छा भवतीतिभावः। सकरुणं सशोकं।

यस्यामिति। यस्यां पञ्चवट्यां स्वे गृहे यथा, स्वकीयराजधान्यामिव मया तया सीतया सह ते वनवासकालीना दिवसा नीता अतिवाहिताः, तथा दीर्घाभिः घटनानां बाहुल्यान् विस्तृताभिः यत्सम्बन्धिकथाभिः यत्पञ्चवटीविषयकालापैरेव नेत्वन्यकथोपकथनैरित्यर्थः सततं आस्थीयते स्थितं अयोध्यायां मया सीतया चेति शेषः। सम्प्रति नाशिता निर्वासनेन विनाशं प्रापिता प्रियतमा सीता येन स तथोक्तः, अतएव पापः पापात्मा एकी रामः अद्य तां पञ्चवटीं कथं केन प्रकारेण वा विलोकयतु दारुणशोकेन विदीर्णहृदयत्वादेकस्य मम पञ्चवटीदर्शनमसम्भवमेवेति भावः। तथा असम्भाव्य अवस्थानेन असमादृत्य कथं वा गच्छतु, या किल तदानीमावयोः परमसुखहेतुरासीत् केवलावस्थानेनापि तां पञ्चवटीमसमादृत्य गमनं नितान्तकृतघ्नताजनकमिति महाव्याकुलोऽस्मि सम्वृत्त इति भावः।

अत्र प्रथमपादे श्रौती उपमा, तथा च राजधान्यामिव पञ्चवट्यां सुखसञ्चार

(१) पुनरिति पाठान्तरं।

प्रविश्य शम्बूकः। जयति देवः। देव! भगवानगस्त्यो मत्तः श्रुतभवत्सन्निधानस्त्वामाह, परिकल्पितविमानावतरणमङ्गला प्रतीक्षते वत्सला लोपामुद्रा सर्वे च (२) महर्षयस्तदेहि, सम्भावयास्मान्; अथ प्रजविना पुष्पकेण स्वदेशमुपसङ्गम्याश्वमेधाय सज्जो भविष्यसीति। (क)

रामः। यथाज्ञापयति भगवान्। (ख)

शम्बू। इतस्तर्हि देवः प्रवर्त्तयतु पुष्पकम्। (ग)

---

आसीदिति वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः, तथा पापित्वं प्रति नाशितप्रियतमत्वं हेतुरिति पदार्थहेतुकं काव्यलिङ्गञ्च अनयोः परस्परनैरपेक्ष्येण स्थितेः संसृष्टिः॥ २८॥

शार्द्दूलविक्रीड़ितं वृत्तं॥ २८॥

(क) प्रविश्येति। मत्तः मत्, मम मुखादित्यर्थः श्रुतं भवतः सन्निधानं येन सः। परिकल्पितानि आयोजितानि विमानावतरणमङ्गलानि विमानादवतरणकालोचित-मङ्गलसूचकधान्यदूर्वादीनि यया सा। वत्सला त्वां प्रति स्नेहवती। प्रतीक्षते तव दर्शनायावतिष्ठते। महर्षयश्च प्रतीक्षन्ते इत्यर्थः। तत्तस्मात् तव दर्शनाय तेषामाग्रहातिशयादित्यर्थः। अस्मान् सम्भावय आगमनेन समाद्रियताम्। अथ अस्मत्सम्भावनानन्तरं प्रजविना महावेगवता। अस्माकं सम्भावनायां यावत् कालक्षयो भवेत् पुष्पकस्य किञ्चिदधिकवेगस्थापनेन स पूर्णो भवेदिति भावः। सज्जः उद्युक्तः। इति इत्यन्तं आहेत्यर्थः।

(ख) राम इति। भगवानगस्त्यो यथाज्ञापयति तथैव करोमीत्यर्थः।

(ग) शम्बूरिति। तर्हि अगस्त्याज्ञानुरूपकर्त्तव्यत्वे सति इतः अस्मिन् पथि, पुष्पकं विमानं प्रवर्त्तयतु चालयत्वित्यर्थः।

---

(२) आगस्त्यायना इति पाठभेदः।

राम:। भगवति! पञ्चवटि! गुरुजनानुरोधात् क्षम्यतामतिक्रमो रामस्य। (घ)

शम्बू। देव! पश्य पश्य।

कूजत्कुञ्जकुटीरकौशिकघटाघुत्कारवत्कीचक-(१)
स्तम्बाडम्बरमूकमौकुलिकुल: क्रौञ्चावतोऽयं गिरि:।

---

(घ) रामइति। नानामुनिजननिवासात् माहात्म्यातिशयेन पञ्चवट्या: भगवतीतिसम्बोधनं। माहात्म्यवतीति तदर्थ:। अतिक्रम: सम्भावनाया अकरणं, क्षम्यतां मृष्यतां। अगस्त्यादेशादेवायमतिक्रमो नत्विच्छात इतिभाव:।

कूजदिति। कुञ्जं लतायाच्छादितस्थानमेव कुटीरं चुद्रगृहं तत्र स्थिता: कौशिक-घटा: पेचकसमूहा:। कूजन्तीनां शब्दायमानानां कुञ्जकुटीरकौशिकघटानां घी घुत्कार: 'घुत्' इत्येवं शब्द: तद्विशिष्टा: ये कीचकस्तम्बा: वंशगुच्छा: (बाँशभाड़) तेषां आडम्बरेण उच्चरवेण मूकं भयेन नि:शब्दं मौकुलिकुलं काकसमूहो यस्मिन् स: तथोक्त:, अयं क्रौञ्चा (कोचँबको) अस्मास्तीति क्रौञ्चावान् स एवेति प्रज्ञादित्वात् स्वार्थेऽण् क्रौञ्चावतो नाम गिरि: पर्वतो विद्यत इति शेष:। कुञ्जे तिष्ठन्त: पेचका रुवन्ति, वंशस्तम्बप्रतिहततत्प्रतिध्वनिश्रवणेन भीता: काका यत्र नि:शब्दास्तिष्ठन्तीति निष्कर्ष:। एतस्मिन् गिरौ प्रचलतामितस्तत: भ्रमतां प्रचलाकिनां मयूराणां कूजितै: उद्वेजिता: भीता: सन्त: कुम्भीनसा: क्रूरसर्पा: पुराणचन्दनतरुस्कन्धेषु जीर्णचन्दनवृक्षाणां प्रकाण्डदेशेषु शाखोद्गमस्थानेष्विति यावत् उद्वेल्लन्ति पलायनार्थं उत्तिष्ठन्ति। नानाविध-जन्तुनिवासोऽयं गिरिरितिभाव:।

अत्र कुञ्जकुटीरेत्यत्र निरङ्गं केवलं रूपकं,तथा मानवगतमूकत्वं वर्णात्मकशब्दराहित्यं पशुपक्ष्यादिगतमूकत्वञ्च ध्वन्यात्मकशब्दराहित्यं ; किन्तु एकमूकशब्देन तयोरभेदाध्यवसायात् "विश्लेषदु:खादिव बद्धमौन"मिति साहित्यदर्पणोदाहृतवत् अतिशयोक्ति:,

(१) गुञ्जत्कुञ्ज इति क्वापि पाठ:।

एतस्मिन् प्रचलाकिनां प्रचलतामुद्वेजिताः कूजितै-
रुद्वेल्लन्ति पुराणचन्दनतरुस्कन्धेषु (१) कुम्भीनसाः॥ २९॥

अपि च (ङ)

एते ते कुहरेषु गद्गदनदद्गोदावरीवारयो मेघालम्बित-
मौलिनीलशिखराः (२) क्षोणीभृतो दक्षिणाः।

प्रधानालङ्कारस्य स्वभावोक्तिरित्यं तेषां अङ्गाङ्गिभावेन सङ्करः। वृत्त्यनुप्रासस्य शब्दालङ्कारः।

"कुटीरं चुद्रवेश्म स्या"दिति जटाधरः। "महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः।" "वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धता" इति चामरः। "मौकुलिः काकः" इति शब्दकल्पद्रुमः। "आडम्बरस्तु दर्पे स्यात् शब्दे तूर्यस्वनेऽपि च" इति रत्नकोषः। "प्रचलाकिसितापाङ्गशिखावल गतव्रता" इति त्रिकाण्डशेषः। "कुम्भीनसः क्रूरसर्पे स्त्रियां लवणमातरि" इति मेदिनी।

एतादृगनेकाप्रचलितशब्दप्रयोगात् गभीरचिन्तया बहुना कालेन नितान्तकष्टेन च प्रसूतोऽयं श्लोक इत्यनुमीयते।

शार्दूलविक्रीडितं वृत्तं॥ २९॥

(ङ)। अपि च अन्यच्च वर्ण्यत इतिशेषः। इत्यादावपिः समुच्चये।

एत इति। कुहरेषु गुहासु गद्गदं तादृगव्यक्तशब्दं यथास्यात्तथा नदन्ति शब्दायमानानि गोदावर्य्या नद्या वारीणि जलानि येषु ते तथोक्ताः, तथा मेघैरालम्बिता आश्रिता मौलयो मस्तकानि येषां ते, अतएव नीलानि शिखराणि येषां ते, नानाधातुभिर्विचित्रशृङ्गा अपि प्रधानतो मेघवर्णपातात् नीलवर्णत्वेन प्रतीयमानशृङ्गा इत्यर्थः ते प्रसिद्धा एते दृश्यमाना दक्षिणाः भारतवर्षस्य दक्षिणदिग्वर्त्तिनः क्षोणीभृतः पर्वताः विद्यन्त इतिशेषः। अन्योऽन्यं परस्परं यः प्रतिघात आघात स्तेन सङ्कुलं उच्छृङ्खलं यथा-

(१) रोहिणतरुस्कन्धेष्विति पाठान्तरं। (२) मेघालङ्कृत...इति पाठभेदः

अन्योऽन्यप्रतिघातसङ्कुलचलत्कल्लोलकोलाहल-
रुत्तालास्त इमे गभीरपयसः पुण्याः सरित्सङ्गमाः ॥३०॥

इति निष्क्रान्ताः सर्वे। (च)

# इति पञ्चवटीप्रवेशोनाम
# द्वितीयोऽङ्कः। (छ)

न्यातथा चलन्तो ये कल्लोला महातरङ्गा स्तेषां कोलाहलैः सकीर्णशब्दैः उत्तालाः करालाः भीषणा इति यावत् गभीरपयसः अगाधसलिलाः, पुण्याः पवित्राः, ते प्रसिद्धाः, इमे दृश्यमानाः, सरित्सङ्गमाः नदीसंयोगाः संयुक्तनद्य इत्यर्थः विद्यन्त इति शेषः।

अत्र शृङ्गाणां स्वकीयनानावर्णपरित्यागेन मेघालम्बितमौलित्वनिबन्धननीलगुण-ग्रहणात् तद्गुणालङ्कारः। तथा'वरीवारयोः" 'नीनीच्छिणयो'श्च सकृत्साम्यात् छेकानु-प्रासः, तथा प्रथमे पादे दकाराणां, द्वितीये लकाराणां, तृतीयेऽपि च लकारानामसकृत् साम्यात् वृत्त्यनुप्रासश्च, इत्येतेषां संसृष्टिः। उत्ताला इत्यस्य लकारस्य तृतीय-पादगतलकारसम्बन्धेन उक्तवृत्त्यनुप्रासघटकत्वं तेन च चतुर्थपादस्यापि स्पर्शात् न-'पतत्प्रकर्षता' दोषः।

"मौलिः। मस्तकं" इति शब्दकल्पद्रुमः। "उत्ताल उत्कटे श्रेष्ठे विकराले प्लवङ्गमे" इति मेदिनी।

"भावविहितः कृत्प्रत्ययोद्रव्यवत्प्रकाशत" इति न्यायात् सरित्सङ्गमा इत्यनेन संयुक्तनद्य इति प्रतीयते।

शार्दूलविक्रीडितं वृत्तं ॥ ३० ॥

(च) इतीति। रामस्य पुष्पकविमानपरिरक्षकाः केचित् किङ्करा आसन् ते च तत्रोपस्थिता एवेति तैः सह मीलितयो रामशम्बूकयोर्बहुत्वात् 'निष्क्रान्ताः सर्वे' इति

बहुवचनं सर्वशब्दसङ्गतिर्येति। केचित्तु कवेः नारायणावतारत्वेन रामस्य ज्ञानेन गुरुत्वात् बहुवचनमिति वदन्ति, तदसत् सर्वशब्दानर्थक्यस्य तादवस्थ्यात्।

(ङ) इतीति। नाम, पञ्चवटीप्रवेश इति नाम्ना प्रकाश्यः, द्वितीयोऽङ्कः समाप्त इतिशेषः।

"नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि च।
सम्भाव्यकुत्साप्राकाश्ये विकल्पे षु च दृश्यते॥"

इति मेदिनी।

इति श्रीहरिदाससिद्धान्तवागीशविरचितायामुत्तररामचरित-
टीकायां सर्वार्थबोधिनीसमाख्यायां द्वितीयाङ्क-
विवरणं समाप्तं॥०॥

——:०:——





# तृतीयोऽङ्कः

—:०:—

ततः प्रविशति नदीद्वयं तमसा मुरला च। (क)

तमसा। सखि! मुरले! किमसि सम्भ्रान्तेव?। (ख)

मुरला। भगवति! तमसे! प्रेषितास्मि भगवतोऽगस्त्यस्य पत्न्या लोपामुद्रया सरिद्वरां गोदावरीमभिधातुं, जानास्येव यथा वधूत्यागात् प्रभृति—(ग)

अनिर्भिन्नो गभीरत्वा-(१) दन्तर्गूढघनव्यथः।

(क) तत इति। नदीद्वयं नद्यधिष्ठातृदेवताद्वयं, जलप्रवाहस्यैव नदीत्वेन रङ्गालये तत्प्रवेशासम्भवात्।

(ख) तमसेति। किं कथं सम्भ्रान्तेव चकितेव अस्थिरमना इवेति यावत्।

(ग) मुरलेति। भगवति! माहात्म्यवति! तमसायास्तीर्थत्वेनेदृक् सम्बोधनं सरिद्वरां नदीश्रेष्ठां। वधूत्यागात्प्रभृति, भार्य्यायाः सीताया निर्वासनादवधि।

"वधूर्जाया स्नुषा स्त्रीचे"त्यमरः।

प्रभृतीति श्लोकस्थरस इत्यतः परमस्तीत्यध्याहर्त्तव्यायाः क्रियाया विशेषणं।

अनिर्भिन्न इति। गभीरत्वात् गाम्भीर्य्यात् धैर्य्यातिशयादित्यर्थः, पक्षे गाढ़लेपवत्त्वा-दित्यर्थः, अनिर्भिन्नः अप्रकाशितः अन्यैरज्ञात इति यावत् पक्षे अविदीर्णः अतएव अन्तः हृदये, गूढ़ा सम्वृता, घना निविड़ा गाढ़ा इति यावत् व्यथा वेदना यस्य स तथोक्तः, प्रकाश्यमानः शोको नाधिकं पीड़यतीतिभावः। पक्षे अन्तर्म्मध्ये गूढ़ा गुप्ता घना

१) अनिर्भिन्नगभीरत्वादिति क्वचित् पाठः।

पुठपाकप्रतीकाशो रामस्य करुणो रसः ॥ १ ॥

तेन च तथाविधेष्टजन कष्टपातजन्मना प्रकर्षगतेन दीर्घशोकसन्तानेन सम्प्रत्यतितरं (१) परिक्षीणो रामभद्रः, तमवलोक्य कम्पितमिव मे हृदयम्, अधुना च प्रतिनिवर्त्तमानेन

गाढ़ा व्यथा तापो यस्य सः। पुटे पत्रादिनिर्म्मिताधारविशेषे पाकः पचनं यस्य सः पुटपाकः पारदाद्यौषधं स प्रतीकाश उपमा यस्य स तथोक्तः रामस्य करुणो रसः सीताविरहजनितशोक इत्यर्थः। अस्तीति शेषः। रामः सीतां स्वयं निर्वास्य तच्छोकं विवरीतुमपि न शक्नोति तेनासह्ययन्त्रणाञ्चानुभवतीत्यर्थः।

अत्र पूर्णोपमाऽलङ्कारः। 'करुणोरस' इत्यभिधानात् रसस्य स्वशब्दोक्तिदोषः "रसस्योक्तिः स्वशब्देने"ति साहित्यदर्पणात्; स तु 'दशा रामस्य दारुणे'ति पाठेन समाधेयः।

"स्युरुत्तरपदेत्वमी।

निभसङ्काशनीकाश प्रतीकाशोपमादयः।" इत्यमरः।

पुटपाक उक्तो भावप्रकाशे—

"पुटपाकस्य पाकोऽयं लेपस्याङ्गारवर्णता।

लेपञ्च द्व्यङ्गुलं स्थूलं कुर्य्याद्वाङ्गुलिमात्रकं।

काश्मीरवटजम्वादिपत्रैर्वेष्टनमुत्तमं।

पलमात्रो रसो ग्राह्यः कर्षमात्रं मधु चिपेत्।" इत्यादि ॥ १ ॥

(ख) तेनेति। किञ्चेति चार्थः। तेन पुटपाकप्रतीकाशेन, तथाविधस्तादृशः निर्वासनोत्पन्नइत्यर्थः य इष्टजनस्य वल्लभजनस्य सीतायाः कष्टपातः दुःखोपस्थितिः तस्माज्जन्म यस्य तेन, सीताया निर्वासनक्लेशमरणजनितेनेत्यर्थः, प्रकर्षगतेन प्रकृष्टेन वृद्धिं प्राप्तेनेत्यर्थः, दीर्घशोकसन्तानेन वहुकालव्यापिनिरवच्छिन्नशोकपरम्परया।

---

(१) नितरां इति पाठान्तरं।

रामभद्रेण नियतमेव पञ्चवटीवने वधूसहनिवासविस्रम्भसाक्षिणः प्रदेशा द्रष्टव्याः, तेषु च निसर्गधीरस्याप्येवंविधायामवस्थायामतिगम्भीराभोगशोकक्षोभसंवेगात् पदे पदे महान्ति प्रमादस्थानानि शङ्कनीयानि रामभद्रस्य, तद्भगवति ! गोदावरि ! तत्र त्वया सावधानया भवितव्यम् । (ख)

वीचीवातैः शीकरक्षोदशीतैराकर्षद्भिः पद्मकिञ्जल्कगन्धान् ।

अतितरां नितान्तं, परिक्षीणः कृशशरीरः सञ्जातः । तं रामभद्रं अवलोक्य स्थितया इति शेषः, मे मम लोपामुद्रायाः हृदयं कम्पितमिव दारुणरोगोत्पत्त्यादिशङ्कया विचलितमिव । प्रतिनिवर्त्तमानेन अगस्त्याश्रमात् गतेन । नियतमेव निश्चितमेव । वध्वा भार्य्यया सीतया सहनिवासे एकत्रावस्थाने ये विस्रम्भाः विश्वासाः स्वच्छन्दविहारादिविश्वस्तव्यवहारा इत्यर्थः, तेषां साक्षिणो द्रष्टारः, प्रदेशाः स्थानानि, द्रष्टव्याः दृश्येरन् । इत्यवश्यं सम्भाव्यत इतिभावः । ननु द्रष्टव्याः सन्तु, तेन किमित्याह ; तेषु च प्रदेशेषु निसर्गधीरस्यापि, चञ्चलचेतसः का कथा स्वाभाविकधैर्य्यसम्पन्नस्यापि रामभद्रस्य एवंविधायामवस्थायां सीताविरहेण एकाकिभ्रमणरूपायां दशायां । अतिगम्भीरः अनन्तत्वात् दुष्प्रापः आभोगः सीमा यस्य सः, असीम इत्यर्थः यः शोकः, तेन यः क्षोभ उद्वेलनं अधीरतेति यावत् तस्य संवेगात् प्रतिघातात्, पदे पदे स्थाने स्थाने, महान्ति अशेषाणि, प्रमादस्थानानि अनवधानताविषयाः मूर्च्छाप्राप्त्यादय इत्यर्थः शङ्कनीयानि आशङ्क्यन्ते अस्माभिरितिशेषः । तत्तस्मात् रामभद्रस्यानर्थघटनायाः सम्भावनासत्त्वादित्यर्थः । तत्र तेषु रामस्य भ्रमणस्थानेष्वित्यर्थः । सावधानया रामस्य विपन्निवारणविषये एकाग्रचित्तया, भवितव्यं भूयेत ।

ननु जलरूपया मया सावधानया सत्यापि किं कर्त्तव्यमित्याह वीचीति । शीकरक्षोदेन जलबिन्दुचूर्णेन शीतैः शीतलैः तथा पद्मकिञ्जल्कगन्धानाकर्षद्भिः आकृष्य वहद्भिरित्यर्थः, तथा स्वैरं स्वैरं प्रेषितैः मन्दं मन्दं प्रेरितैः, शैत्यं सौगन्ध्यं मान्द्यञ्चेति वायो-

मोहे मोहे रामभद्रस्य जीवं स्वैरं स्वैरं प्रेषितैस्तर्पयेति ॥२॥

राम:। उचितमेव दाक्षिण्यं स्नेहस्य, सञ्जीवनोपायस्तु मौलिक एव रामभद्रस्याद्य सन्निहित:। (ङ)

मुर। कथमिव ?। (च)

तम। श्रूयताम्, पुरा किल वाल्मीकितपोवनोपकण्ठात्

गुणत्रयं तेन गुणत्रयेणैव विशिष्टैरितिभाव: वीचीवातै: स्वकीयतरङ्गवायुभि: मोहे मोहे सकलमूर्च्छितावस्थायां जीवं जीवनं तर्पय प्रीणय, यदा यदैव रामस्य मूर्च्छा भवेत्, तदा तदैव तादृशैस्तरङ्गवायुभिस्तस्य चैतन्यं प्रतिपादयेत्यर्थ:। इति इत्यस्तं गोदावरी-मभिधातुं प्रेषितास्मीति पूर्वेणान्वय:।

अत्र चैतन्योत्पादनं प्रति वायो: शीतललमेव कारणत्वेनापेक्षितं किन्तु सौगन्ध्य-मान्द्ययोरपि विशेषकारणान्तरयोरुपादानात् गुणयौगपद्याच्च समुच्चयालङ्कार:।

"शीकरोऽम्बुकण: स्मृत:"। "चूर्णे क्षोद:"। "मन्दस्वच्छन्दयो: स्वैर"मिति चामर:। वीची इति "इतश्च क्तिवर्जिताद्"ति वीचिशब्दादीप्रत्यय:।

शालिनी वृत्तम् ॥ २ ॥

(ङ) तमेति। दाक्षिण्यं औदार्य्यं औदार्य्येणानुकूल्यमित्यर्थ:। रामं प्रति परमस्नेहवती लोपामुद्रा तदानुकूल्यं कर्त्तुमिच्छति, कुरुतां; किन्तु तस्याद्य विशेष-प्रयोजनं नास्तीति भाव:। कुत इत्याह, तु किन्तु मौलिक एव प्रकृत एव नतु कृत्रिम इत्यर्थ:, रामभद्रस्य सञ्जीवनोपाय: चैतन्यप्रतिपादनहेतु: सन्निहित: निकटवर्त्ती स्थित:। सन्निहिता सीता, सैव सञ्जीवयिष्यतीति भाव:।

(च) मुरेति। कथमिव, कीदृश: सञ्जीवनोपाय: सन्निहित इत्यर्थ:।

(छ) तमेति। किलेति पूर्ववृत्तान्तसूचकमव्ययम्। उपकण्ठात् निकटात्। परित्यज्य सीतामितिशेष:। प्राप्ता उपस्थिता प्रसववेदना यस्या: सा, अतएव अतिदु:ख-संवेगात् नितान्तकष्टप्रतिघातात् आत्मानं स्वदेहम्। तदैव निक्षेपानन्तरमेव, तत्र

परित्यज्य गते लक्ष्मणे सीतादेवी प्राप्तप्रसववेदना आत्मानमति-दुःखसंवेगाद्गङ्गाप्रवाहे निक्षिप्तवती, तदैव तत्र दारकद्वयं प्रसूता, भगवतीभ्यां पृथ्वीभागीरथीभ्यामभ्युपपन्ना रसातलञ्च नीता, स्तन्यत्यागात् परेण च तद्दारकद्वयं तस्याः प्राचेतसस्य महर्षेर्गङ्गादेवी स्वयमर्पितवती । ( क )

मुर । सविस्मयम् ।

ईदृशानां विपाकोऽपि जायते परमाद्भुतः । (१)

गङ्गाप्रवाहे दारकद्वयं बालकयुगलं, प्रसूता प्रसूतवती । पृथ्वी-भागीरथीभ्यां पृथिवी-गङ्गाभ्यां अभ्युपपन्ना प्राप्ता गृहीता सतीत्यर्थः रसातलं पातालं नीता बालकाभ्यां सह सीतेति शेषः । स्तन्यस्य दुग्धस्य त्यागो यस्मिन् वयसि तत् स्तन्यत्यागं वयः तस्मात् परेण वर्षद्वयवयसः परमित्यर्थः । तस्याः सीतायाः तद्दारकद्वयम् । महर्षेः प्राचेतसस्य वाल्मीकेः समीपे इत्यर्थः । गङ्गादेवी स्वयं आत्मना, नतन्यद्वारेत्यर्थः । एतेन बालकद्वयं प्रति गङ्गाया आग्रहातिशयः सूच्यते ।

“वार्त्ता सम्भाव्ययोः किल” । “आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च ।” “दारकौ बालभेदकौ”विति चामरः ।

प्रसूतेति आदिकर्म्मणि कर्त्तरि क्तः । परेणेति तृतीयापवर्गे । प्राचेतसस्येति सामीप्यसम्बन्धे षष्ठी, दारकद्वये गङ्गायाः स्वत्वाभावेन तद्ध्वंसाभावात् न चतुर्थी ।

ईदृशानामिति । ईदृशानां सीतारामतुल्यमहाश्चर्य्यचरित्राणां जनानां विपाकोऽपि सम्पदि का कथा विपदपि, परमाद्भुतो जायते । कथमित्याह यत्र विपाके एवंविधः पृथिवीगङ्गातुल्योजनः उपकरणीभावम् साहाय्यकारकत्वं आयाति प्राप्नोति । चिराराधनयापि ययोः सन्दर्शनं न घटते, ते एव पृथिवीगङ्गे स्वयमेव साहाय्यं कुरुत इति विपाकस्य परमाद्भुतत्वमेवेति भावः ।

( १ ) पावनाद्भुत इति पाठान्तरं ।

यत्रोपकरणीभाव मायातिग्रवंविधो जनः ॥ ३ ॥

तम। इदानीन्तु शम्बूकवृत्तान्तेनानेन सम्भावितजनस्थानागमनं रामभद्रं सरयूमुखादुपश्रुत्य भगवती भागीरथी यदेव भगवत्या लोपामुद्रया स्नेहादाशङ्कितं, तदेवाशङ्क्य सीतासमेता केनचिदिव गृहाचारव्यपदेशेन गोदावरीं विलोकयितुमागता। (ज)

मुर। सुविचिन्तितं भगवत्या, राजधानीस्थितस्य खलु तैस्तैर्जगतामाभ्युदयिकैः कार्य्यैर्व्यापृतस्य नियताश्चित्तविक्षेपाः;

अत्र परमाङ्गत्वं प्रति पराङ्गवाक्यार्थोहेतुरिति काव्यलिङ्गमलङ्कारः।

"विपाकः। दुर्गतिः"। "उपकरणं प्रधानाङ्गीभूतोपकारकद्रव्यम्।" इति च शब्दकल्पद्रुमः॥ ३॥

(ज) तमेति। भगवती भागीरथी गङ्गा, अनेन अचिरसंघटितेन शम्बूकवृत्तान्तेन शम्बूकवधव्यापारेणेत्यर्थः सम्भावितं अनुमितं जनस्थाने आगमनं यस्य तम्। सरयूर्नाम काचिन्नदी तस्या मुखादुपश्रुत्य शम्बूकवधाय रामो जनस्थानमागमिष्यतीति सम्भाव्यत इति सरयूमुखादाकर्ण्येत्यर्थः। तदेव रामस्यानिष्टमेव। सीतासमेता सीतया सह मीलिता भागीरथीत्यस्य विशेषणमेतत्। गृहाचारव्यपदेशेन लौकिकव्यवहारच्छलेन। लोके हि बन्धुजनो वत्सरान्ते अपरबन्धुजनानां साक्षात्काराय तद्गृहमागच्छतीति व्यवहारः प्रायेण प्रचलति।

श्रुधातोः शाब्दबोधे शक्तिरिति नैयायिकाः, श्रवणेन्द्रियजन्यप्रत्यक्षे शक्तिरितिमीमांसकाः; अत्र तु नैयायिकमतानुसारेण 'रामभद्रं उपश्रुत्ये'ति सङ्गतिरिति संक्षेपः।

(झ) सुरेति। भगवत्या गङ्गया सुविचिन्तितं सम्यग्विवेचितं। कथं सुविचिन्तितमित्याह राजेत्यादि। राजधानीस्थितस्य अयोध्यायां निवसतः, तैस्तैः प्रसिद्धैरवश्य-

अव्यग्रस्य पुनरस्य शोकमात्रद्वितीयस्य पञ्चवटीप्रवेशो महाननर्थ इति, तत्कथमिदानीं सीतादेव्या रामभद्र आश्वासनीयः स्यात्?। (झ)

तम। उक्तमेव (१) भगवत्या भागीरथीदेव्या, यद्देवयजनसम्भवे! सीते! अद्य खल्वायुष्मतोः कुशलवयोर्द्वादशजन्मसंवत्-

कर्त्तव्यैरित्यर्थः। आभ्युदयिकैः उन्नतिसाधकैः कार्य्यैः दुष्टनिग्रहशिष्टानुग्रहराष्ट्रदुर्गबलादिपर्य्यवेक्षणप्रभृतिभिर्व्यापारैः व्याप्टतस्य आसक्तचित्तस्य रामभद्रस्य तैर्व्यापारैः चित्तविक्षेपाः शोकेनाकर्षणानि नियताः नियन्त्रिता निरुद्धा इति यावत्। गर्भे राजधानीस्थिते सर्वदा राजकार्य्यपर्य्यवेक्षणादिचिन्तया परिपूर्णे तस्य चित्ते सीताविरहजनितशोकः प्रविष्टं नावसरं लभत इत्यर्थः। पुनः किन्तु अव्यग्रस्य राजकार्य्यादिचिन्ताऽनासक्तचित्तस्य सुस्थचित्तस्येति यावत् शोकमात्रद्वितीयस्य केवलशोकसहचरस्य अस्य रामभद्रस्य। अनर्थः अनिष्टं अनिष्टकारणमित्यर्थः। इति इति हेतोः भगवत्या सुविचिन्तितमित्यर्थः। चिन्तान्तरशून्ये सुस्थचित्त एव शोकाविर्भावः स्यात् शोकोद्दीपकपञ्चवटीवनप्रवेशे तु का कथेति भावः। तत्तस्मात् पञ्चवटीप्रवेशस्यैवानर्थहेतुत्वादित्यर्थः। आश्वासनीयः स्यात् सान्त्वयितुं शक्यः स्यादित्यर्थः। चरित्रदोषाशङ्कया स्वयं निर्वासितायाः सीतायाः पुनरधिकक्रोधोदयाशङ्कया रामस्य समीपगमनासम्भवेन सान्त्वनाकरणमसम्भवमेवेति कथं गङ्गा सीतामानीतवतीति मया पुनरिदं सन्दिह्यते, गङ्गया तु आत्मबुद्ध्या सुविचिन्तितमेवेति भावः।

"व्यग्रो व्यासक्त आकुल" इत्यमरः।

राजा धीयते अस्यामिति राजधानी "करणाधिकरणयो"श्चेत्यधिकरणे ल्युट्।

(ञ) तमेत्यादि। उक्तमेवेति एवशब्दः स्वयोगव्यवस्थापनार्थः। किमुक्तमित्याह यदित्यादि। द्वादशानां पूरण इति द्वादशः, सचासौ जन्मसंवत्सरश्चेति विग्रहः, तस्य,

(१) अत्र इति क्वचिदधिकः पाठः।

सरस्य (१) संख्यामङ्गलग्रन्थिरभिबध्यते, (२) तदात्मनः पुराण-श्वशुरमेतावतो मानवस्य राजर्षिवंशस्य प्रसवितारं सवितार-मपहृतपाप्मानं देवं स्वहस्तावचितैः पुष्पैरुपतिष्ठस्व। न च त्वामवनिपृष्ठवर्त्तिनीमस्मत्प्रभावाद्वनदेवता अपि द्रक्ष्यन्ति किंपुनर्मर्त्या इति ; अहञ्चाज्ञापिता, तमसे ! त्वयि प्रकृष्टप्रेमैव वधूर्वत्सा जानकीति अतस्त्वमेवास्याः प्रत्यनन्तरीभवेति। साहमधुना यथादिष्टमनुतिष्ठामि। (ज)

जन्मवत्सरावधिद्वादशपूरणीभूतवत्सरस्येत्यर्थः संख्यायै वयसो वर्षसंख्यायै मङ्गलजन-नाय ग्रन्थिः संख्यामङ्गलग्रन्थिः, जन्मावधि यावन्तो वत्सरा यातास्तावत्संख्याबोधनाय मङ्गलजननाय च धर्मशास्त्रोक्तो योग्रन्थिः स इत्यर्थः। अभिबध्यते वाल्मीकिनेति शेषः। तत्तस्मात् अस्यां कुशलवयो र्जन्मतिथौ सर्वेषामेव बन्धूनां मङ्गलाचरणस्य कर्त्तव्यत्वादित्यर्थः। आत्मनः स्वस्याः तवेत्यर्थः। पुराणश्वशुरं प्राचीनश्वशुरं परम्परया श्वशुरमित्यर्थः। एतावत इयत्संख्यस्य, मानवस्य वैवस्वतमनोरपत्यस्य। सूर्य्यपुत्रो वैवस्वतमनुस्तत्पुत्र इक्ष्वाकुस्तस्माच्च रामचन्द्रवंश उत्पन्न इति बोध्यं। प्रसवितारं उत्पादयितारं। अपहृतो नाशितः पाप्मा पापं येन तं एतेन सूर्य्यस्य महामाहात्म्यवत्त्वेन पूज्यत्वमि-तिभावः। सवितारं देवं सूर्य्यदेवं। उपतिष्ठस्व आराधय्हि। कुशलवयोर्मङ्ग-लार्थं सूर्य्यपूजनार्थेव सीतामानीतवती गङ्गा, न तु रामस्य सान्त्वनार्थमिति मुरलाया उक्तवाक्योत्तरविषये भावः। गूढ़भावस्तु, सीतां प्रति परमविश्वासशाली रामः सीतासम्पर्कं प्राप्य न कोपिष्यति, अपि तु आदरिष्यत एव सान्त्वितश्च भवेदिति। ननु पुष्पावचयनकाले लोका मामवलोक्य चेत् रामाय निवेदयिष्यन्ति तदा महाननर्थो भवेदित्याह नचेत्यादि। न चेत्यस्य द्रक्ष्यन्तीत्यनेनान्वयः। अवनिपृष्ठवर्त्तिनीं भूतलस्थितां सतीं। अस्मत्प्रभावात् मम वरमाहात्म्यादित्यर्थः। मर्त्या मानवाः। इति

(१) क्वचित् जन्मपदं नास्ति। (२) अभिवर्त्तने इति क्वापि पाठः।

मुर। अहमप्यमुं वृत्तान्तं भगवत्यै लोपामुद्रायै निवेदयामि, रामभद्रोऽप्यागत एवेति तर्कयामि। (ट)

तम। तदियं गोदावरीह्रदान्निष्क्रम्य (ठ)

शब्दस्य उक्तमिति पूर्व्वेणान्वयः। प्रकृष्टप्रभावशालिनीनां वनदेवतानां दर्शनायोग्यायास्तव साधारणमानवैर्दर्शनमसम्भवमेवेति भावः। अहं तमसा। प्रकृष्टप्रेमा परमस्नेहवती। वधूः स्नुषा। रामेण मातृत्वेन स्वीकृताया गङ्गायाः सीता स्नुषेव स्यादिति द्रष्टव्यं। इति जानामीति शेषः। अन्तरस्य आत्मीयस्य सख्यादेः प्रति प्रतिनिधिरिति प्रत्यन्तरी सखीसदृशीत्यर्थः सखीव सीतायाः सहचारिणी भवेत्यर्थः। इतिशब्दस्य आज्ञापितेत्य नान्वयः। सा गङ्गया आज्ञापिता। आदिष्टं आदेशमनतिक्रम्येति यथादिष्टं सीतायाः सहचारित्वमित्यर्थः। अनुतिष्ठामि करोमि, सीतायाः सहचारिणी भवामीत्यर्थः।

"अन्तरमवकाशावधि परिधानान्तर्धिभेदतादर्थ्ये।
छिद्रात्मीयविनावहिरवसरमध्ये ऽन्तरात्मनि च।"
"प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः" इति चामरः।
उपतिष्ठस्वेति "पथ्याराधनयोर्य्ये"तिरुचादित्वादात्मनेपदं।
जन्मतिथौ जन्मग्रन्थिबन्धनस्य सूर्य्यपूजायाश्च प्रमाणं यथा, कृत्यचिन्तामणौ।
"गुड़दुग्धतिलान्नद्याज्जन्मग्रन्थेश्च बन्धनं।
गुग्गुलं निम्बसिद्धार्थदूर्वागोरोचनान्वितं।
सम्पूज्य भानुविघ्नेशौ महर्षिं प्रार्थयेदिदं।"
"समित्पुष्पकुशादीनि श्रोत्रियः स्वयमाहरेत्।"

इत्येकादशीतत्त्वधृतपद्मपुराणात् श्रोत्रियपदस्य चोपलक्षणत्वात् स्वहस्तावचितैः पुष्पैरित्युक्तं।

(ट) मुरेति। अमुं वृत्तान्तं सीतया सह गङ्गाया आगमनवार्त्तां। तर्कयामि सम्भावयामि।

(ठ) तमेति। सा चासौ इयञ्चेति तदियं सेयमित्यर्थः, एकवाक्यान्तर्गततया

परिपाण्डुदुर्ब्बलकपोलसुन्दरं
दधती विलोलकवरीकमाननं।
करुणस्य मूर्त्तिरथवा (१) शरीरिणी
विरहव्यथेव वनमेति जानकी॥ ४॥

श्लोकस्थजानकीत्यस्य विशेषणमेतत्। गोदावर्य्यां कश्चित् निम्नदिग्गामीऽह्रदो गर्त्तमासीत् तस्मान्निष्क्रम्य उत्थाय।

परीति। परिपाण्डू पुष्टिकरभोजनाभावात् रक्ताल्पत्वेन श्वेतच्छायौ दुर्ब्बलौ अगाढ़ौ यौ कपोलौ सन्तौ ताभ्यां सुन्दरं स्वभावसुन्दर्य्याः सीताया विरहक्लशतायामपि सत्यां मुखस्य किञ्चिदागन्तुकवैचित्र्यमेव जातमिति भावः। विलोला बन्धनाभावेन लम्बमानत्वात् चञ्चला कबरी केशरचना यत्र तत् तादृशं आननं मुखं दधती धारयन्ती जानकी सीता, करुणस्य शोकस्य मूर्त्तिरिव मूर्त्तिमान् शोक इव, अथवा शरीरिणी मूर्त्तिमती विरहव्यथा रामविच्छेदवेदनेव वनं पञ्चवटीवनं एति आगच्छति।

अत्र दुर्ब्बलकपोलात् कृशीकत्वोत्पत्तिसम्भवे सौन्दर्य्योत्पत्तेर्विषमालङ्कारः, तथा भावाभिमानि वाच्यं गुणोत्प्रेक्षाद्वयञ्चेत्येतेषां नरपेक्षेण स्थितेः संसृष्टिः।

एतदनुरूपश्लोको यथा शाकुन्तले—

"वसने परिधूसरे वसाना नियमक्षाममुखी धृतैकवेणी।
अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं बिभर्त्ति॥"

अनयोस्तु "परिपाण्डुदुर्ब्बले"त्यादिश्लोक एव प्रशस्ततरः उत्प्रेक्षाद्वयेन सम्भोगयोग्यविरहावस्थाया व्यञ्जकत्वेन चमत्कारविशेषावहत्वात्।

पतिविरहे पतिव्रताया अवस्थामाह शुद्धितत्त्वधृतमङ्गिरोवचनं—

"आर्त्तार्त्ते, मुदिता हृष्टे वियोगे मलिना कृशा।
मृते म्रियेत या पत्यौ साध्वी ज्ञेया पतिव्रता॥"

मञ्जुभाषिणीवृत्तं॥ ४॥

(१) इव वा इति क्वापि पाठः

मुर। इयं हि सा। (ड)

किसलयमिव मुग्धं बन्धनाद्विप्रलूनं
हृदयकुसुमशोषी दारुणो दीर्घशोकः।
ग्लपयति परिपाण्डु क्षाममस्याः शरीरं
शरदिज इव घर्म्मः केतकीगर्भपत्रम् ॥ ५ ॥

इति परिक्रम्य निष्क्रान्ते। (ढ)

## विष्कम्भकः ॥ (ण)

(ड) मुरेति। इयं हि, इयमेव सा जानकी। जानकीं विलोक्य मुरलाया निरूपणमेतत्।

किसलयेति। हृदयमेव कोमलत्वात् कुसुमं, तत् शोषयतीति हृदयकुसुमशोषी दारुणो दीर्घः बहुकालव्यापी शोकः विरहकृतशोकः बन्धनात् वृन्तात् विप्रलूनं स्खलितं मुग्धं मनोहरं किसलयं पल्लवमिव स्थितं अस्याः सीतायाः परिपाण्डु नितान्तं तच्छायं क्षामं कृशं शरीरं शरदिजः शरत्कालोत्पन्नो धर्म्म आतपः केतक्याः केतकीपुष्पस्य गर्भपत्रं मध्यस्थितपर्णमिव केशरमित्यर्थः ग्लपयति मलिनीकरोति।

अत्र शोषणं रसनाशकरणं, तच्च कुसुमस्यैव सम्भवति न तु हृदयस्य तेन शोषीतिपदं रूपकस्य साधकं उपमाया बाधकं ततश्च हृदये कुसुमत्वारोपस्य शाब्दत्वात् शोके आतपत्वारोपस्य चार्थत्वात् एकदेशविवर्त्तिरूपकमलङ्कारः उपमाद्वयेन सङ्कीर्य्यते।

क्षाममिति क्षैधातोः क्तप्रत्ययस्य "क्षैशुषिपचां मकवा" इत्यनेन मत्वं। शरदिज इति "प्रायेण सप्तम्याः क्रती"ति सप्तम्या अलुक्।

मालिनीवृत्तं ॥ ५ ॥

(ढ) इतीति। निष्क्रान्ते तमसामुरले इतिशेषः।

(ण) विष्कम्भक इति। तल्लक्षणमुक्तं। अत्र प्रेषितास्मीत्यादिना वृत्तकथांशानां

नेपथ्ये। **प्रमादः प्रमादः।** (त)

ततः प्रविशति पुष्पावचयव्यग्रहस्ता सकरुणौत्सुक्यमाकर्णयन्ती सीता। (थ)

निदर्शनं "साहमधुना यथादिष्टमनुतिष्ठामो"त्यादिना च वर्त्तिष्यमाणकथांशानां निदर्शनमिति द्रष्टव्यं।

(त) नेपथ्य इति। प्रमादोऽनवधानता विधातुरित्याक्षेपः। कथमन्यथा प्रबलो दुर्बलमाक्रामतीति भावः। अथवा प्रमादो विपत्तिः। लोके 'प्रमाद उपस्थित' इत्यादौ विपदर्थे प्रमादशब्दस्य भूरिप्रयोगात् तत्र तस्य व्यवहारानिबन्धना शक्तिः स्वीक्रियत इति।

अथ कथमयं तृतीयाङ्कः कविना समुपनिबद्ध इति प्रश्नकर्त्तारः केचिदस्माभिरपि पृच्छ्यन्ते, यदेवं पृच्छन्तोभवन्तः "किमर्थमुत्तररामचरितं रचित'मिति कथं न पृच्छन्ति? येन हि यं कमपि विषयविशेषमभिसन्दधानः 'किं'' 'कथ'मित्येतावन्मात्रमना-यासमुच्चारयन् प्रश्नकर्त्ता स्यात्। वस्तुतस्तु असाधारणचमत्कारिणी भावसौष्ठवप्रसविनी कविकल्पना न खल्वनुद्दिश्य प्रयोजनं प्रवर्त्तते; किन्तु प्रयोजनद्वयं; तथाच कश्चिदपि प्रत्यक्षप्रमाणप्रमितं विश्वस्तं निर्वासनोपयोगिनमपराधमन्तरेणापि निर्वासितायाः सीताया नितान्तनिष्ठुरं निर्वासयितारं भर्त्तारं प्रति नाल्पीयानपि विरागः, प्रत्युत परमादर-प्रणयप्राचुर्य्यमिति सीतायां पतिव्रतादर्शतायाः प्रदर्शनमित्येकं। द्वितीयन्तु प्रजारञ्जनाय निर्वासयतोऽपि रामस्य सीतां प्रति नखलु कियानप्यविश्वास आसीदिति वासन्त्यादीनां प्रतीतिः, तथा "अस्त्विदानीमश्वमेधाय सहधर्म्मचारिणी मे हिरण्मयी सीतायाः प्रतिकृति"रितिब्रुवन्नार्य्यपुत्रो (रामः) मां यथार्थमेव विश्वसिति किन्तु केवलं प्रजा-रञ्जनायैव निर्वासितवानिति रामं प्रति सीताया विश्वासस्य भवेदिति ज्ञापनञ्चेति सुधीभिर्भाव्यं।

(थ) तत इति। पुष्पाणां अवचये चयने व्यग्रौ आसक्तौ हस्तौ यस्याः सा। करुणेन शोकेन शोकस्तु सीतायाः पञ्चवटीदर्शनेन रामस्मरणादिति बोध्यं औत्सुक्येन उत्कण्ठया च सह तत्तयोक्तं। आकर्णयन्ती प्रमादशब्दमिति शेषः।

सीता। अह्महे, जाणामि पिअसही मे वासन्दी वाहरदि। (द)

नेपथ्ये ।

सीतादेव्याः स्वकरकलितैः शल्लकीपल्लवाग्रै-
रग्रे लोलः करिकरभको यः पुरा पोषितोऽभूत् ।

(द)। अहो ! जानामि प्रियसखी मे वासन्ती व्याहरति।

(द) सीतेति। जानामि बुध्ये। व्याहरति भाषते। पूर्वपरिचितस्वरश्रवणादिति भावः।

सीतेति। पुरा वनवासकाले अग्रे समीपे लोलः पल्लवग्रहणाय चञ्चलः यः करिकरभकः हस्तिशावकः सीतादेव्याः स्वकरकलितैः निजहस्तसञ्चितैः न तु अन्येन केनचिदानायितैरितिभावः। एतेन करिशावकं प्रति यत्नातिशयो व्यज्यते। शल्लकीनां लताविशेषाणां पल्लवाग्रैः तदग्रचर्वणैरित्यर्थः पोषितो वर्द्धितोऽभूत्। अयं दृश्यमानः स करिकरभकः वध्वा सार्द्धं स्वकीयभार्य्यया सह पयसि जले विहरन् क्रीड़न् अन्येन केनचित् उद्दामेन सदमत्तेन द्विरदपतिना हस्तियूथपेन वेगात् सन्निपत्य कुतोऽपि स्थानादागत्य अभियुक्त आक्रान्तः। सुतरां सीतादेव्याः पुत्रस्वरूपस्य करिशावकस्य विनाशसम्भावनया प्रमाद एवेति भावः।

अत्र शल्लपल्लेति करिकरेति व्यञ्जनसंघस्य सकृत्साम्यात् छेकानुप्रासोऽलङ्कारः। ननु "करभः करिशावक" इत्यमरकोषात् करभशब्देनैव करिशावकाभिधानात् पुनः करिशब्दोपादानेन अधिकपदत्वदोष इति चेन्न—

"धनुर्ज्यादिषु शब्देषु शब्दास्तु धनुरादयः।
आरूढ़त्वादिबोधाय न दोषः पुनरुक्तता।"

इति कारिकायां "निरुपपदो मालाशब्दः पुष्पस्रजमेवाभिधत्त इति स्थितावपि

सीता। किं तस्स ?। (ध)

पुनर्नेपथ्ये।

वध्वा सार्द्धं पयसि वि[illegible]न् सोऽयमन्येन वेगा- (१)

दुद्दामेन द्विरदपतिना स[illegible]त्याभियुक्तः ॥ ६ ॥

सीता। ससम्भ्रमं कतिचित् पदानि गत्वा

परित्ताहि मम तं पुत्तअं। विचिन्त्य।(२) हद्धी हद्धी ताइं ज्जेव चिरपरिचिताइं अक्खराइं पञ्चवटीदंसणेण मं मन्दभाइणीं अणुरुन्धन्ति। हा अज्जउत्त। इति मूर्च्छति। (न)

(ध)। किं तस्य ?।

(न)। आर्य्यपुत्र ! परित्रायस्व परित्रायस्व मम तं पुत्रकं।
हा धिक् हा धिक् तान्येव चिरपरिचितानि अक्षराणि पञ्चवटीदर्शनेन मां मन्दभागिनी-मनुरुन्धन्ति। हा आर्य्यपुत्र !।

'पुष्पमाला विभाति ते' अत्र पुष्पशब्द उत्कृष्टपुष्पबुद्धेः" इति साहित्यदर्पणोक्तदिशा अत्रापि करिशब्दे नोत्कृष्टकरिशावकबोधनान्न दोषः।

करभक इत्यनुकम्पायां कः।

मन्दाक्रान्तावृत्तं ॥ ६ ॥

(न) सीतेति। ससम्भ्रमं सत्वरं। चिरपरिचतानिदीर्घकालोच्चारणेन अभ्यस्तानि अक्षराणि 'आर्य्यपुत्र' इत्येते वर्णाः। अनुरुन्धन्ति अनुसरन्ति मम मुखात् प्रसरन्तीत्यर्थः उद्बोधकपञ्चवटीदर्शनेन स एवायं वनवासकाल इति भ्रमात् तदनुपस्थितावपि आर्य्यपुत्र इत्येते वर्णाः स्वयमेव मम मुखान्निर्गच्छन्तीति भावः।

(१) दर्पादिति पाठान्तरं। (२) स्मृतिमभिनीय सवैक्लव्यमिति पाठभेदः

विश्य तमसा। वत्से ! समाश्वसिहि समाश्वसिहि।

नेपथ्ये। विमानराज ! अत्रैव स्थीयताम्। (प)

सीता। समाश्वस्य ससाध्वसोत्कम्पोल्लासम्। अम्महे ! जलभरिदमेह-त्थणिद गम्भीरमंसला कुदो णु एसा भारदी णिग्घोसभरन्तकस्स विवरं मंपि मन्दभाइणीं झत्ति उस्सावेदि ?। (फ)

तम। सस्मितास्रम्। अयि वत्से ! (ब)

किमव्यक्तेऽसि निनदे (१) कुतस्तेऽपि त्वमीदृशी। (२०)

(फ)। अहो ! जलभृतमेघस्तनितगम्भीरमांसला कुतो नु एषा भारती निर्घोष-भ्रियमाणकर्णविवरां मामपि मन्दभागिनीं झटिति उच्छ्वासयति ?।

(प) नेपथ्य इति। विमानराज इति पुष्पकविमानस्य सम्बोधनं। रामोक्तिरियं।

(फ) सीतेति। साध्वसेन भयेन उत्कम्पः शरीरचाञ्चल्यं, उल्लासः हर्षोच्छ्वासः ताभ्यां सहेति तथोक्तं। स्वरश्रवणेन रामोऽयं नवेति संशये स चेत्तदागत्य पुनरपि किं कुर्य्यादितिः भये नोत्कम्पः, असाधारणपतिव्रतायाः पतिदर्शने च उच्छ्वास इति बोध्यं। जलेन भृतस्य परिपूर्णस्य मेघस्य स्तनितमिव गर्जितमिव गम्भीरा मन्द्रा, मांसला बलवती बलवता जनेनोच्चारितेव प्रतीयमानेत्यर्थः एषा भारती वाणी कुतो जनादुत्पन्ना सतीत्यर्थः निर्घोषेण शब्देन भ्रियमाणं कर्णविवरं यस्या तां तथोक्तां। झटिति द्रुतं। उच्छ्वासयति सञ्जीवयति। मृतप्रायां मां आनन्देन उत्फुल्लयतीत्यर्थः।

तमेति। चिरानुभूतेऽपि स्वरे संशय इति विस्मयेन स्मितं, आगतेऽपि रामे परस्परसाक्षात्कारो न भवेदिति दुःखेन चास्रं ताभ्यां सहेतिसस्मितास्रं।

किमिति। स्तनयित्नोर्मेघस्य अव्यक्ते कुतस्तेऽपि निनदे गर्जिते सति मयूरीव त्वं अव्यक्ते अपरिस्फुटे कस्मायमित्यस्पष्ट इत्यर्थः कुतस्ते कस्मादविदितदेशादागते कस्माद्दे-शादयं शब्द आगत इति देशविशेषज्ञाने सत्यपि तव गत्वा जननिरूपणसम्भावना स्यादत

(१) अपरिस्फुटनिक्वाणे इति पाठभेदः। (२) कुतस्ते प्रीतिरीदृशीति पाठान्तरं।

स्तनयित्नोर्मयूरीव चकितोत्कण्ठिता(१)स्थिता? ॥ ७ ॥

सीता। भअवदि! किं भणासि अपरिप्फुडत्ति। मए उण सरसंजोएण पच्चभिजाणिदं, अज्जउत्तो ज्जेव वाहरदि। (भ)

तम। श्रूयते, तपस्यतः किल शूद्रस्य दण्डधारणार्थमैक्ष्वाको राजा जनस्थानमागत इति। (म)

(भ) भगवति! किं भणसि अपरिस्फुटेति। मया पुनः स्वरसंयोगेन प्रत्यभिज्ञातं, आर्य्यपुत्र एव व्याहरति।

तु सापि न स्यादिति भावः निनदे 'विमानराज! अत्रैव स्थीयतता'मितिमात्रे शब्दे सति किं कस्मात् चकिता चञ्चला उत्कण्ठिता उत्सुका च सती स्थितासि।

अत्र प्रकृष्टकारणाभावेऽपि चकितत्वोत्कण्ठितत्वरूपकार्य्योत्पत्तेर्विभावनाऽलङ्कारः पूर्णोपमया सङ्कीर्य्यते। तथा मयूरी अस्ति, त्वन्तु असि इति प्रथममध्यमपुरुषभेदात् "लतेव राजसे तन्वी"ति साहित्यदर्पणोदाहृतवत् उपमागतभग्नप्रक्रमत्वदोषः, स च "निनदे कथमव्यक्ते" इति पाठेन समाधेयः।

"अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहक" इत्यमरः।

कुतोभवतीति कुतस्त्यः "आख्यातात्त्व तमादय" इति त्यप्रत्ययः।

पथ्यावक्त्रं वृत्तं ॥ ७ ॥

(भ) सीतेति। भगवति! तमसे!। अव्यक्त इति तमसोक्तवाक्यस्य अर्थमादाय सीतायाः प्रश्नः अपरिस्फुट इति। स्वरसंयोगेन कर्णे स्वरसम्बन्धेन प्रत्यभिज्ञातं अनुभूतस्य पुनरनुभवः कृतः "अनुभूतस्य पुनरनुभवः प्रत्यभिज्ञे"ति नैयायिकाः। व्याहरति भाषते।

(म) तमेति। शूद्रस्य शम्बूकस्य, दन्डधारणार्थं दण्डकरणार्थं ऐक्ष्वाक इक्ष्वाकुवंशोत्पन्नः, राजा रामः। इति शब्दस्य श्रूयत इत्यनेनान्वयः।

---

(१) चकितोत्कण्ठितमिति क्वापि पाठः।

सीता। दिट्ठिआ अपरिहीणराअधम्मो क्खु सो राआ। (य)

(पथ्य) यत्र द्रुमा अपि मृगा अपि बन्धवो मे

यानि प्रियासहचरश्चिरमध्यवात्सम्।

एतानि तानि वहुनिर्झरकन्दराणि

गोदावरीपरिसरस्य गिरेस्तटानि॥ ८॥

सीता। दृष्ट्वा। हा कधं पहादचन्दमण्डलावण्डरपरिक्खाम-

(य) दिष्ट्या अपरिहीनराजधर्म्मः स राजा।

(र)। हा कथं प्रभातचन्द्रमन्डलापान्डुरपरिक्षामदुर्वलेन आकारेण अयं सौम्यगम्भीरानुभावमात्रप्रत्यभिज्ञात आर्य्यपुत्र एव, तन्मां धारय।

(य) सीता। स राजा रामः, दिष्ट्या भाग्येन न परिहीनः परित्यक्तः। राजधर्म्मः राजकर्त्तव्यं येन सः।

यत्रेति। यत्र येषु तटेषु द्रुमा अपि वृक्षा अपि, मृगा अपि पशवोऽपि मे मम बन्धवः आसन्निति शेषः। छायादानशरीरकन्डूयनादिना ममुपकारित्वादितिभावः। प्रियासहचरः सीतया सहितः चिरं बहुकालं यानि तटानि अध्यवात्सं आश्रित्य वासं कृतवान्, एतानि दृश्यमानानि वहवो निर्झरा जलप्रवाहाः कन्दरा गुहाश्च येषु तानि तथोक्तानि, गोदावर्य्या नद्याः परिसरः पर्य्यन्तस्थितः सीमावर्त्तीति यावत् तस्य गिरेः पर्वतस्य तानि तटानि समीपभूमयो वर्त्तन्त इत्यर्थः।

अत्र मुनि-तत्पत्नीकुमारादिषु का कथा, द्रुमा अपि मृगा अपि मम बन्धव आसन्नित्यर्थापतनादर्थापत्तिरलङ्कारः।

"पशवोऽपि मृगाः"। "पर्य्यन्तभूः परिसरः" इतिचामरः।

यानीति "अन्वध्याङ्वसः" इत्यधिकरणस्य कर्म्मत्वं।

वसन्ततिलकावृत्तम्॥ ८॥

(र) सीतेति। हा कथमित्येकमव्ययं महाविषादसूचकं। प्रभातचन्द्रमण्डल आपाण्डुरः श्वेतच्छायः, दुर्वलो वलहीन इव परिलक्ष्यमाणस्तेन आकारेण आकृत्या -मत्यव

दुव्वलेण आआरेण अअं (१) सोम्मगम्भीराणुभावमेत्तपच्चभि-
आणिदो अज्जउत्तो ज्जेव, ता मं धारेहि (२) ।

इति तमसामाश्रित्य मूर्च्छति । (र)

तम । धारयन्ती । वत्से ! समाश्वसिहि समाश्वसिहि ।

नपथ्ये । अनेन पञ्चवटीदर्शनेन

अन्तर्लीनस्य दुःखाग्ने रद्योद्दामं ज्वलिष्यतः ।
उत्पीड़ इव धूमस्य मोहः प्रागावृणोति माम् ॥ ८ ॥

उपलक्षितइत्यर्थः । अयं दृश्यमानो जनः सौम्यं शान्तं गम्भीरं स्थिरं यदनुभावमात्रं केवलप्रभावस्तेन प्रत्यभिज्ञातः पुनरनुभूत आर्य्यपुत्रो राम एव आकृतिवैषम्यात् सोऽयं नवेति संशय एव स्यात् किन्तु पूर्वानुभूतप्रभावदर्शनात् सोऽयमिति निश्चय इतिभावः । तत्तस्मात् रामस्य तादृक् कष्टकरावस्थादर्शनेन मूर्च्छया पतनेन आघातसम्भवादित्यर्थः । धारय अवलम्बस्व । आयुर्वेदोक्तात् नतनोऽयं मूर्च्छाप्रकारः, यत् पतनात् प्राक् रोगी धारयितु मापदिशतीत्याहुःतं ।

"अनुभावः प्रभावे"ऽपीत्यमरः ।

अन्तरिति । अन्तः अन्तःकरणे लीनस्य कालिनापचयात् अल्पमात्रावशेषेण भावेन स्थितस्य, अद्य अनेन पञ्चवटीदर्शनेन उद्दामं अत्यन्तं ज्वलिष्यतः सन्दीपिष्यमानस्य बाहुल्यं प्राप्स्यत इत्यर्थः उद्बोधकप्राचुर्या उद्बोधनीयस्य बाहुल्यावश्यम्भावादितिभावः । दुःख-मग्निरिव तस्य, धूमस्य उत्पीड़ोराशिरिव मोहः मां प्राक् सम्पूर्णविकासात् पूर्वं आवृणोति आच्छादयति । यथा बह्निजनितोधूमो बह्नेः पूर्णविकासात् पूर्वं तत् स्थान-माच्छादयति, तथा दुःखजनितो मोहः दुःखस्य पूर्णविकासात् पूर्वं मामावृणोतीति सरलार्थः ।

अत्र पूर्वार्द्धे लुप्तोपमा, परार्द्ध च साधारणोपमा इत्युभयोः अङ्गाङ्गिभावेन सङ्करः ।

(१) अअं सो गम्भीरानुभावः...इति पाठान्तरं । अअं णिअसोम्मगम्भीरानुभाव इत्यपि पाठः । (२) ता धारेदु मं पिअसही इति पाठभेदः ।

हा प्रिये ! जानकि ! । ( ल )

तम । स्वगतं । इदं तदाशङ्कितं गुरुजनेनापि । ( व )

सीता । समाश्वस्य । हा कधं एदं । ( श )

पुनर्नेपथ्ये । हा देवि ! दण्डकारण्यवासप्रियसखि ! विदेह-राजपुत्रि ! इति मूर्च्छति । ( ष )

सीता । हद्दी हद्दी, मं मन्दभाइणिं उद्दिसिअ आमीलन्तणोल्लुप्पलो मुच्छिदो ज्जेव, हा हा कधं धरणोवट्टे णिरुस्साह

---

( श )। हा कथमेतत् ।

( स ) हाधिक् हाधिक्, मां मन्दभागिनीमुद्दिश्य आमीलन्नेत्रनीलोत्पलो मूर्च्छित एव, हा हा कथं धरणीपृष्ठे निरुत्साहनि:सहं विपर्य्यस्त: ; भगवति ! तमसि ! परित्रायस्व परित्रायस्व जीवय आर्य्यपुत्रम् ।

---

नच जूनिष्यत इति साधकसत्त्वात् दु:खाग्नेरिति निरङ्गं केवलं रूपकमिति वाच्यं धूमस्रोत्पीड़ इव मोह इत्युपमानुसारेण दु:खाग्नेरित्युपमाया एवौचित्यादिति सुधीभिर्विभावनीयं ॥ ९ ॥

( ल ) हेति । कुवासोति वाक्यशेष: ।

( व ) तमेति । गुरुजनेन अगस्त्यलोपामुद्रागङ्गादिनेत्यर्थ: । आशङ्कितं तदिदं रामस्य मूर्च्छापतनादिकं, उपस्थितमिति शेष: ।

( ष ) पुनरिति । दण्डकारण्यवासे तत् समय इत्यर्थ: प्रियसखि ! सहायभावेन नानोपकारकरणादिति भाव: ।

( स ) सीतेति । आमीलती मुद्रिते नेत्रे नीलोत्पले इव यस्य स तथोक्त: । निरुत्साहेन कमपि विषयं प्रति उद्यमाभावेन नि:सहं अवशं यथा स्यात्तथा धरणीपृष्ठे भूतले विपर्य्यस्त: पतित: । परित्रायस्व मामिति शेष: । जीवय सचैतन्यं कुरु । आर्य्यपुत्रजीवनेनैव मम परित्राणं भवेदिति भाव: ।

विपल्हत्थो ; भअवदि! तमसे! परित्ताहि परित्ताहि जीवावेहि अज्जउत्तं। इति पादयोः पतति। (स)

तम। त्वमेव ननु कल्याणि! सञ्जीवय जगत्पतिम्।
प्रियस्पर्शो हि पाणिस्ते तत्रैव नियता भव * ॥ १० ॥

सीता। जं भोदु तं भोदु, जधा भअवदी भणादि। (ह)

इति ससम्भ्रमं निष्क्रान्ता।

ततः प्रविशति भूमौ निपतितः साखया सीतया स्पृश्यमानः साह्लादोच्छ्वासो रामभद्रः। (क)

---

(ह) यद्भवतु तद्भवतु, यथा भगवती भणति।

---

"उत्साहोऽध्यवसायः स्या"दित्यमरः।

निर्मक्षिकमित्यादिवत् निरुत्साहमिति अभावार्थेऽव्ययीभावः।

त्वमिति। ननु कल्याणि! हे शुभे! त्वमेव जगत्पतिं पृथिवीपालं रामं सञ्जीवय ससंज्ञं कुरु। तवैव करणीयमेतत् नत्वन्य इत्येवशब्दार्थः। हि यस्मात् ते तव पाणिः करतलं, प्रियः प्रीतिकरः स्पर्शो यस्य सः। सुतरां रामस्य चैतन्यसम्पादनं तव यथा सुकरं नान्यस्य तथेति भावः। अत एव तवैव पाणिना स्पर्श एव नियता व्यापृता भव।

अत्र चतुर्थपादार्थं प्रति तृतीयपादगतवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः॥ १० ॥

(ह) सीतेति। यद्भवतु तद्भवतु, अनुमत्यभावेऽपि हस्तस्पर्शकरणे क्रुद्धः सन्तुष्टो वा भवतु इत्यर्थः। ईदृशसमये तन्न विवेचनीयमिति भावः। यथा भगवती तमसा भणति ब्रवीति, तथा करोमि पाणिना स्पृशामीत्यर्थः। ससम्भ्रमं सत्वरं।

(क) तत इति। साखया रामस्य मूर्च्छितावस्थादर्शनेन स्रवदश्रुसहितया। आह्लादेन हर्षेण, उच्छ्वासेन चैतन्येन च सहेति साह्लादोच्छ्वासः।

---

*। नियतो भवः। १। तवैव निरतो जनः। २। इति पाठान्तरद्वयं।

सीता। किञ्चित् सहर्षमात्मगतं। जाणामि, पुणोवि पच्चागदं विय जीविदं तेल्लोअणाहस्स (१)। (ख)

रामः। हन्त भोः! किमेतत्। (ग)

प्रश्च्योतनं नु हरिचन्दनपल्लवानां
निष्पीड़ितेन्दुकरकन्दलजो नु सेकः।

(ख) जानामि, पुनरपि प्रत्यागतमिव जीवितं त्रिलोकनाथस्य।

(ख) सीतेति। त्रिलोकनाथस्य जगदीश्वरस्य रामस्य जीवितं चैतन्यं पुनरपि प्रत्यागतमिव इत्यहं जानामि बुध्ये, श्वासप्रश्वासादिदर्शनादिति भावः। लक्ष्मीरूपा सीता नारायणावतारत्वेन रामस्य जगदीश्वरत्वं जानात्येव, तस्य तु आत्मगतत्वेन कथने अन्यैरज्ञेयत्वात् न मानुषवद्व्यवहारहानिः। ननु कथमनयोर्मानुषवद्व्यवहार इति सत्यं जगति स्त्रीपुरुषाणां चरित्रशिक्षादानाय जगदीश्वरीजगदीश्वरयोः सीतारामयोर्मानुषभावेन व्यवहारः सजातीयशिक्षायाः शीघ्रफलकत्वात्। इदन्तु कविना अध्यात्मरामायणावलम्बनेनोक्तं। वाल्मीकिमते तु राम आदर्शचरितो मानव एवेत्यनुसन्धेयं।

(ग) राम इति। हन्त भोरिति हर्षविस्मयसूचकमेकमव्ययं। किमेतदित्यस्य श्लोकेनान्वयः।

प्रश्च्योतनमिति। एतत् स्पर्शनं किं हरिचन्दनपल्लवानां चन्दनवृक्षविशेषकिसलयानां प्रश्च्योतनं रसो निर्य्यास इति यावत् नु वितर्कयामीत्यर्थः तद्वत् शैत्यातिशयकरत्वादिति भावः सर्व्वत्राप्येवं नुशब्दोवितर्के। पल्लवपदं शैत्यातिशयद्योतनार्थं। निष्पीड़िताः मर्द्दिता इन्दुकरकन्दलाः चन्द्रकिरणनवाङ्कुरा यस्मै स तथोक्तोमर्द्दितचन्द्रकराङ्कुरादुत्पन्नो रस इत्यर्थः तस्मात् जायत इति इन्दुकरकन्दलजः आमर्द्दितचन्द्रकराङ्कुरनिर्य्यासजनित इत्यर्थः सेको नु तथा श्रान्तयोः नितान्तसन्तप्तयो र्जीवनमनसोः प्राणचित्तयोः परितर्पणः शीतलकारित्वात् प्रीतिकरः, सञ्जीवयतीति सञ्जीवनी या ओषधिः फलपाकेन

---

(१) तैल्लोकस्स इति पाठान्तरं।

आतप्तजीवनमनःपरितर्पणो मे (१)
सञ्जीवनौषधिरसो नु हृदि प्रसिक्तः ॥ ११ ॥
स्पर्शः पुरा परिचितो नियतं स एष
सञ्जीवनश्च मनसः परिमोहनश्च ।

---

लतात्वचादिः तस्या रसो निर्य्यासो मे मम हृदि प्रसिक्तो नु। एतेषामन्यतमाभावे कथम-कस्मान्मम चैतन्योत्पत्तिरिति भावः ।

अत्र स्पर्शे प्रद्योतनादीनां संशयात् तत्र च निश्चयाभावात् शुद्धसन्देहालङ्कारः। परश्लोके 'स्पर्शः पुरा परिचितो नियतं स एष' इत्युक्तत्वात् तत्स्पर्शस्याप्यनुभवादुभयकोटिक-ज्ञानरूपः संशयो रामस्य जात इत्यनुसन्धेयं ।

इन्दुकरकन्दलनिर्प्पीड़नासम्बन्धेऽपि तत्सम्बन्धोक्त्या अतिशयोक्तिश्च अनयोरङ्गाङ्गि-भावेन सङ्करः ।

"तैलपर्णिक गोशीर्षे हरिचन्दनमस्त्रियां ।" "ओषध्यः फलपाकान्ता" इतिचामरः ।

वसन्ततिलकावृत्तं ॥ ११ ॥

स्पर्श इति। पुरा सीतया सहैकत्रावस्थानकाले परिचितः ईदृक्तया विदितः सञ्जीवन उत्साहवर्द्धक इत्यर्थः मनसो हृदयस्य परिमोहनः आनन्दवाहुल्येन अवशता-जनकश्च नियतं निश्चितं एष अनुभूयमानः स स्पर्शः। यः स्पर्शः सन्तापजां वियोग-वेदनाजनितां मूर्च्छां प्रतिहत्य विनाश्य सपदि तत्क्षणात् आनन्दनेन आनन्दजननेन पुनः जड़तां मनसस्तदेकानुभवपरायणत्वात् विषयान्तरानभिज्ञतां आतनोति करोति ।

अत्र जड़ताकारणासम्बन्धेऽपि तत् सम्बन्धोक्त्या अतिशयोक्तिरलङ्कारः। यच्छन्दस्य परत्र पाठेन विधेयाविमर्शदोषः, स च परार्द्धं प्रथमं तत्र तृतीयपादं पठित्वा निरसनीयः।

"सद्यः सपदि तत्क्षणात् ।" "जड़ोऽज्ञ" इतिचामरः ।

---

(१) आतप्तजीविततरोः। जीवितपुनः परितर्पणोऽयं इति पाठभेदौ ।

सन्तापजां सपदि यः प्रतिहत्य मूर्च्छा-
मानन्दनेन जड़तां पुनरातनोति ॥ १२ ॥

सीता। ससाध्वसोत्कम्पमपसृत्य। *। एत्तिअं क्व ज्जेव दाणिं मे वहुदरं। (घ)

रामः। उपविश्य। न खलु वत्सलया सीतादेव्या अभ्युपपन्नोऽस्मि ?। (ङ)

सीता। हद्धी हद्धी, किं त्ति मं अज्जउत्तो मग्गिस्सदि ?। (च(

---

(घ) एतावदेव इदानीं मे बहुतरं।

(च) हाधिक् हाधिक्, किमिति आर्य्यपुत्रो मां मार्गिष्यति ?।

---

वसन्ततिलकावृत्तं ॥ १२ ॥

(घ) सीतेति। साध्वसं अनुमत्यभावेऽपि समीपागमनेन रामस्य क्रोधभयं, उत्कम्पः स्पर्शेन सत्त्वोद्रेकात देहचाञ्चल्यं ताभ्यां सहेति तत् तथोक्तं। इदानीं निर्वासनकाले एतावदेव मम स्पर्शस्य सुखजनकस्वीकारपर्य्यन्तमेव बहुतरं अतिरिं अत्यन्तादरत्वेन मन्तव्यमित्यर्थः प्रेमालापसहवासादिप्रकृतसुखानामेकान्तासम्भवादिति भावः।

(ङ) राम इति। वत्सलया स्नेहशालिन्या। अभ्युपपन्नः प्राप्तः स्पृष्ट इतियावत्। अत्र काकुस्वरेण प्रश्नो द्योत्यते, तथाच नखलु अभ्युपपन्नोऽस्मि किं, अपितु अभ्युपपन्न एव, कथमन्यथा तादृगलौकिकसुखस्पर्श इति भावः।

(च) सीतेति। हाधिगित्येकं शोकसूचकमव्ययं तस्य दैन्ये द्विर्वचनं। यस्मात्क्षणमनुक्षणमेव सहचारिणी आसं, स ममेदानीमन्वेषणाय प्रवृत्त इति महाशोककारणमेतदिति भावः। मार्गिष्यति अन्वेषणं करिष्यति। रामस्य सुखभङ्गिशरीरचाञ्चल्यादिदर्शनात् सीताया अयं संशयः।

---

* ससाध्वसकरुणमिति पाठान्तरं। भयशोकसहितमिति तदर्थः।

राम:। भवतु, पश्यामि। (छ)

सीता। भअवदि! तमसे! ओसरह्म, जइ दाव मं क्खिस्सदि, तदो अणब्भणुण्णादसन्निधाणेण अहिअं पि मम महाराओ कुविस्सदि। (ज)

तम। अयि वत्से! भागीरथीवरप्रभावाद्वनदेवतानामप्यदृश्या संवृत्तासि। (झ)

---

(ज) भगवति! तमसे! अपसरामः, यदि तावन्मां प्रेक्षिष्यते, तदा अनभ्यनुज्ञातसन्निधानेन अधिकमपि मम महाराजः कोपिष्यति।

---

(छ) राम इति। भवतु, सीतया अभ्युपपत्तिरनभ्युपपत्तिर्वा भवतु इत्यर्थः। पश्यामि समन्तादवलोकनेन तन्निरूपयामीत्यर्थः। पश्यामीत्यतः परं 'इति समन्तादवलोकयति' ईदृशं किञ्चित् कविवाक्यं मन्तव्यं अन्यथा पूर्वपरवर्त्तिसीतावाक्याभ्यां सहासामञ्जस्यं स्यादिति विवेच्यं।

(ज) सीतेति। अपसरामः अस्मात् स्थानादन्यत्र गच्छामः वयमिति शेषः "वास्मदश्चे"ति वहुवचनं। अनभ्यनुज्ञातं अननुमतं समीपमागच्छेत्यनुमत्यभावविशिष्टमिति यावत् यत् सन्निधानं निकटवर्त्तित्वं तेन। मां प्रति नितान्तावज्ञां विना नर्वासनं न स्यात् सुतरां अवज्ञया निर्वासिताया मम आर्य्यपुत्रानुमतिमन्तरेण समीपगमनं कोपकारणमेवेति भावः।

(झ) तमेति। भागीरथीवरप्रभावात् गङ्गाया वरमाहात्म्यात्। वनदेवतानामपि अदृश्या त्वमसि, किं पुनर्मानुषस्य रामस्येति वाक्यशेषः; सुतरां तव अपसरणप्रयोजनं नास्तीति भावः।

सीता। आं, अत्थि एदं। (ञ)

रामः। हा प्रिये! जानकि! ननु प्रिये जानकि!। (ट)

सीता। समन्युगद्गदं। अज्जउत्त! असरिसं क्खु एदं वअणं इमस्स वुत्तन्तस्स। सास्रम्। अहवा किं त्ति वज्जमइं जम्मन्तरेसु वि पुणो असम्भाविददुल्लहदंसणं मं ज्जेव मन्दभाइणीं उद्दिसिअ वच्छलस्स एवं वादिणो अज्जउत्तस्स उवरि णिरणुक्कोसा भविस्सं?, अहं एदस्स हिअअं आणामि मम एसोत्ति। (ठ)

---

(ञ) आं, अस्ति इदं।

(ठ) आर्य्यपुत्र! असदृशं खलु एतत् वचनं अस्य वृत्तान्तस्य। अथवा किमिति वज्रमयीं जन्मान्तरेषु अपि पुनः असम्भावितदुर्लभदर्शनां मामेव मन्दभागिनीं उद्दिश्य वत्सलस्य एवंवादिन आर्य्यपुत्रस्य उपरि निरनुक्रोशा भविष्यामि? अहमेतस्य हृदयं जानामि मम एष इति।

---

(ञ)। आमिति पूर्ववृत्तस्मरणार्थमव्ययं। इदं भागीरथीवरप्रभावान्मम अदृश्यत्वं अस्तीति स्वीकारः; अतो नापसरामीति भावः।

(ट) राम इति। अनुनयविशेषद्योतनार्थं पुनर्ननु प्रिये जानकीत्युक्तं।

"प्रश्नावधारणाऽनुज्ञाऽनुनयामन्त्रणे ननु" इत्यमरः।

(ठ) सीतेति। मन्युना शोकेन गद्गदः अस्फुटः, अस्पष्टरूपेणोच्चारणं तेन सहेति समन्युगद्गदं आहेति क्रियाविशेषणमेतत्। इदं वचनं 'प्रिये जानकी'तिस्रं हवाञ्चकप्रीतिकरं वचनं अस्य वृत्तान्तस्य अकारणनिर्वासनरूपनिर्दयव्यवहारस्येत्यर्थः असदृशं अयोग्यं; निर्वासितां प्रति 'रे पापीयसि' इति निन्दासूचकसम्बोधनमेव युज्यते, नतु प्रिये इति सम्बोधनं व्यवहारानुरूपोक्तेरेव महात्मनां धर्म्मत्वात्, अन्यथा "वचस्यन्यन्मन-

रामः। सर्वतो विलोक्य सनिर्वेदम्। हा! न काचिदत्र!। (ड)

सीता। भअवदि! तमसे! णिक्कारणपरिच्चाइणोवि एदस्स

(ढ) भगवति! तमसे! निष्कारणपरित्यागिनोपि एतस्य एतेन एवंविधेन दर्शनेन कीदृशो मे हृदयानुबन्ध इति न जानामि न जानामि।

---

स्वन्यत् कर्म्मण्यन्यद्दुरात्मना"मितिन्यायेन दुरात्मतापर्य्यवसितिरिति भावः। प्रजाविरागसम्भावनयैव मम निर्वासनं कृतं न तु चरित्रदोषाशङ्कयेति कथमन्यथा इदानीमीदृग्व्यवहार इति विवेकोदयात् पश्चान्तरमाह अथवेति। वज्रमयीं नितान्तकठिनां कथमन्यथा आर्य्यपुत्रस्येदृगवस्थादर्शनेनापि मे न हृदयं विदीर्य्येत इति भावः जन्मान्तरेष्वपि पुनः असम्भावितं अनिश्चितं दुर्लभस्य दर्शनं यस्याः तां, अस्मिन्, जन्मनि निर्वासनेन गङ्गाया वरप्रभावेन च मम अदर्शनं जातं जन्मान्तरेष्वपि दर्शनं भवेदिति को निश्चित्य वक्तुं शक्नुयादिति भावः। वत्सलस्य मां प्रति स्नेहशालिनः। एवंवादिनः, हाप्रिये इत्यादि स्वोक्तिकारिणः। निरनुक्रोशा निर्दया किमिति भविष्यामि कथमपि नेत्यर्थः। एतस्य आर्य्यपुत्रस्य हृदयं मनोगतं भावमित्यर्थः। एष आर्य्यपुत्रः मम हृदयं जानातीत्यर्थः। आवामुभावेव उभयोर्मनोभावं जानीवः सुतरां आवयोः कोपि कमपि प्रति विद्वेषी न भवेदिति निश्चय एवास्ति, तथापि यदनेन दुर्व्यवहारः कृतः, तत्तु दैववशादिति भावः। भागीरथीवरप्रभावात् यथा कश्चिदपि सीताया दर्शनं न प्राप्तः, तथा स्वभावोच्चारितवाक्यमपि कश्चिन्न श्रुतवानिति मन्तव्यं तेन रामस्यातिनिकटेऽपिस्वाभाविकवाक्योच्चारणे तच्छ्रवणेन रामस्य न सीतापरिचय इति बोध्यं।

(ड) राम इति। सर्वतः सर्वासु दिक्षु। निर्वेदेन आत्मावमाननया सहेति सनिर्वेदं। सीताया अदर्शनेऽपि तदुद्देशेन विलापसम्बोधनादिकरणात् निर्णयानर्हतया आत्मनोऽवमाननेति बोध्यं। तथाच साहित्यदर्पणे—

"तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमानना।"

अत्र स्थाने काचित् कापि व्यक्ति र्न नास्तीत्यर्थः। सुतरां कुतः सीतेति भावः।

(ढ) सीतेति। एतस्य आर्य्यपुत्रस्य रामस्य। एवंविधेन दर्शनेन शोककातर-

एदिणा एवं विधेण दंसणेण कीदिसो मे हिअआणुबन्धोत्ति ण आणामि ण आणामि। (ढ)

तम। जानामि वत्से! जानामि। (ण)

तटस्थं नैराश्यादपि च कलुषं विप्रियवशा-
द्वियोगे दीर्घेऽस्मिन् झटिति घटनोत्तम्भितमिव।
प्रसन्नं सौजन्याद‌पि तु करुणैर्गाढ़करुणं
द्रवीभूतं प्रेम्णा तव हृदयमस्मिन् क्षण इव ॥ १३ ॥

त्वद्दर्शनेनेत्यर्थः हृदयानुबन्धः मनसोऽवस्था। इति न जानामि निर्णेतुं न शक्नोमीत्यर्थः। तामवस्थामनुपदमेव तमसा विवृणोति। न जानामीत्यत्र दैन्ये द्विर्वचनं।

(ण) तमेति। जानामि तव हृदयावस्थामिति शेषः। अवधारणे द्विर्वचनं जानाम्येवेत्यर्थः।

किमिव जानासीत्याह तटस्थमिति। तव हृदयं मनः, नैराश्यात् पुनः संयोगसम्भावनाया अभावात् तटस्थमुदासीनं संयोगोपायकरणादौ निस्पृहमित्यर्थः, अपि च तथा विप्रियवशात् प्रियस्य विरुद्धो विप्रियः दुर्व्यवहारः तद्वशात् अकारणपरित्यागजनितविद्वेषनिबन्धनादित्यर्थः कलुषं क्रोधेनाविलं पूर्वमासीदित्यर्थः तथा अस्मिन् दीर्घे अनन्तकालव्यापिनि वियोगे विच्छेदमध्ये अस्मिन् क्षणे समये झटिति अकस्मात् घटनया मेलनेन उत्तम्भितमिव स्तब्धप्रायं आश्चर्यवशादितिकर्त्तव्यताज्ञानशून्यमिवेत्यर्थः तथा सौजन्यात् प्रेमप्रकाशकसम्बोधनादिना साधुत्वप्रकाशात् प्रसन्नं सन्तुष्टं, अपि तु तथा करुणैः विलापादिना शोकप्रकाशैः गाढ़ः तीव्रः शोको यस्मिन् तादृशं, रामस्य शोकार्त्तत्वदर्शनात् तवापि तीव्रशोकातुरं मन इत्यर्थः, तथा प्रेम्णा प्रचुरप्रणयप्रकाशेनेत्यर्थः द्रवीभूतमिव आनन्देन गलितमिव।

अत्र भावाभिमानि वाच्यं क्रियोत्प्रेक्षाद्वयं, तथा नैराश्यादिकारणेन सह तटस्थत्वादिकार्य्यस्य वर्णनात् हेतुनामालङ्कारश्च अनयोरङ्गाङ्गिभावेन सङ्करः। तथा च चन्द्रालोके

राम:। देवि!।

प्रसाद इव मूर्त्तस्ते स्पर्शः स्नेहार्द्रशीतलः।

अद्याप्यानन्दयति (१) मां त्वं पुनः क्वासि नन्दिनि! ॥१४॥

सीता। एदे दे अगाधदंसिदसिणेहसम्भारा आनन्दणिस्सन्दिणो सुदा मए अज्जउत्तस्स उल्लावा, जाणं पच्चएण णिक्कारणपरिच्चाअसल्लिदोवि बहुमदो मे जम्मलाहो। (त)

(त) एते ते अगाधदर्शितस्नेहसम्भारा आनन्दनिष्यन्दिनः श्रुता मया आर्य्यपुत्रस्य उल्लापाः, येषां प्रत्ययेन निष्कारणपरित्यागशल्यितोऽपि बहुमतो मे जन्मलाभः।

"हेतोर्हेतुमता सार्द्धं वर्णनं हेतुरुच्यते।"

उत्तम्भितमिति "उदःस्थास्तम्भो"रिति स्तम्भेः सलोपः।

शिखरिणीवृत्तं ॥ १३ ॥

प्रसाद इति। स्नेहेन प्रेम्णा आर्द्रः क्लिन्नः अत एव शीतलः ते तव स्पर्शः, मूर्त्तः मूर्त्तिमान् प्रसाद इव अनुग्रह इव अद्यापि स्पर्शक्षणे का कथा स्पर्शध्वंसक्षणेऽपि मां आनन्दयति सुखीकरोति, पुनः किन्तु हे नन्दिनि! आनन्दकारिणि! त्वं क्व कुत्रासि?। त्वमेतावत्येव मम प्रियतमा, यत्तव स्पर्शासद्भावेऽपि तत्स्मरणादेव आनन्दमनुभवामीति भावः।

अत्र भावाभिमानिनी वाच्या गुणोत्प्रेक्षा, तथा शीतलत्वं प्रति स्नेहार्द्रत्वपदार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गं, तथा स्पर्शरूपाधाराभावेऽपि आनन्दजननक्रियारूपतदाधेय सद्भावात् विशेषश्च अलङ्कारः, एतेषामङ्गाङ्गिभावेन सङ्करः ॥ १४ ॥

(त) सीतेति। अगाधं अनन्तं यथास्यात्तथा दर्शितः स्नेहसम्भारः प्रणयातिशयो यैस्ते तथोक्ताः, आनन्दनिष्यन्दिनः सुखस्राविणः सुखवर्द्धका इत्यर्थः उल्लापा उच्चैर्विलापाः। येषां उल्लापानां प्रत्ययेन विश्वासेन, सदैव एते उल्लापाः श्रुतिसुखकरा

(१) अद्याप्यार्द्रयति इति पाठान्तरं।

रामः। अथवा कुतः प्रियतमा, नूनं सङ्कल्पाभ्यासपाटवोपादान (१) एष रामस्य भ्रमः। (थ)

नेपथ्ये। प्रमादः प्रमादः। सीतादेव्याः स्वकण्ठकलितैरित्यर्द्धं पठति। (द)

रामः। सकरुणौत्सुक्यं। किं तस्य ?।

पुनर्नेपथ्ये। वध्वा सार्द्धमित्युत्तरार्द्धं पठति।

सीता। को दाणिं णिउज्झिस्सदि।*। (ध)

(ध) क इदानीं नियोच्यते।

भविष्यन्तीति विश्वासेनेत्यर्थः निष्कारणपरित्याग एव शल्यं शङ्कुः तज्जातमस्येति स तथोक्तः जन्मलाभः मह्मतः श्लाघ्यतया मन्यत इत्यर्थः। एते आर्य्यपुत्रस्य उल्लापा ईदृशो मे प्रियाः, यदेषां निकटे अकारणपरित्यागदुःखं तुच्छं मन्यत इति भावः।

(थ) राम इति। महारण्ये निर्वासनेन मृतायाः सीताया अत्रागमनसम्भावना नास्त्येवेति विवेकोदयादाह अथवेति। सङ्कल्पः 'सीता अत्रास्ति एवञ्च ब्रवीतिइ'त्यादिमनोवृत्तिः, तस्य अभ्यासेन पौनःपुन्येन यत् पाटवं नैपुण्यं, 'सीता अत्रास्ति एवञ्च ब्रवीती"त्यादिधारणायाः सर्वदाकरणपटुत्वमित्यर्थः तदेव उपादानं कारणं यस्य स तथोक्तः। भ्रमो भ्रान्तिरिति नूनं निश्चयः। सर्वदैव सीतायाश्चिन्तया प्रायेण सर्वत्रैव तां पश्यामीति भ्रमो जायत इति सरलार्थः।

(द) नेपथ्ये इति। प्रमादशब्दस्यार्थः पूर्वमेव निरूपितः। पठ्यते वासन्त्येतिशेषः। एवं परत्रापि बोध्यं

(ध) सीतेति। इदानीं सहायशून्यावस्थानसमये, कोजनः नियोच्यते मत्पुत्रक करिकरभक साहाय्यार्थं प्रेष्यते मयेति शेषः। तस्य साहाय्यार्थं कमपि प्रेरयितुं न शक्नोमि महादुःखमेतदिति भावः।

---

(१) पाटवोत्पाद इति पाठभेदः।

*। अहिउज्झिस्सदि इति पाठान्तरं। अभियोच्यत इति तदनुवादः।

रामः। क्वासौ दुरात्मा, यः प्रियायाः पुत्रकं वधूद्वितीय-मभिभवति। इत्युत्तिष्ठति। (न)

प्रविश्य सम्भ्रान्ता वासन्ती। कथं देवो रघुनन्दनः। (प)

सीता। कहं पिअसही मे वासन्ती। (फ)

वास। जयति जयति देवः!

रामः। निरूप्य। कथं देव्याः प्रियसखी वासन्ती। (ब)

वास। देव! त्वर्य्यतां त्वर्य्यतां, इतो जटायुगिरिशिखरस्य दक्षिणेन सीतातीर्थेन गोदावरीमवतीर्य्य सम्भावयतु देव्याः पुत्रकं देवः। (भ)

---

(फ) कथं प्रियसखी मे वासन्ती।

(न) राम इति। क्व वर्त्तत इति शेषः। वधूर्भार्य्या काचित् हस्तिनी, द्वितीया द्वयोः संख्ययोः पूरणी सहचारिणीति यावत् यस्य तं वध्वा सह विहरन्तमित्यर्थः अभिभवति आक्रामति। तमहं गत्वा व्यापादयामीति भावः। उत्तिष्ठति साहाय्य करणाय गन्तुमित्यर्थः।

अत्र "द्वितीया सहधर्म्मिणी" त्यमरकोषात् वधूद्वितीयेत्येकार्थकशब्दद्वयमाशङ्क्य आपाततः पुनरुक्तत्वप्रतीतेः परञ्च द्वितीयशब्दनिश्चयेन तस्य द्वित्वसंख्यापूरणार्थत्वावगमात् पुनरुक्तवदाभासोऽलङ्कारः।

(प) प्रविश्येति। सम्भ्रान्ता आक्रान्तसीतापुत्रक-करिकरभस्य रक्षकाप्राप्त्या अस्थिरचित्ता। कथमिति निर्णयाश्चर्य्यसूचकमव्ययं।

(भ) वासेति। त्वर्य्यतां त्वरा क्रियतां सत्वरं गम्यतामित्यर्थः। सम्भ्रमे द्विर्वचनं। सत्वरं गत्वा मया किं कर्त्तव्यमित्याह इत इति। इतः स्थानात्। जटायोर्गिरिशिखरं जटायुना अध्युषितपूर्वं पर्वतशृङ्गमित्यर्थः तस्य दक्षिणेन दक्षिणदिग्वर्त्तिना सीतायास्तीर्थं जलावतारो घट्ट इति यावत् तेन, येन घट्टेन सीता जलादिमानेतुं गोदावरीं गतवती

सीता। हा ताद! जटाओ! सुसं तुए विणा जणट्ठाणं। (म)

रामः। अहह! हृदयमर्म्मच्छिदः खल्वमी कथोद्घाताः। (य)

वास। इत इतो देवः। (र)

सीता। भअवदि! सच्चअं एव्व वणदेवदावि मं ण पेक्खदि ?। (ल)

तम। अयि वत्से! सर्वदेवताभ्यः प्रकृष्टमैश्वर्य्यं भागीरथीदेव्याः, तत् किमाशङ्कसे। (व)

---

(म) हा तात! जटायो! शून्यं त्वया विना जनस्थानं।

(ल) भगवति! सत्यकमेव वनदेवतापि मां न प्रेक्षते ?।

---

तेन घट्टेनेत्यर्थः। अवतीर्य्य प्रविश्य। देव्याः पुत्रकं सीतायाः कृतकपुत्रं तं करिशावकं सम्भावयतु साहाय्यकरणेन प्रीणयतु, देवो राजा भवान्।

"जटायुश्च जटायुषा" इति द्विरूपकोषः। "तीर्थं जलावतारे योनौ च" त्यजयः।

(म) सीतेति। श्वशुरमित्रत्वेन जटायुषः तात इति सीतया सम्बोधनं कृतं। शून्यं शून्यमिव।

(य) राम इति। कथानां जटायुगिरिशिखर-सीतातीर्थ-गोदावरी-देवीपुत्रक-पदानां उद्घाताः उच्चारणानि, हृदयमर्म्मच्छिदः तत्तत्पूर्ववृत्तान्तस्मारकत्वेन शोकोदयजननात् हृदयविदारका इत्यर्थः।

(र) वासेति। देवो भवान्, इतः इतः अस्मादस्मात् स्थानात् आगच्छत्विति शेषः।

(ल) सीतेति। समीपवर्त्ती रामः, समागता वनदेवता वासन्ती च कथमप्यालापाकरणात् आत्मानं न पश्यतीति प्रत्यक्षीकृत्य आश्चर्य्यान्विता सीता तमसां पृच्छति भगवतीति। सत्यकमिति स्वार्थे कः।

(व) तमेति। भागीरथीदेव्या गङ्गाया ऐश्वर्य्यं अणिमादिशक्तिः सर्व्वदेवताभ्यः प्रकृष्टं प्रबलं, तत् तस्मात् किं कथं आशङ्कसे अन्यो द्रक्ष्यतीत्याशङ्कां करोषीत्यर्थः।

सीता। तदो अणुसरह्म। इति परिक्रामत:। (श)

राम:। (परिक्रम्य) भगवति! गोदावरि! नमस्ते।

वासन्ती। निरूप्य। देव! देव! मोदस्व विजयिना वधूद्वितीयेन देव्या: पुत्रकेण। (ष)

राम:। विजयतामायुष्मान्।

सीता। अह्महे! ईदिशो एसो संवुत्तो। (स)

(श) ततोनुसराव:।

(स) अहो! ईदृश एष संवृत्त:।

उत्कृष्टैश्वर्य्यशालिन्या गङ्गाया वरप्रभावेण निकृष्टैश्वर्य्यशालिनी वनदेवता त्वां द्रष्टुं न शक्नुयादिति त्वं यथेच्छं विचरितुमर्हसीति भाव:।

ऐश्वर्य्यञ्च "अणिमा लघिमा प्राप्ति: प्राकाम्यं महिमा तथा।
ईशित्वञ्च वशित्वञ्च तथा कामावशायिता।"

"अणिमा अणुभाव:, यत: शिलामपि प्रविशति। लघिमा लघुभाव: यत: सूर्य्यमरीचीनालम्ब्य सूर्य्यलोकं याति। महिमा महतो भाव: यतो महान् भवति। प्राप्तिरङ्गुल्यग्रेण स्पृशति चन्द्रं। प्राकाम्यमिच्छानभिघात: यतो भूमावुन्मज्जति निमज्जति यथोदके। वशित्वं भूतभौतिकं वशीभवत्यवश्यं। ईशित्वं भूतभौतिकानां प्रभवव्यूहव्ययानामीष्टे। यत कामावसायित्वं सत्यसङ्कल्पता, यथास्य सङ्कल्पो भवति भूतेषु तथैव भूतानि भवन्ति।" इति सांख्यतत्त्वकौमुद्यां वाचस्पतिमिश्रा:। तत्र कामावसायितारूपैश्वर्य्येण वरप्रदानादिकमिति बोध्यं।

(श) सीतेति। ततस्तस्मात् नि:संशयादृश्यत्वात् अनुसराव: पश्चात् गच्छाव:, आवां आर्य्यपुत्रवासन्त्याविति शेष:। परिक्रामत: सीतातमसे इति शेष:।

(ष) वासीति। निरूप्य निश्चयेनावलोक्य। देव देवेति हर्षेङ्गितोक्ति:। मोदस्व आनन्दितो भव। सीताया: कृतकपुत्रेण करिशावकेन उद्दामदन्तिपराजयकरणादिति भाव:।

(स) सीतेति। अहो आश्चर्य्यं। एष कृतकपुत्रो मे करिशावक:, ईदृश: महाबल: सम्वृत्त: जात:, अतीवसुखकारणमेतदिति भाव:।

रामः। देवि! दिष्ट्या वर्द्धसे। (ह)

येनोद्गच्छद्विसकिसलयस्निग्धदन्ताङ्कुरेण
व्याकृष्टस्ते सुतनु! लवलीपल्लवः कर्णपूरात् (१)।
सोऽयं पुत्रस्तव मदमुचां वारणानां विजेता
यत् कल्याणं वयसि तरुणे भाजनं तस्य जातः॥१५॥

(ह) राम इति। दिष्ट्या भाग्येन वर्द्धसे वृद्धिं प्राप्तासि सम्पद्युक्तासीत्यर्थः। अप्रत्यचामपि सीतामुद्दिश्य रामस्योक्तिरियं।

वृद्धिं प्रति हेतुमाह येनेति। शोभना सुन्दरी तनूर्यस्याः तत्सम्बोधनं। उद्गच्छन्तौ उत्तिष्ठन्तौ विसकिसलयवत् मृणालाग्रभागवत् स्निग्धौ कोमलौ दन्ताङ्कुरौ यस्य तेन तथोक्तेन येन करिशावकेन ते तव कर्णपूरात् कर्णालङ्कारात् कर्णाभरणमध्यादित्यर्थः लवल्याः वृक्षविशेषस्य (लोयाड़ि, लोयाइल इति प्रसिद्धस्य) पल्लवः व्याकृष्टः शुण्डया आकृष्य नीतः। शैशवीयकोमलशरीरस्वभाव आसीदिति भावः। अयं दृश्यमानः स तव पुत्रः करिशावकः मदमुचां दानजलस्राविणां महाबलवतामिति भावः वारणानां हस्तिनां विजेता जात इति शेषः। अतएव तरुणे वयसि यौवने काले यत् कल्याणं महाबलवत्त्वेन शत्रुनिराकरणात् मङ्गलं स्यात् प्राणिनामिति शेषः तस्य कल्याणस्य भाजनं पात्रं जातः महाबलवान् भूत इत्यर्थः।

अत्र प्रथमचरणे लुप्तोपमा, तथा चतुर्थचरणार्थं प्रति तृतीयचरणवाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गञ्च अनयोरङ्गाङ्गिभावेन सङ्करः।

सुतनु इति "स्त्रियां मूर्त्तिस्तनुस्तनू"रित्यमरोक्तदीर्घान्ततनूशब्दस्य सम्बुद्धौ ह्रस्वः। "उद्देश्यविधेययोरुद्देश्यवचनत्वमाख्यातस्ये"ति काशिकाप्रामाण्यात् जात इत्यत्र पुंस्त्वं। आख्यातस्य प्रधानक्रियाया इति तदर्थः।

मन्दाक्रान्ता वृत्तं ॥ १५ ॥

---

(१) कर्णमूलादिति पाठान्तरं।

सीता। अविउत्तो दाणिं अअं दीहाउ इमाए सोम्मदंसणाए होदु। (च)

रामः। सखि! वासन्ति! पश्य पश्य, कान्तानुवृत्तिचातुर्य्यमप्यनुशिक्षितं वत्सेन। (क)

लीलोत्खातमृणालकाण्डकवलच्छेदेषु सम्पादिताः*
पुष्यत् पुष्करवासितस्य(१)पयसो गण्डूषसंक्रान्तयः।

(च) अवियुक्त इदानीमयं दीर्घायुरनया सौम्यदर्शनया भवतु।

(च) सीतेति। अयं दीर्घायुः दीर्घकालजीवी मम पुत्रकः अनया दृश्यमानया सौम्यदर्शनया प्रियदर्शनया स्वभार्य्यया करिण्येत्यर्थः अवियुक्तः अविच्छिन्नः चिरमेकत्रावस्थित इति यावत्। दम्पत्योर्विरहजन्यं परस्परदुःखं जगति सर्वदुःखेभ्योदारुणमिति स्वयमनिशमनुभवन्ती सीता, तत् दुःखं यथा पुत्रस्नुषयोस्तयोः करिकरिण्योर्न स्यात् तथाऽभिसन्धाय आशीर्वादान्तरमकृत्वा चिरसंयोगाशीर्वादं कृतवतीति बोध्यं।

(क) राम इति। कान्ताया भार्य्याया अनुवृत्तौ अननये सन्तोषोपयोगीति तात्पर्य्यं यत् चातुर्य्यं नैपुण्यं तत् वत्सेन करिशावकेन अनुशिक्षितं शिक्षया लब्धं। एतेन सीताया अभावेन तदनुवृत्तिकरणासामर्थ्यात् रामस्य मनसि दारुणं दुःखमिति व्यज्यते।

पश्य पश्येति विस्मये द्विर्वचनं।

कथमेतज् ज्ञायत इत्याह लीलेति। यत् यस्मात् स्नेहात् प्रणयवशात् लीलया अवहेलया अनायासेनेति यावत् उत्खाता उत्पाटिता ये मृणालकाण्डाः मृणालस्तम्बाः तेषां कवलच्छेदेषु ग्रासार्थखण्डेषु करिणीमुखवर्त्तिष्वित्यर्थः,पुष्यद्भिः प्रस्फुटितैः पुष्करैः पद्मैः तेषां वासितस्य सुगन्धीकृतस्य पयसो जलस्य गण्डूषाणां मुखपूरणानां संक्रान्तयः सञ्चाराः-सम्पादिताः कृताः करिणीमुखवर्त्तिषु मृणालकवलेषु निजमुखपूरितं जलं वेगेन विक्षिप्तमित्यर्थः। तथा शीकरिणा जलबिन्दुशालिना करेण शुण्डादण्डेन सेकः करिण्या गात्रो-

* सम्पातिता इति पाठान्तरं। (१) पुष्यत्पुष्कर इति पाठभेदः।

**सेकः शीकरिणा करेण विहितः कामं विरामे पुन-**
**र्यत्स्नेहादनरालनालनलिनीपत्रातपत्रं धृतम् ॥ १६ ॥**

सीता । **भअवदि ! तमसे ! अअं दाव ईदिसो जादो, दे उण ण आणामि कुसलवा एत्तिएण कालेण कीदिसा विअ होन्ति । ( ख )**

( ख ) भगवति ! तमसि ! अयं तावदीदृशो जातः, तौ पुन र्न जानामि एतावता कालेन कीदृशाविव भवतः ।

परि सेचनं कामं पर्य्याप्तं यथास्यात्तथा ...ऽत: कृत: ; पुन: तत: परमित्यर्थ: विरामे सेकावसाने अनरालं अवक्रं सरलं च ... यस्य तादृशं यत् नलिनीपत्रं पद्मपत्रं तदेव आतपत्रं छत्रं धृतं शुण्डादण्डेन ... मातोपरि गृहीतमित्यर्थ: । एभिर्व्यापारैः कान्तानुवृत्तिचातुर्य्यशिक्षा सुव्यक्तेवेति भा... ।

अत्र स्वभावोक्तिरलङ्कारः,तथा नलिनी... आतपत्रमिति निरङ्गं केवलं रूपकञ्चेत्यनयो-रङ्गाङ्गिभावेन सङ्करः ; तथा छेकानुप्रास ... र्थयोश्च संसृष्टिः ।"मधु द्विरेफः कुसुमैक-पात्रे "इत्यादिवदत्र तिर्य्यग्जातिगतत्वात् ... आभासः ।

"काण्डः स्तम्बे तरुस्कन्धे वाणावस ... मेदिनी । "गण्डूषः । मुखपूरण"मिति शब्दकल्पद्रुमः । "शीकरोऽम्बुकणः ... । "कामं प्रकामं पर्य्याप्तं निकामेष्टं यथेप्सितं" । "अरालं कुटिलं वक्र"मि... ।

शार्दूलविक्रीडितं वृत्तं ॥ १६ ॥

( ख ) सीतेति । अयं कृतकपुत्रः ..., ईदृशो यौवनोचितवृद्धिवलवान् । कीदृशाविव यौवनोचितवृद्धिबलशालिनौ ... इति न जानामीत्यर्थः ।

अत्र न जानामीति वाक्यस्य '... ' इत्यादिवाक्यान्तरे प्रवेशादपि सीताया स्नेहातिशयेन व्याकुलीभूतत्वात् "दिङ्... " त्यादिसाहित्यदर्पणोदाहृतवत् न गर्भितत्वदोषः ।

तम। याद्दशोऽयं ताद्दशौ तावपि। (ग)

सीता। ईदिसी अहं मन्दभाइणी, जाए ण केवलं णिरन्तर अज्जउत्तविरहो पुत्तविरहोवि। (घ)

तम। भवितव्यतेयमीद्दशी। (ङ)

सीता। किंवा मए पसूदाए, जेण तादिसंपि मम पुत्तकाणं ईसिविरलकोमलधवलदसणुज्जलकवोलं अणुवद्ध मुद्ध काअलि-विहसिदं णिवद्धकाअसिहण्डअं अमलमुहपुण्डरीअजुअलं ण परिचुम्बिदं अज्जउत्तेण। (च)

(घ) ईद्दशी अहं मन्दभागिनी, यस्या न केवलं निरन्तरमार्य्यपुत्रविरहः पुत्रविरहोऽपि।

(च) किंवा मया प्रसूतया, येन ताद्दशमपि मम पुत्रकयोः ईषद्विरलकोमल-धवलदशनोज्ज्वलकपोलं अनुबद्धमुग्धकाकलीविहसितं निबद्धकाकशिखण्डकममलमुख-पुण्डरीकयुगलं न परिचुम्बितमार्य्यपुत्रेण।

(ग) तमेति। अयं करिशावकः याद्दशो यौवनोचितशरीरपुष्टिवलशाली जातः तावपि कुशलवौ ताद्दशौ शरीरपुष्टिवलशालिनौ जातावित्यर्थः। कालेन वृद्धिवलयोः समानत्वादिति भावः।

(घ) सीतेति। विरहो वियोगः। पतिपुत्रयोर्बहुकालविरहादेव अहं मन्द-भागिनीति भावः।

(ङ) तमेति। इयं त्वया अनुभूयमाना ईद्दशी पतिपुत्रयोर्विरहकारिणी भवितव्यता भाग्यं। दुरदृष्टेनैव तवायं पतिपुत्राभ्यां विरहः कृतः न तु केनचिन्मनुष्येणेति न शोचनीय इति भावः।

"भवितव्यता। भाग्य"मिति शब्दकल्पद्रुमः।

(च) सीतेति। प्रसूतया प्रसवकारिण्या कर्त्तरि क्तः। मम पुत्रयोः प्रसवो निष्फल

तम। अस्तु देवताप्रसादात्। (क)

सीता। भअवदि! तमसे! एदिणा अपच्चसंसुमरणेण उस्ससिदपण्हुदत्थणी ताणं अ पिदुणो सण्णिधाणेण खणमेत्तं संसारिणी ह्मि संवुत्ता। (ज)

(ज) भगवति! तमसे! एतेन अपत्यसंस्मरणेन उच्छ्वसितप्रस्नुतस्तनी, तयोश्च पितुः सन्निधानेन क्षणमात्रं संसारिणी अस्मि संवृत्ता।

इत्यर्थः। येन हेतुना, ईषद्विरलाः नातिसंश्लिष्टाः कोमलाः मृदुलाः नवीनत्वादनतिकठिना इत्यर्थः धवलाः श्वेतवर्णाः ये दशना दन्ता सैः तत्प्रभाभिरित्यर्थः उज्ज्वलौ चिक्कणौ कपोलौ गण्डौ यस्य तत्तथोक्तं, तथा अनुबद्धे अनुसृते कृते इत्यर्थः काकली अस्पष्टमधुरः शब्दः विहसितं मधुरहास्यञ्च ते येन तत् तथोक्तं, तथा निबद्धौ धृतौ काकशिखण्डकौ काकपक्षौ (जुल्पी इति प्रसिद्धौ) येन तत् तथोक्तं, अमलमुखपुण्डरीकयोः निष्कलङ्कमुखपद्मयोर्युगलं द्वयं आर्य्यपुत्रेण पत्या रामेण न परिचुम्बितं। पतुः स्नेहेन लालनादिना च सन्तानप्रसवः सफल इवानुभूयते, मम पुत्रयोस्तु तदभावात् प्रसवो निष्फल इव प्रतिभातीति भावः।"

"रदना दशना दन्ताः।" "काकलीतु कले सूक्ष्मे ध्वनौतु मधुरास्फुटे" इति चामरः। "शिखण्डकः। (पुं) काकपक्षः। जुल्पी इति भाषा।" इति शब्दकल्पद्रुमः।

(क) तमेति। देवतानां प्रसादादनुग्रहात्, अस्तु रामेण तव पुत्रयोर्मुखपङ्कजद्वयं चुम्बितं भवतु इत्याशीर्वादः।

(ज) सीतेति। एतेन इदानीन्तनेन, अपत्ययोः पुत्रयोः संस्मरणेन चिन्तया उच्छ्वसितौ दुग्धागमेन स्फीतौ प्रस्नुतौ दुग्धं स्रवन्तौ स्तनौ यस्याः सा तथोक्ता, तयोरपत्ययोः पितुरार्य्यपुत्रस्य रामस्य। क्षणमात्रं एतत्समयमात्रं संसारिणी गृहस्था। पतिपत्नीपुत्राणां यथासम्भवं एकत्रावस्थानं हि गार्हस्थ्यं तदत्र मे प्रायेण जातमिति भावः। सीताया गभीरविषादाक्षेपोक्तिरियं।

राम। किमत्रोच्यते, प्रसवः खलु प्रकर्षपर्य्यन्तः स्नेहस्य; परञ्चैतदन्योन्यसंश्लेषणं पित्रोः। (भ)

अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात्।

"न पतति वंशो येन जातेन तदपत्य"मिति कलापटीकायां दुर्गः।

(भ) तमेति। सीतया 'अपत्यसंस्मरणेने'त्यनेन पुत्रस्नेहस्य द्योतनात् तत् समर्थयितुमाह किमिति। अत्र अपत्यस्नेहविषये किमुच्यते मयेति शेषः, किं वक्तव्यमस्तीत्यर्थः। प्रसवः अपत्यं खलु निश्चितं स्नेहस्य वात्सल्यस्य, यः प्रकर्षं उत्कर्षं आधिक्यमिति यावत् तस्य पर्य्यन्तः शेषसीमा; पुत्रस्नेहादधिकः स्नेहो जगति नास्तीत्यर्थः। एतन्मतस्य सर्ववादिसिद्धत्वात् एतत् समर्थनाय किमपि वक्तव्यं नास्तीति भावः। परञ्च अन्यच्च ब्रवीमीत्यर्थः; किन्तदित्याह; एतत् एव प्रसवः पित्रोः मातापित्रोः अन्योन्यं संश्लिष्यते परस्परं स्नेहेन योज्यते इत्यन्योन्यसंश्लेषणं अपत्यं स्नेहबन्धनेन पित्रोर्गाढ़योजकमित्यर्थः।

उक्तार्थमेव विशेषेणाह अन्तरिति। दम्पत्योः पतिपत्न्योः अन्तःकरणतत्त्वस्य मनःपदार्थस्य स्नेहसंश्रयात् परस्परं प्रति परस्परप्रणयसम्बन्धात् अपत्यमिति सन्तानरूपः ऐकः अद्वितीयः सर्वोत्तम आनन्दग्रन्थिः सुखमयग्रन्थिः बध्यते विधात्रेति शेषः। दम्पत्योरनपत्यदशायां उभयोर्मन उभयत्रैव तिष्ठति,अपत्ये जाते तु तस्य रक्षणावेक्षणादिसकलतत्त्वावधानाय समानमेव तस्मिन्नपत्ये स्थितं सत् मीलितं भवति,तदपत्यञ्च सर्वदैवानन्दजनकमिति यथा पृथक्स्थानस्थं किमपि वस्तुद्वयं एकत्र संयोज्य केनचित् सूत्रेण बध्यते तथा मातापित्रोर्मनः सन्तानेन संयोज्य बध्यत इति वा सरलार्थः।

अत्र अपत्ये आनन्दग्रन्थित्वारोपस्य प्रकृतस्नेहोत्कर्षप्रतिपादनोपयोगितया तुल्याधिकरणः परिणामालङ्कारः।

दम्पत्योर्दूरवर्त्तित्वादिना परस्परस्नेहसम्बन्धाभावे जातमप्यपत्यं तयोर्मनःसंयोजकं न भवतीति प्रदर्शनाय 'स्नेहसंश्रया'दितुक्तं।

आनन्दग्रन्थिरेकोऽयमपत्यमिति वध्यते ॥१७॥

वास । इतोऽपि देवः पश्यतु । (ञ)

अतरुणमदताण्डवोत्सवान्ते

स्वयमचिरोद्गत मुग्धलोलवर्हः (१) ।

---

परश्चेत्यादि गद्यस्थमतत्पदं पद्यस्थमेकपदं अयंपदञ्च "य आधार स्तदधिकरण"-मितिवत् प्रकृतसमानलिङ्गं ।

जाया च पतिश्चेति द्वन्द्वे पृषोदरादित्वात् जायाशब्दस्य दमादेशः । अपत्यमितीत्यत्र इतिशब्दः "दशरथ इत्युदाहृत" इत्यादिवत् स्वरूपाविर्भावकः ।

"अन्तःकरणं ।...मन" इति शब्दकल्पद्रुमः । किन्तु अस्य कार्य्यभेदात् त्रैविध्यमाह सांख्यकारिका—

"अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम् ।
साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणं ॥"

"अन्तःकरणं त्रिविधं बुद्धिरहङ्कारोमन इति शरीराभ्यन्तरवर्त्तित्वादन्तःकरण"मिति सांख्यतत्त्वकौमुदी । वेदान्तिनस्तु चातुर्विध्यमाहुः, यथा—

"मनोबुद्धिरहङ्कारश्चित्तं करणमान्तरं ।
संशयोनिश्चयो गर्वः स्मरणं विषया अमी" । इति वेदान्तकारिका ।

"तत्त्वं । वस्तु" इति शब्दकल्पद्रुमः ।

तमसाया अपि प्रभावातिशयादभिप्रेतजनं विना अन्यो वाक्यं न शृणोतीति बोध्यं ॥ १७ ॥

(ञ) वासेति । देवोरामः । इतोऽपि अस्यामपि दिशि ।

अतरुणेति । स्वयमात्मनैव नतु कस्यचित् चेष्टयेत्यर्थः अचिरोद्गतं यौवनारम्भात् नवोत्पन्नं मुग्धं सुन्दरं लोलं चञ्चलञ्च वर्हं पुच्छं यस्य स तथोक्तः, तथा उत्पन्ना शिखा चूड़ा यस्य स उच्छिखः, अत एव मणिमुकुटं यस्य सः, मणिमयमुकुटधारीव

(१) अनुदिवसमवर्द्धयत् प्रिया ते यमचिरनिर्गतमुग्धलोलवर्हं । इति पाठान्तरं ।

मणिमुकुट इवोच्छिखः कदम्बे
नदति स एष वधूसखः शिखण्डी ॥१८॥

सीता। सकौतुकास्त्रम्। एसो सो, एसो सो। (ट)

रामः। वत्स! मोदस्व, वयमद्य वर्त्तामहे। (ठ)

सीता। एव्वं भोदु। (ड)

(ट) एष सः एष सः।

(ड) एवं भवतु।

अथवा उच्छिखः उद्गतप्रभापटलः मणिमुकुटः मणिमय किरीट इव प्रतीयमान शिखण्डी मयूरः इत्यर्थः वध्वा भार्य्यायाः सखा सहचरः, एष दृश्यमानः, स सीतया पोषितपूर्वः अतरुणसदैन अनल्पहर्षेण यस्ताण्डवोत्सवः नृत्योत्सवः तस्य अन्ते अवसाने नदति शब्दायते। मयूरस्वभावोयं वर्णितः।

अत्र वाच्या भावाभिमानिनी उत्प्रेचाऽलङ्कारः द्वितीयार्थे तुपमालङ्कारः। तथा तरुणशब्दस्य युवके रूढ़त्वादवतु रूढ़िप्रयोजनाभावेऽपि लक्षणया अल्पार्थप्रतिपादनात् नेयार्थत्वदोषः, स च 'सुबहुले'ति पाठेन समाधेयः।

"ताण्डवं नटनं नाट्यं"। "पिच्छवर्हे नपुंसके"। इति चामरः। "शिखन्डी मयूर" इति शब्दकल्पद्रुमः।

पुष्पिताग्रावृत्तं "अयुजि नयुगरेफतोयकारो युजि च न जौ जरगाश्च पुष्पिताग्रा" इति लक्षणात् ॥ १८ ॥

(ट) सीतेति। एष दृश्यमानः, स मया पोषितपूर्वोमयूरः। हर्षे द्विर्वचनं।

(ठ) राम इति। मोदस्व आमोदं कुरु। केनेत्याह व्यमिति। वर्त्तामहे विद्यमानाः स्मः। स्निग्धजनसन्निधानसमय एव आमोदप्रकाशस्य प्रक्रान्तोऽवसर इति भावः।

(ड) सीतेति। एवं मयूरस्यामोदप्रकाश इत्यर्थः।

रामः। भ्रमिषु कृतपुटान्तर्मण्डलावृत्ति चक्षुः
प्रचलितचतुरभ्रूताण्डवैर्मण्डयन्त्या ।
करकिसलयतालैर्मुग्धया नर्त्त्यमानं
सुतमिव मनसा त्वां वत्सलेन स्मरामि ॥१८॥

हन्त ! तिर्य्यञ्चोऽपि परिचयमनुरुध्यन्ते । (ढ)
कतिपयकुसुमोद्गमः कदम्बः
प्रियतमया परिवर्द्धितो य आसीत्

भमिष्विति। भ्रमिषु घूर्णनेषु चक्राकारेण मयूरस्य भ्रमणेषु सत्स्वित्यर्थः कृता पुटयोः नेत्रावरणचर्म्मणो रन्तर्मध्ये मण्डलावृत्तिः वर्त्तुलाकारेण भ्रमणं येन तत् तथोक्तं चक्षुः स्वकीयं (सीतायाः) नेत्रं प्रचलिते चञ्चले चतुरे इङ्गितादिकरणनिपुणे ये भ्रुवौ तयो स्ताण्डवैः नृत्यैः कम्पनैरिति यावत् मण्डयन्त्या भूषयन्त्या परिभ्रमणसमये मयूरो यस्यां यस्यां दिशि याति तस्यां तस्यां दिशि नयनं पातयन्त्येत्यर्थः मुग्धया सुन्दर्य्या सीतया करौ पाणी किसलये पल्लवे इव तयोस्तालैः नृत्यगीतयोरंशविशेषव्यवच्छेदसूचकैः उभयपाणितल-सवेगसंघर्षजनितशब्दैरित्यर्थः सुतं पुत्रमिव नर्त्त्यमानं कारितनृत्यं त्वां वत्सलेन स्नेहवता मनसा अहं स्मरामि। सीतायाः कृतकपुत्रत्वं ममापि पुत्र इति वात्सल्येन तव तन्नृत्यस्मरणमिदानीं मम जायत इति भावः।

अत्र लुप्तोपमोपमयोरङ्गाङ्गिभावेन सङ्करः। राघवानन्दमहापात्रमते स्मरणाल ङ्कारोऽपि।

मालिनीवृत्तं ॥ १८ ॥

(ढ) हन्तेति। हन्त हर्षे। तिर्य्यञ्चोपि मनुष्येतरप्राणिनोऽपि परिचयं विशेषेण ज्ञानं अनुरुध्यन्ते अनुसृत्य वर्त्तन्त इत्यर्थः। मयूरोऽयं पक्षिजातिरपि सन् यदस्माकं पूर्वपरिचयानुसारेण इदानीमपि व्यवहरति तन्महदेवाश्चर्य्यमिति भावः।

सीता। निरूप्य सास्रम्। सुट्[illegible]भिआणिदं अज्जउत्तेण। (ण)

राम:। स्मरति गिरिमयू[illegible]देव्याः
स्वजन इवात्र यत[illegible]दमेति॥ २०॥

वास। अत्र तावदासन[illegible]करोतु देवः। (त)
एतत्तदेव कदल[illegible]यवर्ति
कान्तासखस्य [illegible]शिलातलं ते।

(ण) सुष्ठु प्रत्यभिज्ञातमार्यपु[illegible]

---

परिचयानुसारेण व्यवहारस्य [illegible]ाह कतिपयेति। प्रियतमया सीतया कतिपयानां कियतां कुसुमानां उद्ग[illegible]ार्यस्मिन् स तथोक्तः नातिक्षुद्र इत्यर्थः यः कदम्बः तदाख्यवृक्षः परिवर्द्धितः आ[illegible]वन-मूलपरिष्कारकरणादिना वृद्धिं प्रापित आसीत्। एष दृश्यमानः देव्या मि[illegible]ातायाः कृतकपुत्रः पार्वत्यमयूरः स्मरति तं कदम्बमिति शेषः। कथं स्म[illegible] इत्याह यतो यस्माद्धेतोः अत्र कदम्बवृक्षे स्वजने बान्धवे इव प्रमोदमेति आन[illegible]। एकया सीतया एतौ मयूरकदम्बवृक्षौ परिपालितौ; सुतरामेतौ परस्प[illegible]व तदानीमास्तां, अत एवेदानीमपि एष मयूरः तत्परिचयवशेन अस्मिन् क[illegible]सन्नानन्दमनुभवतीति कथमन्यथा इदानीमपि एष मयूरः स्थानान्तरमपहाय अ[illegible]स्मिन् कदम्बवृक्षे वसतीति भावः।

अत्रोपमाऽलङ्कारः।

पुष्पिताग्रावृत्तम्॥ २०॥

(ण) सीतेति। निरूप्य [illegible] कदम्ब इति दृष्टिपातेन निश्चित्य। तत्-कालीनसुखस्मरणेन शोकोदयात् [illegible] सुष्ठु सम्यक्, प्रत्यभिज्ञातं स एवायमिति कृत्वा निश्चितमित्यर्थः। म[illegible] इति सत्यमेवेति भावः।

(त) वासेति। तावत्[illegible]वेत्यर्थः। देवो भवान् रामः।

अत्र स्थिता तृणमदाद्बहुशो यदेभ्यः
सीता, ततो हरिणकैर्न विमुच्यते स्म ॥ २१ ॥

राम:। इदं तावदशक्यमेव द्रष्टुम्। इत्यन्यतो रुदन्नुपविशति। (थ)

सीता। सहि! वासन्दि! किं तुए किदं अज्जउत्तस्स मम अ एदं दंसअन्तीए। हद्धी! हद्धी! सो एव्व अज्जउत्तो, तं ज्जेव पञ्चवटीवणं, सा ज्जेव वासन्दी, ते ज्जेव विविह-

---

(द) सखि! वासन्ति! किं त्वया कृतं आर्य्यपुत्रस्य मम च एतद्दर्शयन्त्या। हाधिक्! हा धिक्! स एवार्य्यपुत्रः, तदेव पञ्चवटीवनं, सैव वासन्ती, त एव विविधविस्रम्भ-

एतदिति। कदलीवनमध्यवर्त्ति, एतत् दृश्यमानं तदेव पूर्व्वव्यवहृतमेव कान्तासखस्य प्रियासहचारिणः सीतया सहितस्येत्यर्थः ते तव शयनीयशिलातलं शय्याभूतः पाषाणः विद्यत इति शेषः। यत् यस्मात् सीता अत्र शिलातले स्थिता सती एभ्यो हरिणकेभ्यः बहुशो बहुवारं तृणं भक्षणाय घासमदात् अर्पितवती, ततः तस्मात् कारणात् हरिणकैः न विमुच्यते स्म एतत् शिलातलं न परित्यक्तं, अद्यापि तादृशतृणलाभलोभेनात्रैव वसन्तीति भावः।

"सखा।...सहाय" इति शब्दकल्पद्रुमः।

कान्तायाः सखेति कान्तासखः "राजाहन् सखी"ति राजादित्वादत्। शेतेऽस्मिन्निति शयनीयं "कृत्यल्युटोऽन्यत्रापी"त्यधिकरणे युट्। हरिणकैरित्यनुकम्पायां कप्रत्ययः।

वसन्ततिलकावृत्तं ॥ २१ ॥

(थ) राम इति। तावद्वाक्यालङ्कारे। इदं शिलातलं द्रष्टुं अशक्यमेव मयेति शेषः; अस्य शिलातलस्य सीतया सह तत्कालकृतसकलव्यवहाराणां स्मारकत्वेन दारुणशोककारणत्वादिति भावः। अन्यतः अन्यस्मिन् स्थाने।

(द) सीतेति। किं त्वया कृतं का अवस्था कृता, एतत् शिलातलं दर्शयन्त्या त्वया आवयोर्म्महाशोकार्त्तत्वमेव कृतमित्यर्थः अत्र कृतव्यापारस्मरणादिति भावः।

विस्सम्भसाक्खिणो गोदावरीकाणणुद्देसा ते ज्जेव जादणिव्विसेसा मिअपक्खिपादवा, सा ज्जेव चाहं, मम उण मन्दभाइणीए दीसन्तं वि सव्वं ज्जेव एदं णत्थि, ता ईदिसो जीअलोअस्स परिवत्तो। (द)

वास। सखि! सीते! कथं न पश्यसि रामस्यावस्थाम्। (ध)

कुवलयदलस्निग्धै रङ्गैर्ददौ नयनोत्सवं
सततमपि ते स्वेच्छादृश्यो नवं नवमेव यः।

---

साक्षिणो गोदावरीकाननोद्देशाः, तएव जातनिर्विशेषाः मृगपक्षिपादपाः, सैव चाहं मम पुनर्मन्दभागिन्या दृश्यमानमपि सर्वमेवैतत् नास्ति, तदीदृशो जीवलोकस्य परिवर्त्तः।

---

विविधविस्रम्भसाक्षिणः नानाप्रकारविस्रब्धशयनविहारादिव्यापाराणां द्रष्टारः गोदावरीकाननोद्देशाः गोदावरीनदीतीरस्थवनप्रदेशाः, जातनिर्विशेषाः पुत्रतुल्याः मृगपक्षिपादपाः पशुपक्षिवृक्षाः। दृश्यमानमपि चक्षुषः प्रत्यक्षीभूतमपि, एतत् सर्वं पञ्चवटीवनादिकं नास्ति न विद्यत इव इति प्रतीयत इत्यर्थः। एतत् सर्वं पञ्चवटीवनादिकं पूर्व्ववत् अधुना सुखजनकत्वाभावात् मम पक्षे सदपि असत्कल्पमेवेति भावः। इति शोचन्ती सीता स्वयमेवात्मानं सान्त्वयति तदिति। तत्तस्मात् दत्तप्रमोदानामपि आर्य्यपुत्रदर्शनादीनामिदानीं सुखजनकत्वाभावादित्यर्थः। ईदृशोऽनत्सदृशः जीवलोकस्य प्राणिजगतः परिवर्त्तः कालक्रमेण सुखिनो दुःखं दुःखिनश्च सुखमित्येवंरूपेण विपर्य्यास इत्यर्थः। इति निश्चीयते मयेति शेषः। अतो नानुतापः कर्त्तव्य इति भावः।

अत्र सुखसाधनीभूतानां पञ्चवटीवनादीनामिदानीं सुखानुत्पादनात् एतन्नास्तीत्यन्तेऽग्रांशे विशेषोक्तिरलङ्कारः, तथा नास्तीत्यत्र प्रतीयमानोत्प्रेक्षा, तथा तदीदृश इत्यत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्च।

(ध) वासेति। सीतोद्देशेन वासन्त्या उक्तिरियं नतु तां प्रत्यक्षीकृत्येति बोध्यं भागीरथीवरप्रभावात् सीताया अदृश्यत्वात् वाक्याश्रवणाच्चेत्युक्तमेव। यदि रामावस्थां दृष्टवती तदा अवश्यमेवागत्य परिसान्त्वयेरिति सखीत्याद्युक्तावभिप्रायः।

विकलकरणः पाण्डुच्छायः(१) शुचा परिदुर्बलः
कथमपि स इत्युन्नेतव्यस्तथापि दृशां प्रियः ॥ २२ ॥

सीता। पेक्खामि सहि! पेक्खामि। (न)

तम। पुत्रि! पश्यन्ती प्रियं भूयाः। (प)

(न) प्रेक्षे सखि! प्रेक्षे।

रामावस्थां विवृणोति कुवलयेति। सततमपि सर्वदापि ते तव स्वेच्छया स्वकीय-दर्शनाकाङ्क्षावशेन दृश्यो दर्शनयोग्यः, नतु कदाचित् केनचित् कार्य्यव्यपदेशेन दृश्य इत्यर्थः यो रामः कुवलयदलस्निग्धैः उत्पलपत्रवत्चिक्कणैः अङ्गैः हस्ताद्यवयवैः नवं नवमेव अननुभूतपूर्वमेव। नतु द्रव्यान्तरवत् सर्वदैकरूपं नयनोत्सवं नेत्रयोरानन्दं ददौ जनयामासेत्यर्थः। स राम इदानीं शुचा तव वियोगशोकेन विकलकरणः दुर्बलेन्द्रियः, पाण्डुच्छायः श्वेतप्रायकान्तिः, तथा परिदुर्बलः नितान्तबलहीनदेहः कथमपि महाकष्टेनेत्यर्थः सोऽयं राम इत्युन्नेतव्यः अनुमातव्यः अनुमानविषयः जात इति शेषः; तथापि शोककार्श्यादिविशिष्टोऽपि दृशां चक्षुषां प्रियः प्रीतिकरः। राम एतादृङ्मधुरमूर्त्ति र्यत् विवर्णकृशदेहोऽपि द्रष्टुर्नयनमाप्याययति इति भावः।

अत्र नवनवप्रकारदर्शनरूपकारणाभावेऽपि नवनवोत्सवरूपकार्य्योत्पत्तेर्विभावनाऽलङ्कारः, लुप्तोपमाचेत्यनयोरङ्गाङ्गिभावेन सङ्करः।

"रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा" इति लक्षणात् "रसाः षट्, युगानि चत्वारि, हयाः सप्त" इति यतिः। तत्र "वृत्तरत्नाकरे" "लक्ष्याः पुष्पात्वतुलनहिमे"ति छन्दोमञ्जरीसमुदाहृतवदत्रापि कथमपि स इत्युन्नेतव्य इत्यत्र न यतिभङ्गदोषः।

"करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपी"त्यमरः।

हरिणी वृत्तम् ॥ २२ ॥

(न) सीतेति। प्रेक्षे प्रेक्ष इत्यवधारणे द्विर्वचनं प्रेक्ष एवेत्यर्थः। दृष्ट्वापि किं कर्त्तव्यं मयेति भावः।

(प) तमेति। पुत्रि! तनये! कन्यास्वरूपे! इति यावत्। प्रियं

(१) पाण्डुः सोयं इति पाठभेदः।

सीता। हा देव्व! एसो मए विणा अहं वि एदेण विणा त्ति सिविणेवि केण सम्भाविदं आसी। ता मुहुत्तअं वि जम्मान्तरादो विअ अणुलद्धदंसणा वाहसलिलन्तरेसु पेक्खामि दाव वच्छलं अज्जउत्तं। इति पश्यति। (फ)

तमः। सस्नेहास्रं परिष्वज्य।

विलुलितमतिपूरैर्वाष्पमानन्दशोक-
प्रभवमवसृजन्ती तृष्णयोत्तानदीर्घा।

---

(फ) हा देव! एष मया विना अहमपि एतेन विनेति स्वप्नेऽपि केन सम्भावितमासीत्। तत् मुहूर्त्तकमपि जन्मान्तरादिव अनुलब्धदर्शना वाष्पसलिलान्तरेषु प्रेक्षे तावत् वत्सलमार्य्यपुत्रम्।

पतिं राम मिति यावत्। पश्यन्तौ भूयाः पुनरपि समागमेन चिरमेव पतिं सम्प्रेत्याशीर्वादः।

(फ) सीतेति। एष आर्य्यपुत्रो मया बिना तिष्ठेत्, अहमपि एतेन आर्य्यपुत्रेण बिना तिष्ठामीत्यर्थः इति केन जनेन स्वप्नेऽपि सम्भावितं चिन्तितमासीत् अपितु केनापि नेत्यर्थः आवयोर्विरहः सर्व्वथैवासम्भव आसीदिति भावः। तत्तस्मात् बिरहेण चिरदर्शनाभावा-दित्यर्थः, मुहूर्त्तकमपि अत्यल्पकालमपि वहुसमयं यावत् दर्शनासम्भवादित्यपेरर्थः, जन्मान्तरादिव अन्यस्मात् जन्मन इव अनुलब्धं प्राप्तं दर्शनं रामदर्शनं यया सा अहं वाष्पसलिलान्तरेषु अश्रुजलस्य पतनोद्गमयोरवकाशेषु। वत्सलं मां प्रतिस्नेहशालिनं। इदानीमार्य्यपुत्रदर्शनसावस्थैव महासुखकरत्व"दिति भावः।

विलुलितेति। तत्कालीनमिलनजनित आनन्दः दीर्घकालविरहजनितश्च शोकः तौ प्रभवौ हेतू यस्य तं तथोक्तं अतिपूरैः अतिस्थूलधाराभिः विलुलितं विगलितं वाष्पं अश्रुजलं अवसृजन्ती परित्यजन्ती, तृष्णया अत्यन्तदर्शनेच्छया उत्ताना स्फीता दीर्घाच सा, तथा स्नेहनिष्यन्दिनी प्रेमवर्षिणी प्रणयातिशयव्यञ्जिकेति यावत् धवला कज्जललेपा-

स्नपयति हृदयेशं स्नेहनिष्यन्दिनी ते
धवलबहलमुग्धा दुग्धकुल्येव दृष्टिः ॥ २३ ॥

वास। ददतु तरवः पुष्पैरर्घ्यं फलैश्च मधुश्चुतः
स्फुटितकमलामोदप्रायाः प्रवान्तु वनानिलाः।

भावेन नितान्तनिर्म्मलत्वेन च श्वेतकान्तिः अतएव वहलमुग्धा स्थिरमनोहरा अत्यन्त-सुन्दरीति यावत् अतएव दुग्धकुल्या कृत्रिमा दुग्धनदीव प्रकाशमाना ते तव दृष्टिः चक्षुः हृदयेशं प्राणनाथं रामं स्नपयति अभिषिञ्चति, निर्निमेषा अविरतमेव सर्वाङ्गं पश्यतीत्यर्थः।

अत्र कार्य्येण दृष्टौ, पुरुषस्य स्नानं कारयन्त्याः कस्याश्चित् स्त्रियाः व्यवहारसमारोपात् समासोक्तिरलङ्कारः, तथा दुग्धकुल्येवेत्यत्र उपमा, साहश्यन्तु उभयोः श्वेतांशे, पदार्थहेतुकं काव्यलिङ्गञ्च एतेषामङ्गाङ्गिभावेन सङ्करः। तथा स्नप स्नेहेति मुग्धा दुग्धेति च व्यञ्जनसंघस्य सकृत् साम्यात् छेकानुप्रासश्च तेन सह संसृष्टिः।

"वहलः।···दृढ़े वि" शब्दकल्पद्रुमः। "कुल्याल्पा कृत्रिमा सरिदि"त्यमरः।

प्रभवत्यस्मादिति प्रभवः अपादाने अच्।

मालिनी वृत्तम् ॥ २३ ॥

ददत्विति। मधुश्चुतः मधु श्च्योतन्ति चरन्तीति मधुश्चुतः मधुस्राविणः तरवो वृक्षाः पुष्पैः फलैश्च अर्घ्यं ददतु रामायेति शेषः। स्फुटितानां विकसितानां कमलानां पद्मानां आमोदप्राय सुगन्धवाहुल्यं येषु ते तथोक्ताः वनानिलाः वनवायवः प्रवान्तु प्रवहन्तु रामशरीरसेवनायेत्यर्थः। रतये सुरताय उत्कण्ठा औत्सुक्यं येषां ते, तदानीं पक्षिणामतीवस्वरमाधुर्य्यं स्यादिति वोध्यं शकुन्तयः पक्षिणः अविरलं अनवरतं कलं मधुरास्फुटं यथास्यात्तथा क्वणन्तु शब्दायन्तां श्रुतिसुखजननायेत्यर्थः। कथमयमादरः इत्याह यतोऽयं देवो रामः स्वयं आत्मना नतु प्रतिनिधिनेत्यर्थः पुनर्द्वितीयवारं इदं वनमागतः। एतत् सर्वं रामस्य सम्मानाभ्यर्थनार्थमिति भावः।

कलमविरलं रतुग्रत्कण्ठाः क्वणन्तु शकुन्तयः
पुनरिदमयं देवो रामः स्वयं वनमागतः ॥ २४ ॥

रामः। एहि सखि! वासन्ति! नन्वितः स्थीयताम्। (व)

वास। उपविश्य सास्रम्। महाराज! अपि कुशलं कुमार-लक्ष्मणस्य?। (भ)

रामः। अश्रुतिमभिनीय। (म)

अत्र अर्घ्यदानादीन् प्रति चतुर्थचरणगतवाक्यार्थरामागमनस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। यथा कश्चित् राजा स्वकीयराजधान्यामन्यस्मिन् राजनि समागते तत् सम्मानाभ्यर्थनार्थं अर्घादिपूजाद्रव्यचामरव्यजनवातवैतालिकस्तुतिपाठानादिशति, तद्वदिय-मपि वनाधिदेवता वासन्ती स्वाधिकृतवने समुपस्थितस्य रामस्य सम्मानाभ्यर्थनार्थं अर्घ्य-दानाय तरून्, व्यजनाय वनानिलान्, श्रुतिसुखाय च विहङ्गानादिदेशेति वस्तु व्यज्यत इति शब्दशक्तिमूलो वस्तुध्वनिः।

"आमोदः सोऽतिनिर्हारी"। "प्रायोभूत्यागमने"। "ध्वनौ तु मधुरास्फुटे कलः"। "शकुन्ति पक्षि शकुनि शकुन्त शकुनद्विजा" इति चामरः।

हरिणी वृत्तम् ॥ २४ ॥

(व) राम इति। अनुनये ननुशब्दः। इतः अस्मिन् स्थाने। अङ्गुलीनिर्द्देश-पुरःसरेयमुक्तिः।

(भ) वासेति। अपिशब्दः प्रश्ने। रामस्य दृश्यमानत्वात् सीतायाश्च निर्वासन-श्रवणेन मरणनिश्चयात् परिचितानां सीतारामलक्ष्मणानां मध्ये केवलमनुपस्थितस्य लक्ष्मणस्यैव कुशलप्रश्नः कृत इति बोध्यं।

(म) राम इति। अश्रुतिं उक्तवासन्तीवाक्यश्रवणाभावं प्रगाढ़चिन्ता-भिनयेनेत्यर्थः।

करेति। मैथिली सीता करकमलेन पाणिपद्मेन वितीर्णैः दत्तैः अम्बुनीवारशष्पैः जलनीवारधान्य (तीनिधान्य इति हिन्दीभाषा उड़ीधान्य इति वङ्गभाषा) वालतृणैः

करकमलवितीर्णैरम्बुनीवारशष्पै-
स्तरुशकुनिकुरङ्गान् मैथिली यानपुष्यत्।
भवति मम विकारस्तेषु दृष्टेषु कोऽपि
द्रव इव हृदयस्य प्रस्तरोद्भेदयोग्यः॥ २५॥

वास। महाराज! ननु पृच्छामि, अपि कुशलं कुमार-लक्ष्मणस्य ?। (य)

रामः। स्वगतम्। अये महाराजेति निष्प्रणयमामन्त्रणपदं, सौमित्रिमात्रे च वाष्पस्खलिताक्षरः कुशलप्रश्नः, तथा मन्ये

यान् तरुशकुनिकुरङ्गान् वृक्षपक्षिहरिणान् जलै र्वृक्षान्, नीवारैः पक्षिणः, बालतृणै र्हरिणानित्यर्थः अपुष्यत् पालितवती। तेषु तरुशकुनिकुरङ्गेषु दृष्टेषु मयेत्यर्थः सत्सु प्रस्तरस्य पाषाणस्य उद्भेदे विदारणे योग्यः समर्थः द्रवः इव वज्रादिवेग इव मम हृदयस्य मनसः कोपि अनिर्वचनीयः विकारः शोकजनितविकृतिर्भवति। सीतया परिपोषितान् तरुविहङ्गकुरङ्गान् क्रमशो दृष्ट्वा सीताशोकातुरो रामः तस्याश्चिन्तया वासन्तीवाक्यं न श्रुतवानिति बोध्यं।

अत्र यथासंख्योपमालङ्कारयोरङ्गाङ्गिभावेन सङ्करः।

"तृणधान्यानि नीवाराः।" "शष्पं बालतृण"मिति चामरः।

"द्रवः। वेग" इति शब्दकल्पद्रुमः।

मालिनी वृत्तम्॥ २५॥

(य) वासेति। पूर्वमुक्तं वाक्यं रामेण न श्रुतमित्यालोच्य 'ननु पृच्छामी'त्युच्चारणेन रामं सावधानीकृत्य पुनः पृच्छति अपीति।

(र) राम इति। अत्र अये इति विषादसूचकमात्मसम्बोधनं। महाराजेति महाराजेत्यानुपूर्वीकं निष्प्रणयं स्नेहासूचकं आमन्त्रणपदं सम्बोधनशब्दः। महाराजेति साधारणप्रयोज्यशब्दे सखिशब्दादिवत् प्रणयावत्सम्बन्धविशेषद्योतनाभावात् प्रणयाभाव

विदितसीतावृत्तान्तेयमिति। प्रकाशम् आं, कुशलं कुमारस्य इति गदिति। (र)

वास। अयि देव! किमिति दारुणोदारुणः खल्वसि?।(ल)

सीता। सहि! वासन्दि! किं तुमं सि एव्वं वादिणी, पिआरहो क्खु सव्वस्स अज्जउत्तो, विसेसदो मम पिअसहीए।(व)

वास। त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे।

---

(व) सखि! वासन्ति! किं त्वमसि एवं वादिनी, प्रियार्हः खलु सर्वस्यार्य्यपुत्रः, विशेषतो मम प्रियसख्याः।

इति भावः। सौमित्रिविमाने केवललक्ष्मणे केवललक्ष्मणविषय इत्यर्थः। वाष्पेण वाष्पावरुद्धकण्ठतयेत्यर्थः। स्खलितानि अस्पष्टोच्चारितानि अक्षराणि वर्णा यस्मिन् स तथोक्तः कुशलप्रश्नः मङ्गलजिज्ञासा।

तथा तेन हेतुना, इयं वासन्ती, विदितोऽवगतः सीताया वृत्तान्तो निर्वासनेन मरणं यया सा इति मन्ये निश्चिनोमि। प्राणवत्प्रियसख्याः सीताया निर्वासनेन अतीवविरुद्धाचरणात् सीतावटितोऽनया सह मम प्रणयो नष्टः, सुतरां निष्प्रणयमामन्त्रणपदं, सीतायामरणनिश्चयेन शोकातुरतया केवललक्ष्मणविषये वाष्पस्खलिताक्षरकुशलप्रश्नकरणमित्यवगम्यते तेन च विदितसीतावृत्तान्ता वासन्तीति निश्चयः; अन्यथा सीताया अपि कुशलं पृच्छेदिति भावः। आमिति स्वीकारार्थमव्ययं। आमिति संस्कृताव्ययशब्दस्य 'हाँ' इति वङ्गभाषाप्रसिद्धः प्रकृतानुरूपः शब्दः।

(ल) वासेति। दारुणोदारुणः अतिभयङ्करः अतिशयार्थे द्विर्वचनं।

(व) सीतेति। एवं वादिनी आर्य्यपुत्रं प्रति रूक्षभाषिणी किं कथमसि, नैतदुचितमिति भावः। कथमित्याह प्रियार्हः प्रियवाक्येनालापयोग्यः। मम प्रियसख्याः विशेषतः प्रियार्ह इत्यर्थः। तेन नैवं ब्रूहीति भावः।

इत्यादिभिः प्रियशतै रनुरुध्य मुग्धां

इति मूर्च्छति तामेव, शान्तमथवा किमिहोत्तरेण ॥२६॥

रामस्यातिदारुणत्वं प्रति हेतुमाह त्वमिति। त्वं मे मम जीवितं जीवनमसि तद्वत् प्रियतमत्वादिति भावः, तथा त्वं मे द्वितीयं हृदयं असि ममालोच्यसर्वविषयाणामेवावगमादिति भावः, तथा त्वं मे नयनयोश्चक्षुषोः कौमुदी ज्योत्स्ना असि तद्वदानन्दजनकत्वादिति भावः, तथा त्वं मे अङ्गे वक्षःप्रभृत्यवयवे अमृतं सुधा असि तद्वत् स्निग्धत्वस्य स्पर्शसुखस्य च जनकत्वादिति भावः। इत्यादिभिः एवं भूतैरन्यैश्च प्रियशतैः प्रियाणां प्रियवचनानां नतु प्रियाचरणानामिति भावः शतैर्बाहुल्यैः मुग्धां सरलबुद्धिशालिनीं सा यदि तीक्ष्णबुद्धिशालिन्यभविष्यत् तदा तां प्रति ईदृशं दुर्व्यवहारं कर्त्तुं कदापि न भवानशक्ष्यत्, येन सा प्राक् तदवगम्य प्रतिकारोपायमवलम्बेतेति भावः। अनुरुध्य सन्तोष्य तामेव नितान्तविश्वासकारिणीं त्वदेकतानचित्तामित्यर्थः न तु विरुद्धाचरणेन विप्रियामितीवशब्दार्थः निर्वासितवानिति शेषः। ईदृशनिर्द्दयहृदयस्य अस्य कार्य्ययुक्तायुक्तत्वप्रदर्शनेन दयोत्पादनाभिप्रायः "पाषाणे नास्ति कर्द्दम" इति न्यायेन निष्फल एवेति विवेच्याह अथवेति। अथवा किम्वा शान्तं विरतं मम वाक्यमत्रैव समाप्तं भवत्वित्यर्थः। कथमित्याह किमिति। इह तव सन्निधाने उत्तरेण एतत् परवर्त्तिना वाक्येन किं फलं अपितु किमपि नास्तीत्यर्थः अतीतघटनायाः पुनर्निवर्त्तनासम्भवात् सीतानिर्वासनकार्य्यस्य युक्तायुक्तत्वप्रदर्शनवाक्यमिदानीं निष्फलमेवेति भावः।

अत्र "मुखं तव कुरङ्गाक्षि! सरोजमिति नान्यथा" इत्यादिवत् समासाभावेऽपि त्वं जीवितमित्यत्र, त्वं कौमुदीनयनयोरित्यत्र, अमृतं त्वमङ्गे इत्यत्र च निरङ्गं केवलरूपकत्रयं, तथा "मुखं द्वितीयश्चन्द्र" इत्यादिवत् त्वमसि मे हृदयं द्वितीयमित्यत्र एकस्य द्वितीयहृदयासम्बन्धेऽपि तत् सम्बन्धोक्तेः असम्बन्धे सम्बन्धरूपातिशयोक्तिः, तथा तामेव इत्यतः परवर्त्तिनो वक्तुमिष्टस्य 'निर्वासितवानितिवाक्यांशस्य रामनिर्द्दयत्वप्रतिपत्तये निषेधाभासादाक्षेपालङ्कारः अर्थापत्तिश्चेत्येतेषां परस्परमङ्गाङ्गिभावेन सङ्करः। किन्तु चारुतरतरुण्याः काणत्वादिः कश्चिद्दोष इव प्रचुरालङ्कारभावादिभिरलङ्कृताया अस्याः कविताया: पुनः पुनस्त्वंपदोपादानात् अनवीकृतत्वदोषः सहृदयानामुद्वेगं जनयति ; स च

राम:। स्थाने खलु वाक्यनिवृत्तिर्मोहश्च। सखि! समाश्वसिहि समाश्वसिहि। (श)

वास। समाश्वस्य। तत्किमिदमकार्य्यमनुष्ठितं देवेन? ।(ष)

सीता। सहि! वासन्दि! विरम विरम। (स)

राम:। लोको न मृष्यतीति। (ह)

वास। तत् कस्य हेतोः। (च)

---

(स) सखि! वासन्ति! विरम विरम।

---

त्वं जीवितं भवसि वा हृदयं द्वितीयं
ज्योत्स्ना च मे नयनयोरमृतं तथाऽङ्गे।

इति पाठे न समावेशः। एतत् पाठे वाशब्दः समुच्चये।

वसन्ततिलकावृत्तं ॥ २६ ॥

(श) राम इति। वाक्यनिवृत्तिः वासन्त्या वाक्यरोधः, मोहो मूर्च्छा च स्थाने खलु युज्यत एवेत्यर्थः दारुणशोकोदयादिति भावः।

"युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः।

(ष) वासेति। तत्किमित्येकमव्ययं प्रश्नबोधकं। अकार्य्यं अप्रशस्तकार्य्यं सीतानिर्वासनरूपं निन्दितकार्य्यमित्यर्थः। अनुष्ठितं कृतं।

(स) सीतेति। विरम कठोरवाक्यकथनादिति शेषः। अवधारणे द्विर्वचनं।

(ह) राम इति। लोको राज्यवासी जनः न मृष्यति सीताया गृहावस्थानं न सहते प्रजाभिर्न सीताया गृहावस्थानमभिप्रेतं इति हेतोस्तस्या निर्वासनरूपमकार्य्यमनुष्ठितमित्यर्थः। एतेन प्रजावर्गं प्रति रामस्य महान् विरागो व्यज्यते।

(च) वासेति। तत् अमर्षणं, कस्य हेतोः, केन हेतुना सीताया गृहावस्थानं प्रजावर्गस्यानभिप्रेतमित्यर्थः। षष्ठी हेतुप्रयोगे।

राम:। स एव जानाति किमपि। (क)

तम। उचितस्तदुपालम्भ:। (ख)

बास। अयि कठोर! यश: किल ते प्रियं

किमयशो ननु घोरमत:परम्।

(क) राम इति। स एव लोक एव प्रजावर्ग एवेत्यर्थ: किमपि सीताया गृहावस्थानं प्रत्यसहिष्णुताया: अनिर्वचनीयकारणमित्यर्थ:। येन कारणेन सीताया गृहावस्थानं प्रजानामनभिप्रेतं तत्कारणं मया अन्यैर्वा बुद्धिमद्भिर्जनैर्न ज्ञायते सुतरां तत् तुच्छं कारणमिति भाव:।

(ख) तमेति। तस्य लोकस्य उपालम्भ: दुर्वाक्यं 'दुर्जना यूयं' सुतरां परमपतिव्रताया दोषमाविष्कुरुथेति कटुवाक्यमित्यर्थ: उचित: न्याय्य आसीदिति शेष:। ननु दुर्जनानामकारणाकिञ्चित्करनिन्दावादेन सीताया निर्वासनमुचितमभूदितिभाव:।

"उपालम्भ:। दुर्वाक्य"मिति शब्दकल्पद्रुम:।

अयीति। अयि कठोर! निर्द्दयहृदय! ते तव यश: किल यश एव लोककृतगुणानुवाद एवेत्यर्थ: प्रियं प्रीतिकरं, न तु पोष्यवर्गपरिपालनादिकं कथमन्यथा प्रधानपोष्यां प्रियभार्य्यां निर्वासितवानिति भाव:। नन्वित्यनुनये। अत: प्रियतमभार्य्याया अकारणनिर्वासनोत्पन्नादयशस: परं प्रधानं घोरं भयङ्करं अयश: निन्दा किं अस्ति, अपि तु किमपि नेत्यर्थ:। नन्वयशस: कारणं किमित्याह हे नाथ! हे वसुधाधिप! हरिण्या दृशौ चक्षुषी इव दृशौ यस्या: तस्याश्चञ्चललोचनाया: सीताया विपिने वने किमभवत् का दशा अभवत्, तत विषये कथं मन्यसे किं चिन्तयसि त्वं चिन्तया किमवधारितवानित्यर्थ: तत् कथय ब्रूहि। वत खेदे। असहायाया: सीताया निर्वासनेन मरणमेव निश्चित्य जगति सर्व एव त्वां निन्दिष्यन्तीति भाव:।

अत्र यशोऽयशसोर्विरूपयो: संघटनया विषमालङ्कार:, तथा हरिणीदृश इति लुप्तोपमाचेत्यनयोर्नैरपेक्ष्येण स्थिते: संसृष्टि:।

किमभवद्विपिने हरिणीदृशः
कथय नाथ! कथं बत मन्यसे॥ २७॥

सीता। तुमं ज्जेव सहि! वासन्दि! दारुणा कठोरा अ, जा एव्वं विलपन्ती पदीवेसि। (ग)

तम। प्रणय एवेदं व्याहरति शोकश्च। (घ)

रामः। सखि! किमत्र मन्तव्यम्। (ङ)

त्रस्तैकहायनकुरङ्गविलोलदृष्टे-
स्तस्याः परिस्फुरितगर्भभरालसायाः।

---

(ग) त्वमेव सखि! वासन्ति! दारुणा कठोरा च, या एवं विलपन्ती प्रदीपयसि।

अयश इति असुरशब्दादिवत् विरोधार्थे नञ्। तथाचोक्तं—
"तत्साद्दश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः।"
द्रुतविलम्बितं वृत्तं "द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात्॥ २७।

(ग) सीतेति। प्रदीपयसि आर्य्यपुत्रस्य मम च शोकाग्निमिति शेषः। दारुणा शोकोद्दीपनेन दुःखजनकत्वात्, कठोरा शोकातुरत्वदर्शनेनापि निर्द्दयत्वादिति भावः।

(घ) तमेति। प्रणयः त्वां प्रति वासन्त्याः स्नेहः, शोकः मरणनिश्चयजनिता त्वद्विषयिका अतीतस्मृतिः इदं रामं प्रति निन्दावाक्यं व्याहरति ब्रवीति, न तु स्वारसिकेच्छया वासन्ती ब्रवीतीत्येवशब्दार्थः। एकान्तप्रणयिनो जनस्य महाविपत्तिदर्शनेन शोकवह्निना जनः अवाच्यमपि वदति, अत एवात्र वासन्त्या दोषो नास्तीति भावः।

अत्र प्रणयशोकयो र्व्याहारासम्बन्धेऽपि तत् सम्बन्धोक्ते रतिशयोक्तिरलङ्कारः।

(ङ) राम इति। अत्र सीताया अवस्थाविषये किं मन्तव्यं किं चिन्तनीयमस्ति अपितु किमपि नेत्यर्थः। सर्वमेव मया निर्द्धारितमिति भावः।

ज्योत्स्नामयी च मृदुवालमृणालकल्पा (१)
क्रव्याद्भिरङ्गलतिका नियतं विलुप्ता॥ २८॥

सीता। अज्जउत्त! धरामि एसा धरामि। (च)

(च) आर्य्यपुत्र! ध्रियै एषा ध्रियै।

किं निर्द्धारितमित्याह वत्सेकेति। वत्सो भीतः एकहायनः एकवत्सरवयस्कः यः कुरङ्गो हरिण स्तस्येव विलोले विशेषचञ्चले दृष्टी चक्षुषी यस्याः सा तथोक्ता तस्याः। हरिणस्य स्वभावचञ्चलमपि चक्षुः बाल्यकाले कुतश्चित् भयोत्पत्तौ अतिचञ्चलं भवति तत्तुल्यमतिचञ्चलं सीतायाश्चक्षुरिति द्योतनार्थं वत्सपदं हायनपदञ्च प्रयुक्तं। परिस्फुरितस्य पूर्णतया सर्वदैव स्पन्दितस्य गर्भस्य भरेण भारेण अलसायाः मन्थरायाः प्रायेण चलितुमशक्तायाः इत्यर्थः तस्याः सीतायाः ज्योत्स्नामयी कौमुदीव श्वेतसुखस्पर्शा, मृदु कोमलं यत् बालमृणालं नवोत्पन्नमृणालं तत्कल्पा तत्तुल्यकोमलेत्यर्थः अङ्गं लतिकेव कृशा सा अङ्गलतिका क्रव्याद्भिः मांसभोजिभिः व्याघ्रादिहिंस्रजन्तुभिः नियतं निश्चितं विलुप्ता भक्षणेन नष्टा। इति मया निर्द्धारितमिति भावः।

अत्र चतसृणां लुप्तोपमानामङ्गाङ्गिभावेन सङ्करालङ्कारः, तथा मृदुवालमृणालेत्यत्र 'मृ' इत्यस्य सकृत् साम्यात् वृत्त्यनुप्रासश्च। तथा मृदुवालमृनालकल्पा इत्यतः परं पठितुमुचितस्य चकारस्य प्राक् पाठात् अक्रमतादोषः, स च 'मृदुलवालमृनालवच्च' इति पाठेन समाधेयः।

"क्रव्यात्। मांसाशिनि त्रि" इति शब्दकल्पद्रुमः।

वसन्ततिलकावृत्तम्॥ २८॥

(च) सीतेति। एषा अहं सीता, ध्रियै अवतिष्ठे; इयमहमवस्थिता, न मृतेति भावः। रामं शोककातरमवलोकमानाया विषमोच्छ्वसितव्याकुलभावापन्नायाः सीताया उक्तिरियं।

(१) मृदुमुग्ध इति पाठान्तरं।

राम:। हा प्रिये! जानकि! क्वासि?। (छ)

सीता। हद्धी! हद्धी! अज्जउत्तोवि प्पमुत्तकण्ठं रोदृदि (१)। (ज)

तम। वत्से! साम्प्रतिकमेवैतत्, कर्त्तव्यानि दुःखितैर्दुःख-निर्वापणानि। यतः (झ)

पूरोत्पीड़े तड़ागस्य परीवाहः प्रतिक्रिया।

---

(ज) हाधिक्! हा धिक्! आर्य्यपुत्रोऽपि प्रमुक्तकण्ठं रोदिति।

---

(छ) राम इति। क्वासि कुत्र गतासीत्यर्थः। उच्चैःस्वरं रोदनमिदं।

(ज) सीतेति। प्रमुक्तः अनिरुद्धः यथाप्रसारं निर्गत इत्यर्थः कण्ठो ध्वनिर्यस्मिन् कर्म्मणि तद्यथा तथा प्रमुक्तकण्ठं उच्चैःस्वरमित्यर्थः। तरलस्वभावे जने का कथा, नितान्तगाम्भीर्य्यधैर्य्यसम्पन्नोऽपि आर्य्यपुत्रो यत् प्रमुक्तकण्ठं रोदिति, तदस्य भीषणः शोकवेगो जात इत्यत्र न संशय इति भावः।"

"कण्ठः। ध्वनि"रिति शब्दकल्पद्रुमः।

(झ) तमेति। एतत् प्रमुक्तकण्ठं रोदनं साम्प्रतिकमेव युक्तमेव रामस्येति शेषः। कथमित्याह, दुःखितैः जनैर्दुःखानि निर्वाप्यन्ते विनाश्यन्ते एभिरिति दुःख-निर्वापणानि दुःखविनाशोपाया इत्यर्थः, कर्त्तव्यानि अवश्यं विधेयानि। रोदनञ्च शोक-दुःखलाघवोपाय इति भावः। रोदनस्य शोकदुःखलाघवकारणत्वं दृष्टान्तेन दृढ़ीकृत्य समर्थयति यत इति। यतो यस्माद्धेतोः।

"युक्ते द्वे साम्प्रतं स्थाने"। इत्यमरः।

पूरोत्पीड़ इति। तड़ागस्य जलाशयविशेषस्य पूरेण वृष्टिवर्द्धितजलसमूहेन उत्पीड़े सति अत्यन्तपीड़ायां तीरभङ्गादिना महानिष्टसम्भावनायां सत्यामित्यर्थः परीवाहः प्रणालीखननादिना जलनिःसारणं प्रतिक्रिया प्रतीकारः तीरभङ्गाद्यनिष्ट-

(१) रुस्सो इति पाठभेदः।

शोकक्षोभे च हृदयं प्रलापैरेव धार्य्यते ॥ २८ ॥
विशेषतो रामभद्रस्य बहुतरप्रकारकष्टो जीवलोकः। (ञ)
इदं विश्वं पाल्यं विधिवदभियुक्तेन मनसा
प्रियाशोको जीवं कुसुममिव घर्म्मः क्लमयति (१)।

निवारणोपाय इत्यर्थः। शोकक्षोभे सति शोकेन उद्वेजितावस्थायां सत्यां प्रलापैरेव नानाविधानर्थकोक्तिपूर्वकरोदनैरेवेत्यर्थः नत्वन्यैरुपायैरिति एवशब्दार्थः हृदयं मनः धार्य्यते रक्ष्यते स्थिरीक्रियत इत्यर्थः। यथा जलाशयस्य जलपूरे सत्यां तन्निःसारणेन तस्य रक्षा, तथा शोकक्षोभे सति रोदनेन वाष्पनिःसरणात् मनसः स्थिरता इत्यर्थः। तस्मात् सीताशोकार्त्तस्य रामस्य प्रमुक्तकण्ठं रोदनं युक्तमिति भावः।

अतएव प्रतिबिम्बनादत्र दृष्टान्तालङ्कारः। कूपादौ जलवृद्धावपि क्षुद्रत्वेन तादृशगुरुतरानिष्टसम्भावनाऽभावात् वृहज्जलाशयस्यैव पूरादेः तीरभङ्गेन गुरुतरानिष्टसम्भावना स्यात् तन्निवारणार्थमेव परीवाह इति दर्शयितुं तड़ागपदमुपात्तं तेन न अविशेषे विशेषाख्यदोष इति दिक्।

तड़ागमाह नव्यवर्द्धमानधृतं वशिष्ठवचनं—

"चतुर्द्दिक्षु पञ्चचत्वारिंशद्धस्तान्यूनतायां सहस्रहस्तपरिमितत्वेन तड़ागः" ॥ २९ ॥

(ञ) विशेषत इति। वहुतरप्रकारं विविधं कष्टं यत्र सः, जीवलोकः संसारः। ततोपि रामस्य प्रमुक्तकण्ठं रोदनमुचितमिति भावः।

रामसम्बन्धे जीवलोकस्य बहुतरप्रकारकष्टत्वं प्रतिपादयन्नाह इदमिति। अभियुक्तेन मनसा सततसावधानेन चेतसा अन्यथा नाना विघ्नाः स्युरिति भावः इदं विश्वं जगत् विधिवत् यथाविधानं शास्त्रविधानानुसारेणेति भावः, पाल्यं रक्षणीयं। इदं राज्यरक्षणमेकं कष्टमिति भावः। तथा घर्म्म आतपः कुसुममिव प्रियाशोकः सीताविरहशोकः जीवं जीवनं क्लमयति अवसादयति। इदं ततोऽपि महत् कष्टमिति भावः। ननु विलापेन तच्छोकलाघवं क्रियतामित्याह स्वयमिति।

---

(१) ग्लपयतीति पाठान्तरं।

स्वयं कृत्वा त्यागं विलपनविनोदोऽप्यसुलभ-
स्तदद्याप्युच्छ्वासो ननु लाभो हि रुदितम् ॥ ३० ॥

राम:। कष्टं भो: ! कष्टम्। (ट)

दलति हृदयं गाढ़ोद्वेगो द्विधा नतु भिद्यते
वहति विकल: कायो मोहं न मुञ्चति चेतनाम्।

---

स्वयमात्मनव त्यागं सीताया निर्वासनं कृत्वा रामेण विलपनेन विलापेन विनोद: शोकापनोदनं सीताशोकलाघवकरणमिति यावत् असुलभ: आयासलभ्य: कष्टसाध्य इत्यर्थ:। त्यागस्य स्वकृतिसाध्यत्वेन यदि त्यागं नाकरिष्यत् तर्हि शोक एव नाभविष्यत्, अथ त्याग: कृत:, इदानीं तदर्थविलाप: निजापरिणामदर्शित्वप्रकाशेन लोकसमाजे परिहासायैव स्यादिति। इदन्तु ततोपि महत्कष्टमिति भाव:। निर्जनस्थाने तु विलाप: सम्भवत्येव इति ज्ञापनाय 'न भावे'दित्यनुक्त्वा असुलभ इत्युक्तं। तत्तस्मादन्यत्र शोकप्रकाशावसराभावादित्यर्थ:। अद्य अस्मिन् समये अस्माकं समीप इत्यर्थ: उच्छ्वास: शोकप्रकाश: शोकप्रकाशरूपमित्यर्थ: रुदितं रोदनं लाभो हि लाभ एव भवति रामस्येति शेष:। अपिशब्द: सम्भावनायां इत्यहं सम्भावयामोत्यर्थ:। नन्विति सीता सम्बोधने। उपहासभयेन लोकसमाजे विलापासम्भवादत्र कृतो विलापो रामेण लाभ इव विवेच्यत इति सम्भावयामीति भाव:।

अत्र कष्टकार्य्यं प्रति बहुकारणानामुक्तत्वात् समुच्चयालङ्कार:, तथा द्वितीयचरणे उपमा, तथा चतुर्थचरणे रोदने आरोप्यमाणस्य लाभत्वस्य प्रकृतशोकापनोदनोपयोगितया परिणामश्चेत्येतेषामङ्गाऽङ्गिभावेन सङ्कर:। असुलभ इत्यत्र प्रधानस्य नञर्थस्य समासे गुणीभावात् विधेयाविमर्शदोष:,स तु 'विलपनविनोदोऽपि नहि मे'इति पाठेन समाधेय:।

"घर्म्म:। आतप" इति शब्दकल्पद्रुम:।

शिखरिणी वृत्तम् ॥ ३० ॥

(ट) राम इति। कष्टं दु:खं अतिशये द्विरुक्ति:। महत्कष्टमिदानीमनुभवामोत्यर्थ:। भोरिति वासन्तीसम्बोधने।

ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधि र्मर्म्मच्छेदी न कृन्तति जीवितम्॥ ३१॥

तदेव महत्कष्टं प्रतिपादयति दलतीति। गाढ़ो दृढ़स्थिरस्थायीति यावत् उद्वेगः सीताविच्छेददुःखं हृदयं दलति आमर्द्दयति, तु किन्तु द्विधा न भिद्यते विदार्य्यते द्विखण्डीक्रियते इति यावत् न विनाश्यत इत्यर्थः तेनोद्वेगेनेति शेषः। यदि हृदयं विदीर्णमभविष्यत् तदा नेदृशं दुःखमभविष्यदिति भावः। विकलः शोकविह्वलः कायो देहः मोहं मूर्च्छां वहति भजते क्वाचित्कमचैतन्यं भजत इत्यर्थः, किन्तु चैतनां चैतन्यं न मुञ्चति चिराय न परित्यजतीत्यर्थः। तथात्वेऽपि ईदृशदुःखानुभवो न स्यादिति भावः। तथा अन्तर्दाहः अन्तःकरणशोकसन्तापः तनूं शरीरं ज्वलयति सन्तापयति किन्तु भस्मसात् भस्मने सम्पाद्यमानां भस्मीभूतामित्यर्थः न करोति। तथा सत्यपि शोकाग्रेरुपशमो भवेदिति भावः। तथा मर्म्मच्छेदी हृदयविदारी विधिः दैवं प्रहरति ताडयति, किन्तु जीवितं जीवनं न कृन्तति न छिनत्ति न विनाशयतीत्यर्थः। एवमपि दुःखनिवारणं स्यादिति भावः। सर्वविधसुखलेशहीनस्य नानाविधदारुणदुःखशोकनिपीड़ितस्य ममेदानीं मरणमेव सर्वथा श्रेय इति सर्वत्र भावः।

अत्र हृदयामर्द्दनरूपकारणे सत्यपि द्विधाभिदरूपफलाभावात्, मूर्च्छाप्रतिरूपहेतौ विद्यमानेऽपि चैतन्यत्यागरूपकार्य्याभावात्, देहज्वलनकारणे वर्त्तमानेऽपि भस्मरूपतत्फलाभावात्, प्रहाररूपकारणे सत्यपि जीवनविनाशरूपफलाभावाच्च चत्वारो विशेषोक्त्यलङ्काराः, तेषाञ्च परस्परनैरपेक्ष्यस्थितेः संसृष्टिः। बहुतरकर्त्तृवाच्यप्रत्ययान्तक्रियामध्ये एकस्य भिद्यत इति कर्म्मवाच्यप्रत्ययान्तक्रियाया निर्द्देशात् प्रक्रमभङ्गदोषः, सच 'करोति नतु द्विधा' इति पाठेन समाधेयः। तुशब्दानुषङ्गात् न न्यूनपदत्वदोष इति भाव्यं।

"उद्वेगो विरहजन्यदुःख"मिति रसमञ्जरी। "विकलः। विह्वलः" इति शब्दकल्पद्रुमः। "स्त्रियां मूर्च्छिमनुस्तनूः"। "विधिर्विधाने दैवेच" इति चामरः।

सीता। एवमेदम्। (ठ)

रामः। हे भवन्तः! पौरजानपदाः!। (ड)

न किल भवतां स्थानं देव्या गृहेऽभिमतं तत-
स्तृणमिव वने शून्ये त्यक्ता न वाप्यनुशोचिता।

(ठ) एवमिदम्।

हरिणी वृत्तम् ॥ ३१ ॥

(ठ) सीतेति। इदं दलतीत्यादिना त्वयोक्तं एवं सत्यमित्यर्थः। अहमपि त्वयोक्तां सर्वामवस्थामनुभवन्ती सर्वमेव सत्यतया विश्वसिमीति भावः।

(ड) राम इति। उल्लुण्ठनविरागसूचनाय प्रजावर्गं प्रति भवच्छब्दप्रयोगः।

न किलेति। देव्याः सीताया गृहे स्थानमवस्थितिः भवतां न अभिमतं भवद्भि-र्नाभिप्रेतं आसीदिति शेषः अन्यथा परमपतिव्रतायाश्चरित्रदोषं कथमपि भवन्तो नाविष्कृतवन्त इति भावः। किलेत्यनुनये। ततस्तस्मात् सीताया गृहेऽवस्थानस्य युष्माकमनभिमतत्वात् सा सीता तृणमिव तुच्छशुष्कघासादिरिव शून्ये सहायरहिते वने त्यक्ता निर्वासिता, न वा अनुशोचितापि तदर्थं अनुतापोऽपि न कृतः मयेति शेषः। सीतार्थमनुतापकरणेऽपि चेदहं भवतां विरागभाजनं भवामीति शङ्कयेति भावः। इदानीन्तु चिरपरिचिताः वनवासकाले सीतया सहानुभूतास्ते भावाः पदार्थाः तरु-विहङ्गकुरङ्गादयः मां परिद्रवयन्ति सीतास्मृतिजनकतया व्याकुलीकुर्वन्ति, अतएव अशरणैः रक्षकशून्यैः सान्त्वनाकरपदार्थरहितैरस्माभिरिति शेषः इदं रुद्यते इदं रोदनं क्रियते, अद्यापि अस्मिन्नपि समये एवं अनेन प्रकारेण मम रोदनबाधाया अकारणे नेत्यर्थः प्रसीदत प्रसन्ना भवत यूयमिति शेषः। सीतापरित्यागानन्तरं मम तदनु-तापापनोदनाय तदानीं युष्माभिर्न कोपि सान्त्वप्रयोगः कृतः, तद्यथा तथा भवतु, किन्तु इदानीं तच्छोकलाघवार्थं किञ्चित् रुद्यते तत्र 'अत्र किं करोषि राजधानी-मागत्य राज्यं परिपालये'त्यादिना विघ्नं न कुरुतेति भावः।

**चिरपरिचिता स्ते ते भावाः परिद्रवयन्ति मां**
**इदमशरणै रद्याप्येवं प्रसीदत रुद्यते ॥ ३२ ॥**

तम। **अतिगम्भीरमापूरणं (१) शोकसागरस्य। (ढ)**

वास। **देव! अतिक्रान्ते धैर्य्यमवलम्ब्यताम्। (ण)**

अत्रापि सीतात्यागरूपे कारणे सत्यपि अनुतापरूपतत्कार्य्याभावात् विशेषोक्ति-रलङ्कारः तृणमिवेतुपमया सङ्कीर्णः। अशरणैः रुद्यत इति वाक्यमध्ये 'अद्याप्येवं प्रसीदते'तिवाक्यान्तरप्रवेशेऽपि चमत्कारातिशयद्योतनात् "दिङ्मातङ्गघटे"त्यादिवत् न गर्भितत्वदोषः "गर्भितत्वं गुणः क्वापी"तिसाहित्यदर्पणोक्तेः। नवा "सुधेव धवलश्चन्द्र" इति साहित्यदर्पणोदाहृतवत् "हंसीव धवलश्चन्द्रः सरांसीवामलं नभ" इति काव्यादर्शोक्तवच्च तृणमिवत्यक्तेत्यत्र उपमागतप्रक्रमभङ्गदोषः, उपमानोपमेययोर्विशेषणस्यैव लिङ्गवचनवैषम्ये तद्दोषाङ्गीकारात्, किन्तु केवलोपमानोपमेययोर्लिङ्गवचन-वैषम्ये दोषाभाव एव। तदुक्तं काव्यप्रकाशे।

"लिङ्गसंख्याविभेदेऽपि उपमानोपमेयता।
विभक्तिः पुनरेकैव उपमानोपमेययोः ॥"

उपमेयप्राधान्यात् त्यक्तेत्यत्र स्त्रीत्वं। इदमिति रुद्यत इति क्रियाया विशेषणं।

"भावः। पदार्थः"। इति शब्दकल्पद्रुमः।

हरिणी वृत्तम् ॥ ३२ ॥

(ढ) तमेति। शोक एव सागरस्तस्य, अतिगम्भीरं अत्यन्तगभीरं आपूरणं पूर्णता रामस्येति शेषः। उक्तवचनसमूहेन तथैवाभिव्यक्तेरितिभावः। अत्र निरङ्गं केवलरूपकमलङ्कारः।

(ण) वासेति। अतिक्रान्ते अतीते सीतानिर्वासनादिविषये धैर्य्यमवलम्ब्यतां

---

(१) अवगूरणमिति क्वचित् पाठः।

रामः। सखि ! किमुच्यते धैर्य्यमिति। (त)

देव्या शून्यस्य जगतो द्वादशः परिवत्सरः।

प्रनष्टमिव नामापि (१) न च रामो न जीवति ॥ ३२ ॥

अनुतापमकृत्वेतिविषः। अतीतविषयस्यानुतापेन पुनरावर्त्तनाभावात् केवलं तत्करणेन कष्टमेवेतिभावः।

(त) राम इति। धैर्य्यमिति धैर्य्यमवलम्ब्यतामिति वचनं, किं कथमुच्यते त्वयेति शेषः। मया हि धैर्य्यावलम्बनस्य पराकाष्ठा प्रदर्शितेति भावः।

तदेवोपपादयति देव्या इति। देव्या सीतया शून्यस्य रहितस्य जगतो भुवनस्य अयं द्वादशः द्वादशानां पूरणः परिवत्सरः वत्सरो वर्त्तत इति शेषः। यदा सीता निर्वासिता सती मृता, तदवधि अद्य पर्य्यन्तं द्वादश वत्सरा गता इत्यर्थः। अतएव नामापि रूपचरितादिस्मरणस्य का कथा सीतेति नामापि प्रनष्टमिव विलुप्तमिव; सुदीर्घकालातिक्रमवशात् विस्मृत्या केनापि तस्या इदानीं नामापि नोच्चार्य्यत इतिभावः। च अथ च रामो न जीवति, इति न, अपि तु जीवत्येव। सुतरां दारुणसीताशोकेन मरणावश्यम्भावेऽपि यन्मम जीवनधारणं तदेव धैर्य्यस्य परा काष्ठेति भावः।

अत्र जीवनधारणरूपकार्य्यद्वारेण प्रस्तुतं प्रतीयमानं धैर्य्यरूपकारणमभिहितमिति पर्य्यायोक्तमलङ्कारः क्रियोत्प्रेक्षया सङ्कीर्य्यते। तथाच साहित्यदर्पणे "पर्य्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते।"

अत्र परिवत्सरपदेन

"शकाब्दात् पञ्चभिः शेषात् समाद्यादीषु वत्सराः।
संपरीदानुपूर्वाश्च तथोदापूर्वकामताः॥"

इति मलमासतत्त्वधृतविष्णुधर्म्मोत्तरवचनोक्त वत्सरविशेषो न ग्राह्यः, तथात्वे वत्सराधिक्यात् रामायणेन सह विरोधः स्यात्, सुतरां वत्सरमात्रपर्य्यायो ग्राह्यः, तथाच जटाधरः "परिवत्सरो वत्सरः" ॥ ३२ ॥

(१) लुप्तं सीतेति नामापि इति पाठान्तरं।

सीता । मोहिदह्मि अज्जउत्तस्स एदेहिं वअणेहिं । (थ)

राम । एवं वत्से । (द)

नैताः प्रियतमा वाचः, स्नेहार्द्राः शोकदारुणाः ।
एतास्ता मधुनोधाराश्च्योतन्ति सविषास्त्वयि ॥३४॥

(थ) मोहितास्मि आर्य्यपुत्रस्य एतैर्वचनैः

(थ) सीतेति। आत्मानं प्रत्यनुरागबाहुल्यप्रकाशादानन्देन, आर्य्यपुत्रस्य दारुणशोकश्रवणात् दुःखेन च मोहितास्मीति भावः ।

(द) रामेति । एवं त्वया यदुक्तं तत् सत्यमिति स्वीकरोमीत्यर्थः ।

सीताया मोहितास्मीतिवाक्यं समर्थयितुमाह नैता इति । एता रामोक्ता वाचो वाक्यानि प्रियतमा न, तवातीवप्रीतिप्रदा न भवन्तीत्यर्थः । कुत इत्याह स्नेहार्द्रा इत्यादि । यतः स्नेहेन आर्द्राः प्रेमप्रकाशकत्वात् सरसाः, शोकदारुणाः शोकप्रकाशकत्वात् अतीव-रूक्षा इत्यर्थः ताः पूर्वोक्ता रामस्य एता वाचः सविषाः गरलसंयुक्ताः, मधुनः पुष्परसस्य धाराः स्रवाः त्वयि श्च्योतन्ति पतन्ति। सुतरां तवानन्देन दुःखेन च उभयथापि मोहो युज्यत एवेति भावः ।

अत्र वाक्यार्थहेतुकं काव्यलिङ्गं, तथा स्नेहार्द्रा अपि शोकदारुणा इति विरोधा-भासः, तथा वस्तुतस्तदानीं सीतायां सविषमधुधाराणां पतनाभावात् तत्पतनसम्बन्धोऽ-सम्भवन् 'यथा सविषा मधुधाराः पतित्वा जनं मोहयन्ति तथा एताः स्नेहार्द्राः शोक-दारुणा वाचः सीतां मोहयन्तीति बिम्बप्रतिबिम्बभावं बोधयतीति असम्भवद्वस्तुसम्बन्धा निदर्शनाऽलङ्कारश्च । एषामङ्गाङ्गिभावेन सङ्करः ।

एता रामोक्ता वाचः प्रेमप्रकाशकतया सीतायाः साधारणप्रियास्तु भवन्त्येव, किन्तु शोकदारुणतया बहूनां शोकप्रकाशरहितप्रियवाचां मध्ये न प्रकृष्टा इति बोधयितुं नैताः प्रिया इत्यनुक्त्वा नैताः प्रियतमा इत्युक्तमिति सुधीभिर्भाव्यं ।

रामः। अयि वासन्ति ! मया खलु (ध)

यथा तिरश्चीनमलातशल्यं
प्रत्युप्तमन्तः सविषश्च दंशः।
तथैव तीव्रो हृदि शोकशङ्कु
र्मर्म्माणि कृन्तन्नपि किं न सोढ़ः ? ॥ ३५ ॥

(ध) राम इति। खल्विति वाक्यालङ्कारे। मयेति शोकस्य सोढ़ इति क्रियायाः कर्त्तृपदं।

यथेति। यथा अन्तर्मध्ये हृदय इत्यर्थः तिरश्चीनं तिर्य्यग्भूतं प्रत्युप्तं विद्धं अलातशल्यं ज्वलितमङ्गाररूपं शल्यं यथा च विषेण सह सविषो दंशः सर्पक्षतं। सविषपदं विषधरसर्पक्षतपरिग्रहार्थं। तथैव हृदि, वक्षसि तीव्रो गाढ़ः शोकएव शङ्कुः शल्यं स शोकशङ्कुः मर्म्माणि मध्यदेशान् कृन्तन्नपि स्पर्शमात्रे का कथा छिन्द-न्नपि किं न सोढ़ः सह्यः कृतः ? अपि तु सोढ़ एवेत्यर्थः। इतोऽधिकं किमस्ति धैर्य्यमिति भावः।

अत्र श्रौती उपमा, तथा कृन्तन्निति छेदनस्य रूपकसाधकत्वात् उपमायाश्च बाधकत्वात् निरङ्गं केवलरूपकं अर्थापत्तिश्च, एषामङ्गाङ्गिभावेन सङ्करः।

"अङ्गारोऽलातमुल्मुकं।" "वा पुंसि शल्यं शङ्कुर्ना" इति चामरः।

"अन्तः। (व्य) मध्यमं।" "दंशः। (पुं) सर्पक्षत"मिति च शब्द-कल्पद्रुमः।

तिरश्चीनमिति "विभाषाऽञ्चेरदिक् स्त्रिया"मिति तिर्य्यक्शब्दादञ्चत्यन्तात् प्रतिपादिकात् स्वार्थे खप्रत्ययः। 'तेरछा' इति तिरश्चीनशब्दस्य बङ्गभाषा।

अत्रेन्द्रवज्रोपेन्द्रवज्रयोर्मेलनादुपजाति वृत्तं ॥ ३५ ॥

सीता। एव ह्मि मन्दभाइणी पुणोवि आआसआरिणी अज्जउत्तस्स! (न)

रामः। एवमतिनिष्कम्पस्तम्भितान्तःकरणस्यापि मे संस्तुत-वहुतरप्रियदर्शनादुद्दामोऽयमावेगः (१) तथाहि (प)

लोलोल्लोलक्षुभितकरुणोज्जृम्भणस्तम्भनार्थं
यो यो यत्नः कथमपि मया धीयते तं तमन्तः।

---

(न) एवमस्मि मन्दभागिनी पुनरप्यायासकारिणी आर्य्यपुत्रस्य।

---

(न) सीतेति। मन्दभागिनी दुर्भगा अहं पुनरपि पुनःपुनरपीत्यर्थः एवं एवम्भूता आर्य्यपुत्रस्य आयासकारिणी क्लेशदायिनी। मद्विषयकशोकादहमेव तस्य हेतुरिति धिङ्मामिति भावः।

(प) राम इति। एवमनेन प्रकारेण अतिनिष्कम्पं नितान्तनिश्चलं यथा स्यात् तथा स्तम्भितं शोकवेगनिरोधेन स्थिरीकृतं अन्तःकरणं येन तस्यापि यत्नेन-धैर्य्यमवलम्बितवतोऽपीत्यर्थः मे मम अयमावेगः शोकक्षोभः संस्तुतानां परिचितानां वहुतराणां प्रियाणां तरुविहङ्गकुरङ्गादीनां दर्शनात् उद्दामः महान् जात इति शेषः। उद्बोधकदर्शनात् उद्बोध्यस्याधिक्यं स्वाभाविकमिति भावः।

"संस्तवः स्यात् परिचय"इत्यमरः। "उद्दामः। महानि"ति शब्दकल्पद्रुमः।

लोलोल्लोलेति। लोलात् चञ्चलादपि उल्लोलं अतिचञ्चलमित्यर्थः तद् यथा तथा क्षुभितस्य उद्वेलितस्य करुणस्य शोकस्य यत् उज्जृम्भणं प्रकाशः तस्य स्तम्भनार्थं अवरोधाय मया कथमपि अतिकष्टेनेत्यर्थः यो यो यत्नः आधीयते क्रियते, कोऽपि अनिर्वचनीयः चेतो-विकारः चित्तस्यास्थिरता अप्रतिहतरयः केनाप्यनिवारितवेगः तोयस्य जलस्य ओघः प्रवाहः सैकतं वालुकामयं सेतुं आलिमिव तं तं यत्नं भित्त्वा भित्त्वा पुनः पुनर्भङ्क्त्वा बलात्

---

(१) अद्यायमावेग इत्यपि पाठः।

भित्त्वा भित्त्वा प्रसरति बलात् कोऽपि चेतोविकार
स्तोयस्येवाप्रतिहतरयः सैकतं सेतुमोघः ॥ ३६ ॥

सीता। एदिणा अज्जउत्तस्स दुव्वारदारुणारम्भेण दुक्ख संक्खोहेण प्पप्फुरिदणिअदुक्खं विअ आकम्पिदं मे हिअअं।

वास। स्वगतं। कष्टम्, अभ्यापन्नो देवस्तदन्यतः क्षिपामि तावत्। प्रकाशम्। चिरपरिचितानामेतेषां जनस्थानभागानाम-वलोकनेनात्मानमानन्दयतु देवः (१) ॥ (व)

(फ) एतेनार्य्यपुत्रस्य दुर्वारदारुणारम्भेण दुःखसंक्षोभेण प्रस्फुरितनिजदुःखमिवा-कम्पितं मे हृदयं।

प्रसह्य वेगेनेत्यर्थः अन्तर्मनसि प्रसरति विसृतोभवति। अतएव मम व्याकुलभावो नासङ्गत इतिभावः।

अत्र श्रौती उपमाऽलङ्कारः। तथा प्रथमचरणे ओजःप्रकाशकवर्णानामत स्थितस्य करुणरसस्य प्रतिकूलत्वात् प्रतिकूलवर्णत्वदोषः, स च 'उद्वेलन्तं प्रविततमहाशोकवेगं निरोद्धु'मितिपाठेन समाधेयः।

"सेतुराली स्त्रियां पुमा"नित्यमरः।

मन्दाक्रान्तावृत्तं ॥ ३६ ॥

(फ) सीतेति। एतेन प्रत्यक्षीक्रियमाणेन। दुर्वारोऽनवरोध्यः अतएव दारुणः आरम्भः प्राथमिकसम्बन्धो यस्य तेन, दुःखसंक्षोभेण दुःखोद्वेलनेन प्रस्फुरितं प्रकाशितं निजं स्वकीयं दुःखं यस्मिन् तत् तथोक्तं मे मम हृदयं आकम्पितमिव। एकविरह-स्योभयोः शोककारणत्वादिति भावः।

अत्र भावाभिमानिनी वाच्या क्रियोत्प्रेक्षाऽलङ्कारः।

(व) वासेति। कष्टम् हा दुःखमित्यर्थः। देवो रामः अभि सर्वतोभावेन

(१) चिरपरिचितानेतान् जनस्थानभागानवलोकयतु देव इति पाठान्तरं।

राम। एवमस्तु। इत्युत्थाय परिक्रामति।†

सीता। सन्दीवणाओज्जेव दुक्खस्स पिअसहीविणोदणोवाआ त्ति मस्सेदि। (भ)

वास। देव! देव!। (म)

अस्मिन्नेव लतागृहे त्वमभवस्तन्मार्गदत्तेक्षणः
सा हंसैः कृतकौतुका चिरमभूद्गोदावरीरोधसि (१)।

(भ) सन्दीपना एव दुःखस्य प्रियसखीविनोदनोपाया इति मन्यते।

---

आपन्नः दारुणशोकेन नितान्तदुःखपीड़नात् विपद्ग्रस्तः, ततस्मात्, अन्यतः अन्यस्यां दिशि, क्षिपामि परिचालयामि, रामस्य मनश्चक्षुषी चेति शेषः। तावद्वाक्यालङ्कारे। जनस्थानभागानां जनस्थानस्यांशविशेषाणां। आत्मानं मनः।

"आपन्न आपत्प्राप्तः स्या"दित्यमरः।

"आत्मा।...मन"इति शब्दकल्पद्रुमः।

† राम इति। एवमस्तु त्वया यदुक्तं तथैव करोमीत्यर्थः। परिक्रामति इतस्ततः पादक्षेपं करोति।

(भ) सीतेति। प्रियसख्या वासन्त्या विनोदनोपाया आनन्दोत्पादनकारणानि जनस्थानस्य अंशविशेषदर्शनादीनीत्यर्थः, दुःखस्य आर्य्यपुत्रस्य मम च दारुणशोककष्टस्य सन्दीपना एव उद्बोधका एव जनका एवेत्यर्थः भविष्यन्तीति शेषः। इति मन्यते मयेत्यर्थ तत्कालीनसकलघटनास्मारकत्वादिति भावः।

अत्र विनोदनोपायेभ्यस्तद्विरुद्ध-दुःखोत्पत्तेर्विषमालङ्कारः।

(म) वासेति। देव देवेति विस्मये द्विरुक्तिः।

---

१। सैकते इति पाठभेदः।

आयान्त्या परिदुर्म्मनायितमिव त्वां वीक्ष्य बद्धस्तया
कातर्य्यादरविन्दकुड्मलनिभो मुग्धः प्रणामाञ्जलिः ॥२७॥

सीता। दारुणासि सहि! वासन्दि! दारुणासि, जा एदेहिं हिअअमम्मगूढ़सल्लसरिसेहिं पुणो पुणो मं मन्दभाइणीं अज्जउत्तं वि दूणावेसि। (य)

---

(य) दारुणासि सखि! वासन्ति! दारुणासि, या एतैर्हृदयमर्म्मगूढ़शल्यसदृशैः पुनः पुनर्म्मां मन्दभागिनीं आर्य्यपुत्रमपि दावयसि।

अस्मिन्निति। अस्मिन् अङ्गुल्या निर्द्दिष्टे सम्मुखवर्त्तिनि। स्वयोगव्यवस्थापने एव शब्दः। लतागृहे निकुञ्जे स्थित इति शेषः त्वं तस्याः सीतायाः जलाद्यानेतुं गोदावरीं गताया इत्यर्थः मार्गे आगमनपथे दत्ते ईक्षणे चक्षुषी येन स तथोक्तः अभवः आसीः, सम्भवसमयादतिरिक्तविलम्बेन तदागमनप्रतीक्षया तदागमनपथं दृष्टवानासीरित्यर्थः। सा किन्तु सीता हंसैः कृतं कौतुकं जलविहारादिना कौतूहलं यस्याः तादृशी सती गोदावर्य्या नद्या रोधसि तीरे चिरं अभूत् स्थितेति शेषः। हंसानां विविधक्रीड़ादर्शनकौतुकात् विलम्बितवतीत्यर्थः आयान्त्या गोदावरीतीरादागच्छन्त्या तया सीतया त्वां परिदुर्म्मनायितमिव विलम्बकरणात् तच्चिन्तया सर्वतोभावेन दुःस्थितचित्तमिव वीक्ष्य दृष्ट्वा कातर्य्यात् त्वत्कोपसम्भावनाजनितभयेन विह्वलत्वात् अपराधं स्वीकृत्येति भावः अरविन्दकुड्मलनिभः पद्मकलिकातुल्यः अतएव मुग्धः सुन्दरः प्रणामाय स्वावनतभावज्ञापनाय अञ्जलिः पाणिद्वयसंयोगः बद्धः विहितः। कृतापराधपरिमार्जनायेति भावः।

अत्र आर्थी उपमाऽलङ्कारः परिदुर्म्मनायितमिवेति क्रियोत्प्रेक्षया सङ्कीर्य्यते।

"दुर्म्मना विमना अन्तर्म्मना" इत्यमरः।

अदुर्म्मना दुर्म्मना इवाचरित इतिदुर्म्मनायितः आचारार्थे क्यिः मनसः सलोपश्च।

शार्द्दूलविक्रीड़ितं वृत्तं ॥ २७ ॥

सीतेति। हृदयमर्म्मणि वचोमध्ये गूढ़ं गुप्तभावेन निखातं यत् शल्यं

राम:। चण्डि ! जानकि ! इतस्ततो दृश्यस इव न चानुकम्पसे। (२)

हा हा देवि ! स्फुटति हृदयं, स्रंसते(१) देहबन्धः
शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोहः स्थगयति, कथं मन्दभाग्यः करोमि ॥३८॥

इति मूर्च्छति।

---

शङ्कुलतसङ्क्षैः एतैः तत्तत्स्थानप्रदर्शनैः तत्तद्घटनास्मृतिकारकवचनैश्चेत्यर्थः। आदिशब्दः समुच्चये आर्य्यपुत्रश्चेत्यर्थः। दावयसि सन्तापयसि। टु टु उपतापे इत्यस्य ण्यन्ते प्रयोगः। सन्तापकारिणी दारुणैवेति भावः।

(२) राम इति। चण्डि ! अत्यन्तकुपिते ! अनवरतसीताचिन्तावशात् सीतया सह पूर्वानुभूततत्तद्वस्तुदर्शनाच्च "इतस्ततो दृश्यस इवे"ति रामस्य भ्रान्तिः, नतु वास्तवं किञ्चिदपि सीताया दर्शनं जातं भागीरथीवरप्रभावात् सर्वैरेव तस्या अदृश्यत्वादिति बोध्यं। किन्त्वर्थे चकारः। किन्तु नानुकम्पसे न दयसे साक्षाद्भूता सती आलापसम्भाषणादिना मां प्रति दयां न करोषीत्यर्थः। साक्षाद्भूता सती त्वं यदालापादिकं न करोषि, तत्र मत्कृतनिर्वासनात् तव कोप एव कारणमिति भावः।

"चण्डस्त्वत्यन्तकोपन" इत्यमरः।

हाहेति। हा हा देवि ! सीते ! हृदयं वक्षः स्फुटति विदीर्य्यते, देहबन्धः शरीरस्य सन्धिबन्धनं स्रंसते स्खलति, जगत् भुवनं शून्यं पदार्थरहितं अथच अविरता अविश्रान्ता ज्वाला सन्तापो यस्मिन् तत् तथोक्तं मन्ये अनुभवामि, तथा अन्तः मध्ये ज्वलामि अन्तरं दग्धं भवतीत्यर्थः शोकाग्निनेतिभावः। विधुरः शोकसन्तापेन दुरवस्थः अन्तरात्मा

(१) ध्वंसते इति भिन्नः पाठः

सीता। हद्दी हद्दी पुणोवि प्पमूढ़ो अज्जउत्तो। (ल)

वास। देव! समाश्वसिहि समाश्वसिहि।

सीता। हा अज्जउत्त। मं मन्दभाइणीं उद्दिसिअ सअल जीअलोअ मङ्गलाधारस्स दे जम्मलाहस्स वारं वारं संसइद जीविददारुणो दसापरिणामोत्ति, हा हदम्हि। (व) इति मूर्च्छति।

---

(ल) हा धिक् हा धिक्! पुनरपि प्रमूढ़ आर्य्यपुत्रः।

(व) हा आर्य्यपुत्र! मां मन्दभागिनीमुद्दिश्य सकलजीवलोकमङ्गलाधारस्य ते जन्मलाभस्य वारं वारं संशयितजीवितदारुणो दशापरिणाम इति, हा हतास्मि।

---

जीवः सीदन् अवसन्नः सन् अन्धे अन्धङ्करणे गाढ़ इत्यर्थः तमसि अन्धकारे मज्जतीव लीयत इव, तथा मोहः अज्ञानं विष्वक् समन्तात् सकलपदार्थानित्यर्थः स्थगयति आवृणोति मोहावरणात् किमपि मे न ज्ञानविषयी भवतीत्यर्थः। अतएव मन्दभाग्योऽहं कथं किं करोमि, एकान्तासामर्थ्यात् कमपि प्रतिकारं कर्त्तुं न शक्नोमीति भावः।

अत्र दारुणदुःखरूपकार्य्यं प्रति वहूनां कारणानामुक्तत्वात् समुच्चयोऽलङ्कारः, तथा मन्दभाग्यः किं करोमीति वाक्यार्थं प्रति पूर्ववर्त्तिवाक्यार्थानां हेतुत्वात् काव्यलिङ्गं, तथा ज्वालाया दुःखविशेषत्वात् मन्ये पदप्रयोगाच्च भावाभिमानिनी वाच्या गुणोत्प्रेक्षा च एषामङ्गाङ्गिभावेन सङ्करः।

"विधुरन्तु प्रविश्लेषे।" "सर्वतो विष्वगित्यपी"ति चामरः।

स्फुटविकसन इति विकाशार्थोऽपि स्फुटधातुरत्र धातूनामनेकार्थत्वात् विदारणार्थो मन्तव्यः।

मन्दाक्रान्ता वृत्तम्॥ ३८॥

(ल) सीतेति। प्रमूढ़ः मूर्च्छामुपगतः।

(व) सीतेति सकलजीवलोकमङ्गलाधारस्य सततहितचेष्टनात् निखिलप्राणिनां शुभकरस्येत्यर्थः जन्मलाभस्य लब्धजन्मनः सतः जन्मावधीत्यर्थः वारंवारं पुनः पुनः

तम। वत्से! समाश्वसिहि समाश्वसिहि, पुनस्त्वत्पाणिस्पर्शएव सञ्जीवनोपायो(१) रामभद्रस्य। (श)

वास। कथमद्यापि नोच्छ्वसिति, हा प्रियसखि! सीते! क्वासि, सम्भावयात्मनो जीवितेश्वरम्। (ष)

सीता। ससम्भ्रममुपसृत्य हृदि ललाटे च स्पृशति। (स)

वास। दिष्ट्या प्रत्यापन्नचेतनो रामभद्रः। (ह)

संशयितं तिष्ठति याति वेति सन्देहमापन्नं जीवितं जीवनं यस्मात् स तथोक्तः, अतएव दारुणः, तयोः कर्म्मधारयः; दशापरिणामः अवस्थापरिवर्त्तनं इति हेतोः हताम्मि, बिम्बनाशेन प्रतिबिम्बनाशवत् दैवेन प्राणेश्वरनाशात् नाशितास्मीत्यर्थः।

घटयोः संयोग इत्यत्र संयुक्तौ घटाविति प्रतीतिवत् जन्मलाभस्येत्यत्र लब्धजन्मन इति प्रतीतिः "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात्।

(श) तमेति। सञ्जीवनोपायः चैतन्यसम्पादनोपायः।

(ष) वासेति। अद्यापि अस्मिन्नपि चणे कथं न उच्छ्वसिति न चैतन्यमापद्यते। सवासीक्तिरियं। आत्मनः स्वस्याः जीवितेश्वरं प्राणनाथं रामं सम्भावय चेतय।

(स) सीतेति। रामात् पूर्वं समाश्वस्येति बोध्यं। ससम्भ्रमं सत्वरं स्पृशति रामस्येतिशेषः।

(ह) वासेति। दिष्ट्या भाग्येन, प्रत्यापन्ना प्रत्युपस्थिता चेतना संज्ञा यस्य सः। विशेषचेष्टां विनापि यत् रामस्य चैतन्यमुपस्थितं तत्रास्माकं भाग्यमेव हेतुरिति भावः।

---

(१) जीवनोपाय इति पाठान्तरं।

रामः। आलिम्पन्नमृतमयैरिव प्रलेपै-
रन्तर्वा बहिरपि वा शरीरधातून्।
संस्पर्शः पुनरपि जीवयन्नकस्मा-
दानन्दादपरविधं तनोति मोहम् ॥३९॥

आनन्दनिमीलिताक्ष एव। सखि! वासन्ति! दिष्ट्या वर्द्धसे। (च)

वास। देव! कथमिव?।

रामः। सखि! किमन्यत्, पुनःप्राप्ता जानकी। (क)

आलिम्पन्निति। संस्पर्शः कश्चिदनिर्व्वचनीय इति भावः अमृतमयैः पीयूषतुल्यैः प्रलेपैः लेपनैः अन्तर्वा मध्यवर्त्तिनश्च शरीरधातून् अस्थिमज्जादीन् बहिरपिवा बहिर्वर्त्तिनश्च शरीरधातून् रक्तमांसादीन् आलिम्पन्निव सम्यगलिप्तान् कुर्वन्निव जीवयन् संज्ञां प्रापयन् आनन्दात् सुखोत्पादनात् अकस्मात् तत्क्षणात् पुनरपि अपरविधं अन्यप्रकारं मोहं अज्ञानं तनोति करोति।

अत्र अपरविधमोहकरणासम्बन्धेऽपि तत्सम्बन्धोक्ते रतिशयोक्तिः आलिम्पन्निवेति क्रियोत्प्रेक्षया सङ्कीर्य्यते।

वाशब्दः अपिवाशब्दश्च समुच्चये।

सप्तशरीरधातवः। यथा सुश्रुतः "रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः।"

प्रहर्षिणी वृत्तम् ॥ ३९ ॥

आनन्देति। आनन्देन निमीलिताक्ष एव मुद्रितनयन एव न तु वासन्त्या समालापार्थं उन्मीलितनयन इत्येवशब्दार्थः। अत्यन्तसुखानुभवसमये नयनमुद्रणं प्रायेण स्वाभाविकमिति द्रष्टव्यं। दिष्ट्या भाग्येन। कस्यचित् मङ्गलविशेषस्य प्राप्तौ 'दिष्ट्या वर्द्धसे' इत्युक्तिः प्रायेण नाटकादौ दृश्यते।

(क) राम इति। किमन्यत् अन्यत् किं ब्रवीमीत्यर्थः।

वास। अयि देव! क्व सा?।

रामः। स्पर्शसुखमभिनीय। पश्य, नन्वियं पुरत एव। (ख)

वास। अयि देव! किमिति मर्म्मच्छेददारुणैरेभिः प्रलापैः प्रियसखीदुःखदग्धामपि पुनर्मन्दभागिनीं मां दहसि। (ग)

सीता। ओसरिदुमिच्छामि, एसो उण चिरसम्भाव सोम्म-सीअलेण अज्जउत्तपफंसेण दीहदारुणं वि सन्दावं झत्ति-हरन्तेण(१) वज्जलेवोवणद्धो विअ सिद्दन्नणीसहविवज्जत्थो-वेवदि अवसो विअ मे हत्थो। (घ)

(घ) अपसर्त्तुमिच्छामि, एष पुनश्चिरसद्भावसौम्यशीतलेनार्य्यपुत्रस्पर्शेन दीर्घदारुण-मपि सन्तापं झटिति हरता वज्रलेपोपनद्ध इव खिन्ननिःसहविपर्य्यस्तो वेपते अवश इव मे हस्तः।

---

(ख) राम इति। नन्विति वासन्तीसम्बोधने। इयं प्राप्ता जानकी पुरत एव अग्रत एव, न तु दूरे इत्येवशब्दार्थः। वर्त्तत इति शेषः।

(ग) वासेति। मर्म्मच्छेदेन हृदयान्तस्तलाघातेन दारुणैः, एभिः पुनःप्राप्ता जानकी'त्यादिभिः प्रलापैः वास्तविकसीताभावादनर्थकवचनैः प्रियसख्याः सीतायाः दुःखेन विरहकष्टेन दग्धामपि सन्तप्तामपि मन्दभागिनीं मां किमिति कथं पुनर्दहसि। वस्तुतः सीता नास्त्येव तथापि सा पुरतो वर्त्तत इति श्रवणात् तद्विरहदुःखं द्विगुणीभूया-भिवर्द्धत इति भावः।

(घ) सीतेति। अपसर्त्तुं दूरं गन्तुं। चिरसद्भावेन चिरानुरागेण सौम्यः सुन्दरः शीतलश्च तेन। दीर्घः बहुकालीयः अतएव दारुणस्तं। झटिति शीघ्रं स्पर्शक्षण एवेत्यर्थः हरता नाशयता। वज्रलेपेन वज्रवत् कठिनलेपेन उपनद्धः बद्ध

---

(१) ओल्लवन्तेण इति क्वचित् पाठः।

रामः। सखि! कुतः प्रलापाः। (ङ)
गृहीतो यः पूर्वं परिणयविधौ कङ्कणधर-
श्चिरं स्वेच्छास्पर्शैरमृतशिशिरैर्यः परिचितः।
सीता। अज्जउत्त! सो ज्जेव दाणिं सि तुमं। (च)
रामः। स एवायं तस्यास्तुहिनकरकौपम्यसुभगो-
मयालब्धः पाणिर्ललितलवलीकन्दलनिभः ॥४०॥

---

(च) आर्य्यपुत्र! स एवेदानीमसि त्वं।

---

इव दृढ़संयुक्त इवेत्यर्थः कथमन्यथा उत्तोलयितुं न शक्यत इति भावः। स्विद्यन् सात्त्विकभावोद्रेकात् घर्म्माक्तः सन् निःसहं अचमं यथा स्यात्तथा विपर्य्यस्तः रामगात्रोपरिपतितः अतएव अवशइव जड़ इव मे मम हस्तः वेपते कम्पते। स्वगतवदुक्तिरियं।

(ङ) राम इति। कुतः कस्माद्धेतोः प्रलापाः 'पुनः प्राप्ता जानकी'त्यादि वाक्यानि अनर्थकानि भवेयुः अपितु कुतोऽपि नेत्यर्थः। सत्यमेव पुनः प्राप्ता जानकीति भावः।

सम्यगनुभवप्रमाणेन तत्सत्यत्वं प्रतिपादयति गृहीत इति। पूर्वं पूर्वकाले परिणयविधौ विवाहकरणकाले कङ्कणं विवाहकालधारणीयसूत्रं धरतीति कङ्कणधरः यः पाणिः रामस्य गृहीतः धृतः, मया रामेण मया सीतया चेतिश्लेषः। विवाहकाले वरेण वध्वाः पाणिग्रहणस्य शास्त्रीयत्वादिति भावः। तत्र रामेण सीतायाः पाणिरेव गृहीतः, सीतयातु रामस्य पाणौ गृहीतेऽपि रामग्रहणं जातं अवयवेऽप्यवयविनो वृत्तित्वस्वीकारादिति न श्लेषभङ्गः। तथा यः पाणिः रामस्य अमृतशिशिरैः पीयूषतुल्यशीतलैः स्वेच्छया निजेच्छामात्रेणैव नतु केनचिदपरकारणेनेत्यर्थः ये स्पर्शास्तैः चिरं परिचितः सीतायाः पाणिरयं आर्य्यपुत्रस्यायमित्येवम्प्रकारेण विशेषेणावगतः।

(च) सीतेति। उक्तश्लोकार्द्धेन निजपाणि-रामचन्द्रयोरुभयोरेवावगमात्तत्र रामरूपमर्थमादाय सीता स्वगतवद्ब्रवीति आर्य्यपुत्रेति। इदानीं इदानीमपीत्यर्थः त्वं

इति गृह्णाति। (छ)

सीता। **हद्धी हद्धी! अज्जउत्तप्फंससमोहिदाए प्पमादो क्खु मे संवुत्तो।** (ज)

---

(ज) हा धिक्! हा धिक्! आर्य्यपुत्रस्पर्शमोहितायाः प्रमादः खलु मे सम्वृत्तः।

स एवासि तिष्ठसि, त्वयि न किञ्चिद्वैषम्यं लक्ष्यत इत्यर्थः। पूर्वं यथा मां प्रति तवालौकिकदयानुरागादय आसन् इदानीमपि तथैव विद्यन्ते, मम तु दुरदृष्टवशादेव नानाविधा दुरवस्था जातेति भावः।

रामस्तु पूर्वार्द्धेन स्वाभिप्रेतं सीतापाणिरूपमेवार्थमादाय स्ववाक्यमुपसंहरति स एवायमिति। मया तुहिनानां हिमानां करकाणां वर्षोपलानाञ्च यदौपम्यं अतिशीतलत्वेन सादृश्यं तेन सुभगः सुन्दरः सुस्पृश्य इत्यर्थः, तथा ललितं कोमलं यत् लवल्याः वृक्षविशेषस्य (लोयाड़ि इति लोयाल इति च प्रसिद्धस्य) कन्दलं नवाङ्कुरः तन्निभस्तत्तुल्यः शीतल इत्यर्थः, अयं स एव तस्याः सीतायाः पाणिः करः लब्धो गृहीतः। सर्व्वथा पूर्ववदनुभूयमानत्वात् नास्त्यत्र संशय इति भावः।

अत्र पूर्वार्द्धे स्वाभाविकैकार्थकशब्दैः सीतापाणि-रामरूपानेकार्थाभिधानात् अर्थश्लेषालङ्कारः तिस्रोलुप्तोपमाश्च, एतेषामङ्गाङ्गिभावेन सङ्करः।

"कङ्कणं।...हस्तसूत्रं।" "कन्दलं। नवाङ्कुर" इतिच शब्दकल्पद्रुमः। "तुषारस्तुहिनं हिमं"। "वर्षोपलस्तु करका" इति चामरः।

पूर्वमिति "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया।

"गृह्णामि ते सौभगत्वाय हस्त"मित्यादिमन्त्रलिङ्गात् वरस्य वध्वाः पाणिग्रहणं कर्त्तव्यतयाऽभिहितं।

शिखरिणी वृत्तम् ॥ ४० ॥

(छ) इतीति। गृह्णाति रामः सीताया हस्तमिति शेषः।

(ज) सीतेति। आर्य्यपुत्रस्य स्पर्शेन मोहितायाः कर्त्तव्याकर्त्तव्यज्ञानशून्यायाः

रामः। सखि! वासन्ति! आनन्दनिमीलितेन्द्रियः साध्वसेन परवानस्मि, तत्त्वं तावदेनां धारय। (झ)

वास। कष्टम्, उन्माद एव। (ञ)

सीता। ससम्भ्रममाक्षिप्यापसर्पति। (ट)

रामः। हा धिक् प्रमादः, हा धिक् प्रमादः। (ठ)

करपल्लवः स तस्याः सहसैव जड़ाज्जड़ः परिभ्रष्टः।

सात्त्विकभावोद्रेकेण स्खल्याया इत्यर्थः, प्रमादः अनवधानता संवृत्तः जातः। असावधानतयैवाहं हस्तं नापसारितवती, कथमन्यथा आर्य्यपुत्रो धर्त्तुं शक्नुयादिति भावः।

अत्र प्रमादं प्रति मोहितत्वं हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः।

(झ) राम इति। आनन्देन निमीलितानि मुद्रितानि स्वस्वकार्य्यकरणे असमर्थानीति यावत् इन्द्रियाणि हस्तपदादीनि यस्य सः, अतएव साध्वसेन हस्तमाकृष्य सीताचेदपसरतीतिभयेन परवान् पराधीनोऽस्मि हस्तेन गाढ़ं धारयितुं चक्षुषा वा सम्यङ्निर्द्देष्टुं न स्वयं न शक्नोमीत्यर्थः। तत्तस्मात्। एनां मया शिथिलभावेन धृतां सीतां धारय।

(ञ) वासेति। उन्माद एव रामस्य मतिभ्रंश एव जातः, एतदेव कष्टं सीताशोकादपि गुरुतरं दुःखमित्यर्थः। कथमन्यथा अविद्यमानायामपि सीतायां तत् प्रत्यक्षमिवायं करोतीति भावः।

(ट) सीतेति। ससम्भ्रमं सत्वरं, आक्षिप्य रामधृतं स्वकरमाकृष्य अपसर्पति दूरमितिशेषः।

(ठ) राम इति। प्रमादोऽनवधानता ममेत्यर्थः।

कार्य्यप्रदर्शनेन कारणीभूतं प्रमादं समर्थयति करेति। सवेलैव सात्त्विकभावोदयादिति हेतुर्बोध्यः। जड़ः अलस उत्तोलयितुमशक्यप्राय इत्यर्थः प्रकम्पी कम्पमानः खिद्यन् घर्म्माक्तः तस्याः सीतायाः स गृहीतपूर्वः करपल्लवः, जड़ादलसात्

**परिकम्पिणः प्रकम्पी करान्मम स्विद्यतः स्विद्यन् ॥४१॥**

सीता। **हद्धी हद्धी ! अज्जवि अणवत्थिदत्थिमिदमूढ़घूसन्तणअणो ण पज्जवत्थावेदि अत्ताणअं। ( ड )**

( ड ) हा धिक्, हा धिक्! अद्यापि अनवस्थितस्तिमितमूढ़घूर्णन्नयनो न पर्य्यवस्थापयत्यात्मानम्।

गाढ़ं धारयितुमसमर्थादित्यर्थः परिकम्पिणः कम्पमानात् स्विद्यतः घर्म्माक्तात् मम करात् सहसैव तत्क्षणादेव मम गाढ़धारणाभिप्रायोत्पत्तिक्षण एवेत्यर्थः परिस्रस्तः स्खलितः। यदि सावधानतयाऽहं गाढ़ं धारयितुमशक्ष्यं तदा न तस्याः करः परिभ्रष्टोऽभविष्यत्, सुतरां मम प्रमाद एव जात इति भावः।

अत्र परिभ्रंशं प्रति जड़त्वं परिकम्पित्वं स्विद्यत्त्वञ्च हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः करपल्लव इति लुप्तोपमया सङ्कीर्णः। परस्परस्पर्शेन सीतारामयो रुभयोरपि, सात्त्विकभावो जात इति वस्तुना वस्तुध्वनिः। तथाच साहित्यदर्पणे—

"स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः।
वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विका मताः॥"
मात्रासम्बलितेयमार्य्याजातिः, तथाचोक्तं श्रुतबोधे—
"यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि।
अष्टादश द्वितीये चतुर्थके पञ्चदश सार्य्ये"ति॥ ४१॥

( ड ) सीतेति। अनवस्थिते सहसा हस्तपरिभ्रंशेन व्याकुलतया अस्थिरे, स्तिमिते अनुभूतस्पर्शसुखस्मरणेन निश्चले कस्यचित् वस्तुनः स्मरणकाले नयनं निश्चलं भवतीति स्वभावः, मूढ़े कस्यां दिशि सीता द्रष्टव्येति निश्चयाभावात् अप्रतिभे, घूर्णती सीताया निरूपनार्थं इतस्ततो भ्रमतीच नयने यस्य स तथोक्तः। अद्यापि अस्मिन्नपि समये आत्मानं हृदयं न पर्य्यवस्थापयति न प्रकृतिस्थं कर्त्तुं शक्नोती-

भगवति वसुन्धरे! सत्यमतिदृढ़ासि। (र)

त्वं वह्निर्मुनयो वशिष्ठगृहिणी गङ्गा च यस्या विदु-
र्माहात्म्यं यदि वा रघोः कुलगुरुर्देवः स्वयं भास्करः।
विद्यां वागिव यामसूत भवती, शुद्धिं गतायाः पुर- (१)
स्तस्यास्त्वं दुहितुस्तथा विशसनं किं दारुणेऽमृष्यथाः? ॥५॥

---

"ससम्भ्रमं समाख्यातमभ्रमोचितयोरपो"त्यजयः।

रुदित-स्मित-जल्पितपदानि भावे क्तप्रत्ययान्तानि। कमन्नकमित्यन्यार्थेकप्रत्ययः।

पुष्पिताग्रा वृत्तं। अस्यानुरूपः श्लोको यथा शाकुन्तले

"आलक्ष्यदन्तमुकुलाननिमित्तहासै रव्यक्तवर्णरमणीयवचःप्रवृत्तीन्।
अङ्काश्रयप्रणयिनस्तनयान् वहन्तो धन्यास्तदङ्गरजसा मलिनीभवन्ति" ॥ ४ ॥

(र) भगवतीति। सत्यं निश्चितं अतिदृढ़ा अतिकठिनहृदया।

अतिदृढ़त्वं प्रतिपादयति त्वमिति। त्वं महाप्रभाववती भवती, वह्निः अन्तर्यामी अग्निर्देवः, मुनयः तपस्याप्रभावेण सर्वज्ञाः वशिष्ठवाल्मीकिप्रभृतय ऋषयः, वशिष्ठगृहिणी महापतिव्रतात्वेन सर्वज्ञा अरुन्धती, स्वतोमहामाहात्म्यवती गङ्गाच, यदिवा तथा, रघोः कुलगुरुः वंशस्यादिपुरुषः, देवः महामाहात्म्यशालीत्यर्थः, स्वयं साक्षादित्यर्थः भास्करः सूर्य्यश्च यस्याः सीतायाः माहात्म्यं चरित्रोत्कर्षं पातिव्रत्यमित्यर्थः विदुः जानन्ति। तथा वाक् उपनिषद्वाणी विद्यामिव ब्रह्मज्ञानमिव, भवती त्वं, यां सीतां, असूत प्रसूतवती, पुरः अग्रतः स्वसमीपे इत्यर्थः तव सर्वव्यापित्वेन लङ्कायामपि स्थितत्वादिति भावः शुद्धिं निर्दोषत्वं गतायाः प्राप्तायाः अग्निपरीक्षया सर्वथा निर्दोषत्वेन निर्णीतायाः इत्यर्थः तस्याः दुहितुः तनयायाः सीतायाः, तथा तादृक् दारुणं शोचनीयञ्चेत्यर्थः विशसनं हिंसां चरित्रदोषापवादेन महारण्ये निर्वासनात् विनाशनमित्यर्थः, हे दारुणे! निष्ठुरे! त्वं किं केन प्रकारेण अमृष्यथाः सोढ़वती। दुश्चरितायाः परित्यागेन विनाशनं शास्त्रानुसारेण समुचितत्वात् सर्वैरेव सह्यते, किन्तु स्वयंविदितशुद्धचरितायाः अग्निपरीक्षादिभिश्च

(१) :: तद्वत्तु या दैवतमिति पाठान्तरं।

नेपथ्ये। इत इतो भगवतीमहादेव्यौ। (ल)

जनकः। दृष्ट्वा। अये! गृष्टिनोपदिश्यमानमार्गा भगवत्यरुन्धती। उत्थाय। कां पुनर्महादेवीत्याह?। निरूप्य। हा कथं महाराजदशरथस्य धर्मपत्नी (१) प्रियसखी मे कौशल्या, क एवं प्रत्येति सैवेयमिति। (व)

---

निर्दोषत्वेन प्रमितायाः विशेषतः स्वतनयायाः यत्तादृशं दारुणपरिणामं त्वं सोढुं शक्तासि, अतएवातिदृढ़ैवासीति भावः।

अत्र एकया विदुरितिक्रियया बहूनां कर्त्तृतासम्बन्धेनान्वयात् तुल्ययोगिताऽलङ्कारः श्रौती उपमाच, अनयोर्मिथोनैरपेक्ष्येण स्थितेः संसृष्टिः तथा त्वमित्येकं युष्मत्कर्त्तृपदं अन्यानि च नामकर्त्तृपदानि इत्युभयोरेकक्रियासम्बन्धे तत्र "युगपद्वचने परः पुरुषाणा"-मित्यनेन मध्यमपुरुषप्राप्तौ विदुरिति प्रथमपुरुषविभक्तिप्रयोगात् च्युतसंस्कारतादोषः, न तु 'गङ्गाच यस्या विदु'रित्यत्र 'यस्याविदस्त्वमेदी' इति पाठेन मन्तव्यः। तत् पाठे तु विद इति मध्यमपुरुषबहुवचनं निपातः, स्वर्णदी गङ्गा, चकारतुल्यार्थकयदिवा शब्देन समुच्चयात् न न्यूनपदतादोषोऽपीति सुधीभिर्विभावनीयं।

"वस्तुस्वरूपावधारणं विद्यामाहु"रिति वेदान्तभाष्ये भगवच्छङ्कराचार्य्याः।

"ब्रह्मैव वस्त्वि"ति वेदान्तसारः।

शार्दूलविक्रीड़ितं वृत्तं ॥ ५ ॥

(ल) नेपथ्य इति। इत इतः अस्मिन्नस्मिन् पथि, भगवतीमहादेव्यौ आगच्छतामिति शेषः। कञ्चुकिन उक्तिरियं।

(व) जनेति। अये इति विषादसूचकमव्ययं शब्दकल्पद्रुमे द्रष्टव्यं। गृष्टिना तदाख्येन कञ्चुकिना उपदिश्यमानः निर्द्दिश्यमानो मार्गः पन्था यस्याः सा। निरूप्य विशेषेणावलोक्य। इयं दृश्यमाना सैव पूर्वदृष्टा कौशल्यैव इत्येवं को जनः प्रत्येति

---

(१) धर्मदारा इति पाठान्तरं।

आसीदियं दशरथस्य गृहे यथा श्रीः
श्रीरेव वा किमुपमानपदेन सैषा।
कष्टं बतान्यदिव दैववशेन जाता।
दुःखात्मकं किमपि भूतमहो विपाकः ॥६॥

---

विश्वमिति, अपितु कोऽपि नेत्यर्थः। नानाविधदारुणशोकेन जरसा च अतीवविकृताकृतित्वादिति भावः।

धर्म्मस्य पत्नी धर्म्मपत्नी अश्वघासादिवत् षष्ठीसमासः।

आसीदिति। इयं दृश्यमाना कौशल्या दशरथस्य गृहे श्रीः राजलक्ष्मीर्यथा तथा आसीत्, राजलक्ष्मीवत् असाधारणकान्तिपरमसमादरादिविशिष्टा आसीदित्यर्थः। वा अथवा उपमानपदेन सादृश्यवाचकतया भेदबोधकेन यथाशब्देनेत्यर्थः किं किं प्रयोजनं अपितु किमपि नेत्यर्थः। कथमित्याह, एषा कौशल्या सा श्रीरेव राजलक्ष्मीरेव आसीदित्यर्थः। सुतरां अनया सार्द्धं राजलक्ष्म्या अभेदात् भेदे प्रसक्ताया उपमाया नास्त्यवकाश इति भावः। बत खेदे। कष्टं दुःखं। दैववशेन दुरदृष्टवशेन दुःखमात्मा स्वभावो यस्य तत् दुःखात्मकं दुःखस्वरूपमित्यर्थः किमपि अनिर्वचनादिमित्यर्थः अन्यत् लोकविलक्षणं भूतं कोपि जन्तुरिव जाता अहो विपाकः आश्चर्यः परिणाम इत्यर्थः। यस्मादियमविकलराजलक्ष्मीरूपापीदानीमतीवविकृताकृतिः परिचेतुमप्यशक्या जाता, ततएव जीवानां परिणामो विस्मयकर एवेति भावः।

अत्र प्रथमचरणे श्रौती उपमा, द्वितीयचरणे भेदे अभेदाध्यवसायमूला अतिशयोक्तिः, द्वितीयार्द्धे च भावाभिमानिनी वाच्या द्रव्योत्प्रेक्षा, इत्येतेषां परस्परनैरपेक्ष्यात्स्थितिः संसृष्टिः।

"आत्मायत्नोधृतिर्बुद्धिः स्वभावो ब्रह्मवर्ष्म"चेत्यमरः। "भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीवे त्रिषु चिते"इत्यादि मेदिनी।

तद्भिन्नत्वे सति तद्गतभूयोधर्म्मवत्त्वमुपमानत्वमिति लक्षणादुपमानोपमेययोर्भेद आवश्यकः। विधेयप्राधान्येऽपि "उद्देश्यविधेययोरुद्देश्यवचनत्वमाख्यातस्य"ेति काशिकाप्रामाण्यात् जातेत्यस्य स्त्रीत्वं। तत्र आख्यातस्य प्रधानक्रियाया इत्यर्थः।

अयमपरः पापो(१) दशाविपर्य्यासः। (ग)
य एव मे जनः पूर्वमासीन्मूर्त्तो महोत्सवः।
क्षते क्षारमिवासह्यं जातं तस्यैव दर्शनम्॥७॥

ततः प्रविशति अरुन्धती कौशल्या काञ्चुकी च।

अरु। ननु ब्रवीमि, द्रष्टव्यः स्वयमुपेत्य वैदेह इत्येष वः

वसन्ततिलका वृत्तं॥६॥

(ग) अयमिति। अयं उपस्थितः कौशल्यासाक्षात्कारकृतः, अपरः अन्यः, पापः पापजनितः दशाविपर्य्यासः अवस्थापरिवृत्तिः। जातो मर्त्तेतिशेषः। सीतया सह चिरविच्छेदे सति एका चिरशोकार्त्तरूपा दशापरिवृत्तिरासीत्, इयञ्च द्वितीया कौशल्यया सह साक्षात्कारे सति सीतागुणानुवाद-परस्परार्त्तनादादिरूपा महादुःखजनिका पापजनिता जाता पापं विना दुःखासम्भवादिति भावः।

दशाविपर्य्यासं व्यनक्ति यएवेति। यएव कौशल्यालक्षणो जनः पूर्वं सीताविवाहा-नन्तरदशरथजीवनसमये मे मम मूर्त्तो मूर्त्तिमान् महोत्सवः परमामोदकारण मासीत्, सीतायाविवाहात्परं दशरथजीवितकाले यां दृष्ट्वा महान्तमानन्दमनुभूतवानस्मीत्यर्थः, इदानीं तस्यैव जनस्य दर्शनं साक्षात्कारः क्षते देहस्य छिन्नस्थाने विदीर्णव्रणादौ वा क्षारं क्षारसंयोगः लवणादिक्षारवस्तुसंयोग इव असह्यं सोढुमशक्यं जातं संवृत्तं सकलशोकोद्दीपकत्वादिति भावः।

या पूर्वं सुखकारणमासीत् इदानीं सैव दुःखकारणमिति दशाविपर्य्यास इति च भावः।

अत्र प्रथमार्द्धे इवशब्दाद्यभावेन प्रतीयमाना भावाभिमानिनी महोत्सवरूपक्रियोत्-प्रेक्षा, द्वितीयार्द्धे च श्रौत्युपमा, इत्युभयोर्निरपेक्षास्थितेः संसृष्टिः।

(घ) अरु इति। नन्विति कौशल्यासम्बोधने; स्वयमात्मना उपेत्य समीपे

(१) अयमपरप्राय इति, अयमपरः प्राय इति च पाठान्तरं।

कुलगुरोरादेशः ; अत एवाहं प्रेषिता ; ततः कोऽयं पदे पदे महानध्यवसायः।† (ष)

कञ्चु। देवि ! संस्तम्भयात्मानम्, अनुरुध्यस्व भगवतो वशिष्ठस्यादेशमिति विज्ञापयामि। (स)

कौश। ईदिसे काले मिहिलाधिवो दट्ठव्वोत्ति समं ज्जेव सव्वाइं दुक्खाइं समुब्भवन्ति। ण सक्कणोमि उव्वत्तमाण मूलवन्धणं ‡ हिअअं अवत्थाविदुं। (ह)

---

(ह) ईदृशे काले मिथिलाधिपो द्रष्टव्य इति सममेव सर्वाणि दुःखानि समुद्भवन्ति। न शक्नोमि उद्वर्त्तमानमूलवन्धनं हृदयमवस्थापयितुम्।

---

गत्वा वैदेहः विदेहदेशाधिपतिर्जनकः। वो युष्माकं कुलगुरोर्वशिष्ठस्य। अत एव त्वया स्वयमुपेत्य द्रष्टव्यत्वादेव, अहं प्रेषिता प्रेरिता युष्मत्कुलगुरुणेति शेषः। एकाकिन्यास्तव गमनस्यासम्भवात् अनौचित्याच्च त्वत्सहचारिणीकरणाय अहं प्रेषितेति भावः। ततस्तस्मात् गुरोरादेशस्यावश्यपालनीयत्वादित्यर्थः पदे पदे प्रतिपदक्षेपं कोऽयं किंहेतुक इत्यर्थः, महानध्यवसायः अतीवावस्थानोद्यमः, एकैकपदं गत्वैव तत्र तत्रोपवेशनादिना अवस्थितिप्रयत्नः कथमित्यर्थः। त्वञ्चेत् गत्वा वैदेहं न द्रक्ष्यसि, तदा स कुलगुरुर्विरक्तोभविष्यतीति भावः।

ननु ब्रवीमीत्यनेन 'द्रष्टव्य'इत्यादिवाक्यं पूर्वमपि विम्बितकमिति प्रतीयते।

(स) कञ्चु इति। आत्मानं हृदयं संस्तम्भय स्थिरीकुरु। अनुरुध्यस्व अनुसर प्रतिपालयेत्यर्थः।

(ह) कौशेति। ईदृशे काले स्ववैधव्य-सीताचिरविच्छेदाभ्यां दारुणीकृतसमये। सममेव समानमेव युगपदेवेत्यर्थः सर्वाणि दुःखानि स्ववैधव्यसीतानिर्वासनरामादिवियोगजनितानि कष्टानि समुद्भवन्ति चित्ते आविर्भवन्ति। अतएव उद्वर्त्तमानं

† महाननध्यवसाय इति पाठान्तरं। ‡ उग्घट्टमाणेति पाठान्तरं।

अरु। अत्र कः सन्देहः। (च)

सन्तानवाहीन्यपि मानुषाणां
दुःखानि सद्बन्धुवियोगजानि।
दृष्टे जने प्रेयसि दुःसहानि
स्रोतःसहस्रैरिव संप्लवन्ते ॥ ८ ॥

उन्निद्रत् तस्मिन् दुःखेनच्छिन्नप्रायमित्यर्थः मूलबन्धनं यथास्थानस्थितिकारकप्रकृतबन्धनं यस्य तत् तथोक्तं हृदयं अवस्थापयितुं स्थिरीकर्तुं न शक्नोमि। अत एव नितान्ताकुलतया तत्र तत्र स्थातुं मे महान् अध्यवसाय इति भावः।

"समं सर्वसमानयो"रित्यमरः। सममिति उद्भवन्तिक्रियाविशेषणं।

(च) अरु इति। अत्र जनकदर्शनेन सर्वदुःखाविर्भावविषये।

तत्र सन्देहाभावं समर्थयति सन्तानेति। मानुषाणां सन्तानेन धारया वहन्तीति सन्तानवाहीनि निरवच्छिन्नानीत्यर्थः सतासुतत्कृष्टानां बन्धूनां अतीवस्नेहास्पदानां पुत्रकन्यादीनां वियोगात् विच्छेदात् जायन्त इति सद्बन्धुवियोगजानि दुःखानि, प्रेयसि जने प्रियतमे अन्यस्मिन् बन्धौ दृष्टे सति दुःसहानि असह्यानि सन्ति स्रोतःसहस्रैरिव असंख्यप्रवाहैरिव संप्लवन्ते उच्छलन्ति। अत त्वया यदुक्तं सममेवेत्यादि तत्सत्यमेवेति भावः।

अत्र भावाभिमानिनी वाच्या क्रियोत्प्रेक्षाऽलङ्कारः, तेन च चन्द्रोदये समुद्रजलानीवेत्युपमा व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः। तथा समुच्चयप्रयोजनाभावेऽपि अपिशब्दप्रयोगादधिकपदत्वदोषः, स च 'सन्तानवाहीनि मनूद्भवाना'मितिपाठेन समाधेयः।

दृष्टबन्धुविच्छेदे दुःखमेव न भवतीति सत्पदमुपात्तं।

कुमारसम्भवे एतदनुरूपोक्तिर्यथा "स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते" इति।

इन्द्रवज्रा वृत्तम् ॥ ८ ॥

कौश। कहं वच्छाए वहुए एवं गदे तस्स राएसिणो मुहं दंसइस्स। (क)

अरु। एष वः स्लाघ्यसम्बन्धो जनकानां कुलोद्वहः ।
याज्ञवल्क्यो मुनिर्यस्मै ब्रह्मपारायणं जगौ ॥ ८ ॥

कौश। एसो सो महाराअस्स हिअआणन्दो वच्छाए वहुए पिदा राएसी, हद्दी हद्दी, सम्भाविदह्मि अणुवट्ठिदमहुसवे दिअसे, हा देव्व! सव्वं एव्व तं णत्थि। (ख)

(क) कथं वत्सया वध्वा एवं गते तस्य राजर्षेर्मुखं दर्शयाम:।

(ख) एष स महाराजस्य हृदयानन्दो वत्साया वध्वाः पिता राजर्षिः, हा धिक् हा धिक्, सम्भाविताम्मि अनुपस्थितमहोत्सवे दिवसे; हा दैव! सर्वमेव तत् नास्ति।

(क) कौशेति। वध्वाः सीतायाः। एवं गते एवम्प्रकारे दारुणे अवस्था-परिवर्त्तने जाते सतीत्यर्थः। तस्य राजर्षेर्जनकस्य, सम्बन्धविवक्षया षष्ठी, तेन राजर्षिणेत्यर्थः। अकारणसीतापरित्यागकारिणो रामस्य मातृत्वसम्बन्धात् जनकेन मुखं दर्शयितुं ममापि महदप्रतिभत्वं जायत इति भावः।

एष इति। एषः सम्मुखवर्त्ती वो युष्माकं स्लाघ्य आदरणीयः सम्बन्धी वैवाहिकः, जनकानां जनकवंशीयानां कुलोद्वहः कुलधुरन्धरो वर्त्तते इति शेषः। याज्ञवल्क्यो मुनिः यस्मै जनकाय पारायणं सकलं ब्रह्म वेदं जगौ गीतवान्। याज्ञवल्क्यो यं राजानं समग्रं वेदमध्यापयामासेत्यर्थः।

पारं समाप्तिं अयने गच्छति प्राप्नोतीति पारायणं नन्द्यादित्वात्।

"वेदस्तत्त्वं तपो ब्रह्म" "साकल्यासङ्गवचने पारायण परायणे" इति चामरः ॥८॥

(ख) कौशेति। महाराजस्य दशरथस्य, हृदयं आनन्दयतीति हृदयानन्दः। वध्वाः सीतायाः। न उपस्थितः महोत्सवः प्रचुरानन्दो यस्मिन् स तथोक्तस्तस्मिन्

जनकः। उपसृत्य। भगवत्यरुन्धति! वैदेहः सीरध्वजोऽभिवादयते। (ग)

यया पूतम्मन्यो निधिरपि पवित्रस्य महसः
पतिस्ते पूर्वेषामपि खलु गुरूणां गुरुतमः।
त्रिलोकीमङ्गल्यामवनितललोलेन शिरसा
जगद्वन्द्यां देवीमुषसमिव वन्दे भगवतीम्॥ १०॥

दिवसे सम्भावितास्मि समाहुतास्मि जनकराजेन दर्शनदानादितिशेषः। दुःखसमये महोत्सवोपयुक्तजनदर्शनं प्रत्युत महादुःखकरमेवेतिभावः। हा दैव अदृष्ट! तत् महोत्सवप्रयोजकं सर्वमेव वस्त्वित्यर्थः नास्ति। महाराजः, सीता, तत्सन्तानश्चेति न सन्त्येव; शोककातरा रामादयोऽपि दूरे वर्त्तन्ते अहमप्येवं दशामापन्ना; सुतरां महोत्सवस्य किमपि नास्तीत्यर्थः।

(ग) जनक इति। वैदेहः विदेहदेशीयः, सीरो हलः ध्वजे ध्वजदण्डे यस्य सः, सीरध्वजनामेत्यर्थः, अभिवादयते प्रणमति, भवतीमिति शेषः। "सीरोऽर्कहलयोः पुंसि" इति मेदिनी।

अभिवाद्यतायाः कारणमाह ययेति। पूर्व्वेषां पूर्ववर्त्तिनां गुरूणामपि जगच्छिक्षकतया सर्वपूज्यानामपि मरीच्यादिदेवर्षीणां मध्ये गुरुतमः प्रधानतमः प्रकृष्टो गुरुरित्यर्थः, तथा पवित्रस्य स्वतः पवित्रस्येत्यर्थः महसो ब्रह्मतेजसः निधिरपि आश्रयोऽपि ते तव पतिर्भर्त्ता वशिष्ठः, यया त्वया पूतम्मन्यः आत्मानं पवित्रं मन्यते। अवनितललोलेन भूतलचञ्चलेन भूमिस्पर्शिनेति यावत् शिरसा मस्तकेन त्रिलोकीमङ्गल्यां त्रिभुवनकल्याणकारिणीं जगद्वन्द्यां सर्वपूज्यां देवीमुषसमिव उषाकालाधिष्ठात्रीं देवतामिव भगवतीं भवतीं वन्दे प्रणमामि।

अत्र पूर्णोपमाऽलङ्कारः।

"महस्तूत्सवतेजसोः"। "प्रत्यूषोऽहर्मुखं कल्यमुषःप्रत्युषसी अपि" इति चामरः।

अरु। परं ज्योतिस्ते प्रकाशताम्, अयं स त्वां पुनातु देवः परोरजा,(१) य एष तपति। (घ)

पूतमात्मानं मन्यत इति पूतम्मन्यः, "खश्चात्मने"इति मन्यतेः खश्, "अरुर्द्विषदजन्तस्य मुम्"इति मकारागमः। त्रयाणां लोकानां समाहार इति त्रिलोकी त्रिलोकेति द्विगोरिति ङीप्रत्ययः।

साध्वी भर्त्तारं पुनातीत्याह अङ्गिराः—

"ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वापि यो नरः।

तं वै पुनाति सा नारी त्याङ्गिरसभाषितम्।"

साध्व्याः पूज्यत्वमाह मत्स्यपुराणं—

"तस्मात् साध्व्यः स्त्रियः पूज्याः सततं देववज्जनैः।

तासां राज्ञा प्रसादेन धार्य्यते च जगत्त्रयम्॥

शिखरिणी वृत्तम्॥ १०॥

(घ) अरुइति। परं ज्योतिः सर्वप्रधानं तेजः परंब्रह्मेत्यर्थः ते तव प्रकाशताम् परमात्मसाक्षात्कारस्तव भवत्वित्यर्थः। तथारजसो रजोगुणात् परः परवर्त्ती एष सर्वलोकप्रत्यक्षगोचरः य स्तपति तापदानं करोति, अयं स देवः आदित्यः त्वां पुनातु पवित्रीकरोतु। इत्याशीर्वादद्वयं। परोरजा इति "अपस्करादयश्चे"ति सुट् निपातः।

अत्र परज्योतिःशब्देन परंब्रह्म बोच्यते। तथाच श्रुतिः "एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते। अत्र वेदान्तसूत्रं "ज्योतिर्दर्शना"दिति। तत्र शाङ्करभाष्यं "परमेव ब्रह्म ज्योतिःशब्द"मिति। (१ अ, ३पा, ४० सू)

य एष तपतीत्यनेनादित्योऽभिप्रेतः। तथाच छान्दोग्योपनिषत् "य एवासौ तपति तमुद्गीथमुपासीत"।

---

(१) परोरजसामिति पाठान्तरं।

जन। आर्य्य गृष्टे! अपि कुशलमस्याः प्रजापालमातुः?।(ङ)

कञ्चुकी। स्वगतं।* निर्विशेषमतिनिष्ठुरमुपालब्धाः स्मः। प्रकाशम्। राजर्षे! अनेनैव मन्युना चिरपरित्यक्तरामभद्रमुखचन्द्रदर्शनां नार्हसि त्वं दुःखयितुमतिदुःखितां देवीम्।

---

अत्र रजःपदं तमसोऽप्युपलचणं तेन रजस्तमोभ्यामस्पृष्टः केवलसत्त्वमय इत्यर्थः सर्वप्रकाशकत्वात्। तथाच सांख्यकारिका—

"सत्त्वं लघु प्रकाशकमिष्टमित्यादिः।

(ङ) जनेति। गृष्टिरिति कञ्चुकिनो नाम तत्सम्बोधनं गृष्ट इति। अपिशब्दः प्रश्ने। प्रजापालमातुः कौशल्यायाः कुशलं वर्त्तते किमित्यर्थः। यः खलु यथार्थत्वमयथार्थत्वं वा अपराधमनपराधं वा न्याय्यत्वमन्याय्यत्वं वा अविविच्य कर्म्म कुरुते स सर्वैरेवावज्ञायते, तथाच रामचन्द्रः खल्वदूरदर्शिनीनां साधारणप्रजानामयथार्थापवादेन निरपराधां सीतामन्याय्यभावेन केवलप्रजारञ्जनाय निर्वासितवानिति नितान्ततरलस्वभावताप्रकाशादवज्ञेय इति भावः। एतेन रामं कौशल्याञ्च प्रति जनकस्य महान् विरागो व्यज्यत इति वस्तुना वस्तुध्वनिः।

(च) कञ्चुकीति। निर्नविद्यते विशेषो यस्मात् तन्निर्विशेषं निरतिशयं अतिनिष्ठुरं नितान्तपरुषञ्च यथा स्यात्तथा उपालब्धाः तिरस्कृताः स्मः वयमितिशेषः। निःसङ्कोचालापकारिणीं कौशल्यां प्रति पूर्वमिव 'प्रियसखि! अपि कुशलं ते' इत्येवं साचादपृष्ट्वा मम समीपे वैवाहिकीति सम्बन्धबोधकपदाप्रयोगात् प्रजापालमातुरिति सोल्लुण्ठन पदप्रयोगाच्चेति भावः।

अनेनैव सीतानिर्वासनजनितेनैव मन्युना क्रोधेन चिरं परित्यक्तं रामभद्रस्य मुखचन्द्रदर्शनं यया तां तथोक्तां। अतिदुःखितां सीतानिर्वासनेनैव निरतिशयदुःखशालिनीमित्यर्थः दुःखयितुं पुनः क्लिष्टां कर्त्तुं। देवीं कौशल्यां। सीतानिर्वासनेनैव भवानिव इयमपि रामं प्रति नितान्तकुपिता सती परमस्नेहवशादविरतदृष्टपूर्वमपि

---

* निरवशेषमिति पाठान्तरं।

रामभद्रस्यापि† दैवदुर्नियोगः कोऽपि, यत् किल समन्तात्-प्रवृत्तवीभत्सकिंवदन्तीकाः पौरजानपदा नाग्निपरिशुद्धिमप्य-ल्पकाः प्रतियन्ति, इत्यतो दारुणमनुष्ठितं । (च)

जन। आः ! कोऽयमग्निर्नामास्मत्प्रसूतिपरिशोधने, कष्टम्, एवंवादिना जनेन रामपरिभूता अपि वयं पुनः परिभूयामहे ।(छ)

---

रामभद्रमुखचन्द्रमिदानीं नावलोकयति परमदुःखिता च जानीति रामविद्वेषे भवत्-पक्षपातिनी, सुतरां देवीं प्रति ईदृशवाक्यप्रयोगस्ते न युक्तिसङ्गत इति भावः ।

तर्हि राम एव तिरस्करणीय इत्याह रामभद्रस्यापीति । कोऽपि अनिर्वचनीयः दैवदुर्नियोगः दुरदृष्टकृतप्रेरणं, यत् यस्मात् दैवदुर्नियोगादित्यर्थः । समन्तात् सर्वासु दिक्षु प्रवृत्ता उपस्थिताः, वीभत्सा निन्दिताः किंवदन्त्यः "निःसहाया सीता वत्सरप्रायं यावत् लङ्कायां स्थिता तथापि अवाधेन सा पुनर्गृहीता" इत्यं अपवादा येभ्य स्ते तथोक्ताः, अत एव अल्पकाः अनिश्चितहेतुकपरापवादकारित्वात् चुद्राशयाः पौरजानपदाः पुर-वासिनो देशवासिनश्च जनाः अग्निपरिशुद्धिमपि अग्निपरीक्षया प्रमाणितनिर्दोषत्वमपि न प्रतियन्ति न विश्वसन्ति, सीताया अग्निपरीक्षया प्रतिपादितं निर्दोषत्वं शृण्वन्तोऽपि न विश्वसन्तः केवलं निन्दन्तीत्यर्थः । इति वाक्यसमाप्तौ । अतः कारणात् दारुणं निर्वासनरूपं भयङ्करं कर्म्म अनुष्ठितं कृतं रामभद्रेणेति शेषः । अस्मिन् निर्वासने रामस्य विरागो विद्वेषो वा न कारणं किन्तु दुर्दैवमेवेति निर्दोषो रामोऽपि न निन्दनीय इति भावः ।

(छ) जनेति । आ इति कोपसूचकमव्ययं । अस्मत्प्रसूतेः मम तनयायाः सीतायाः परिशोधने पवित्रताकरणे अयं त्वया उच्यमानः अग्निर्नाम अग्निरिति प्रसिद्धः पदार्थः कः, अपि तु कोऽपि नेत्यर्थः । पवित्रताविषये सीतातः अग्निर्न्यून एवेति भावः । एवं 'अग्नौ सीतायाः शुद्धि"रिति वाक्यं वदति यः स एवंवादी तेन, जनेन कञ्चुकि-

---

† रामभद्रेणापि समन्तात् प्रवर्त्तितवीभत्सकिंवदन्तीकाः...दारुणमनुष्ठितमिति पाठान्तरं ।

अरु। निःश्वस्य। एवमेतत्, अग्निरिति वत्सां प्रति परिलघून्यक्षराणि, सीतेत्येव पर्य्याप्तम्। हा वत्से! (ज)

शिशुर्वा शिष्या वा यदसि, मम तत्तिष्ठतु तथा
विशुद्धेरुत्कर्षस्त्वयि तु मम भक्तिं द्रढ़यति।
शिशुत्वं स्त्रैणं वा भवतु, ननु वन्द्यासि जगतो
गुणाः पूजास्थानं, गुणिषु न च लिङ्गं न च वयः ॥११॥

---

प्रभृतिना लोकेन, रामेण परिभूताः चरित्रदोषापवादेन सीताया निर्वासनात् तिरस्कृता अपि वयं पुनः परिभूयामहे तिरस्कृताः स्मः। दुष्टसम्पर्केण निर्दोषस्यापि दोषः स्यादिति रामेण चरित्रदोषापवादेन सीताया निर्वासनात् तस्या जनकतया अहमप्यवमानितः, परञ्च तस्याः अग्निशुद्धिं वदता जनेन स दोषो दृढ़ीकृत इति पुनरप्यवमानित इति भावः।

"प्रसूतिः।···दुहिते"ति शब्दकल्पद्रुमः।

अरु इति। एतत् त्वयोक्तं कोऽयमित्यादिवाक्यं, एवं सत्यमित्यर्थः। स्वयमपि तद्वाक्यस्य सत्यत्वं प्रतिपादयति अग्निरिति। वत्सां प्रति सीताविषये अग्निरिति अक्षराणि "अग्नि"इत्यानुपूर्वीका वर्णाः परिलघूनि न्यूनानि। सीतया सह पवित्रतांश अग्नेस्तुलनायां क्रियमानायां पातिव्रात्यधर्म्मेण सीतैव विशिष्यते इत्यर्थः। अत्राक्षरशब्दस्य तत्प्रतिपाद्यार्थे लक्षणा। सीतेत्येव सीता इति नामैव, पर्य्याप्तं यथेष्टम्। सीताया एतावान् चरित्रोत्कर्षो जगत्यां प्रथितः, यत् सीतानामोच्चारणमात्रेणैव सर्वेषां हृदये तस्या लोकोत्तरा पवित्रताविर्भवतीति तत्प्रतिपादने अग्निर्न समर्थ इति भावः।

"कामं प्रकामं पर्य्याप्तं निकामेष्टं यथेप्सित"मित्यमरः।

शिशुरिति। हा वत्से! मम समीपे त्वं शिशुः वयोऽल्पत्ववशात् बालिका वा, शिष्या पातिव्रात्यधर्म्मोपदेशादिना शिक्षणीया वा असि भवसि इति यत् तत् शिशुभवनं शिष्याभवनं वा शिशुत्वं शिष्यत्वं वेत्यर्थः तथा तेनैव प्रकारेण तिष्ठतु त्वया सार्द्धं मे वहिर्व्यवहारः शिशुभावेन शिष्याभावेन च भवतु इत्यर्थः, तु किन्तु विशुद्धेः पवित्रताया

कौश। अम्मो उम्मीलन्ति वेअणाओ। इति मूर्च्छति। (झ)

जन। हा कष्टं! किमेतत्। (ञ)

(झ) अहो उन्मीलन्ति वेदनाः।

उत्कर्षः उत्कृष्टता त्वयि मम भक्तिं पूज्यत्वेनानुरागं द्रढ़यति ढ्ढौकरोति प्रथममेवालौकिकसौन्दर्य्यादिदर्शनात् देवांशज्ञानेन सामान्यतो भक्तिर्जाता इदानीन्तु परिणीतकर्षस्तां ढ्ढौकरोतीत्यर्थः। न केवलं मम अपितु सर्व्वेषामेव त्वयि भक्तिर्जायते इत्याह शिशुत्वमित्यादि। शिशुत्वं अल्पवयस्कत्वं स्त्रैणं स्त्रैत्वं वा भवतु तत्रैवनिर्णयः तथापि जगतां जगज्जनस्य वन्द्या ननु, भक्त्या पूजनीयैव असि भवसि। ननु बालिका स्त्री कथं सर्व्वेषां पूजनीया स्यादित्याह गुणा इत्यादि। गुणाः धर्म्मपातिव्रात्यमत्तरित्वादयः पूजायाः स्थानं आस्पदं प्रयोजको हेतुरित्यर्थः, गुणिषु तादृशगुणवत्सु जनेषु लिङ्गं स्त्रीत्वपुंस्त्वादिकं न च पूजास्थानं न वा वयो जीवनकालस्य अल्पत्वमुं प्रवयस्त्वं वेत्यर्थः पूजास्थानं। सुतरां त्वं पातिव्रत्यादि गुणैनैव पूज्यासीति भावः।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः तथा "नचलिङ्गं नच वय" इत्यनेन लिङ्गवयसोः पूजाकारणतानिरासात् शाब्दी परिसंख्याच इत्यनयोरङ्गाङ्गिभावेन सङ्करः।

यदिति तदिति च क्रियाविशेषणं। ढ्ढं करोतीति इति "रशब्दऋतो लघोस्य-ञ्जनादे"रिति ऋकारस्य रत्वं। स्त्रिया भाव इति स्त्रैणं "स्त्रीपुंभ्यां नणस्नौ" इति नणप्रत्ययः। ननुशब्दोऽवधारणे।

चकारद्वयं प्रत्येकप्राधान्यसूचनार्थं।

शिखरिणी वृत्तं॥ ११॥

(झ) कौशेति। वेदनाः शोकजनितदुःखव्यथाः उन्मीलन्ति प्रादुर्भवन्ति नवीभवन्तीत्यर्थः सीतायाः अशेषगुणानुवादश्रवणादिति भावः।

(ञ) जनेति। एतत् कौशल्यायाः मुच्छीपन्नत्वं किं किम्प्रकारं।

(ए कि? इति बङ्गभाषा)।

अरु। राजर्षे ! किमन्यत्। (ट)

स राजा तत् सौख्यं स च शिशुजन स्ते च दिवसाः
स्मृतावाविर्भूतं त्वयि सुहृदि दृष्टे तदखिलम्।
विपाके घोरेऽस्मिन्नथ (१) खलु विमूढ़ा तव सखी-
पुरन्ध्रीणां चित्तं कुसुमसुकुमारं हि भवति॥ १२॥

(ट) अरु इति। अन्यत् अन्यप्रकारं किं अपितु किमपि नान्यप्रकारमित्यर्थः। तथाच मूर्च्छितेयं नान्यप्रकारमापन्नेति भावः। (आर कि? इति वङ्गभाषा)।

सकारणां तामिवाह स राजेति। सुहृदि प्रियसखे त्वयि दृष्टे सति स राजा दशरथः, तत् सौख्यं तत्कालीनसुखसन्तानः, स च शिशुजनः सीतारामचन्द्रादिः, ते दिवसाश्च अनुभूतपूर्वाणि सुखकराणि दिनानि, तदेतत् अखिलं दशरथादिसमस्तं स्मृतौ आविर्भूतं स्मृतिपथारूढं। अथ अनन्तरं अस्मिन् अनुभूयमाने घोरे विपाके अवस्थाविपर्य्यये स्मृतावाविर्भूते सतीत्यर्थः तत्कालीनावस्थया सह इदानीन्तनावस्थायाः पर्य्यालोचनयेत्यर्थः तव सखी कौशल्या विमूढ़ा मूर्च्छापन्ना। ननूभयोरवस्थयोः स्मरणमात्रेण कथं मूर्च्छा स्यादित्याह पुरन्ध्रीणामित्यादि। हि यस्मात् पुरन्ध्रीणां पतिपुत्रादिमतीनां कुलस्त्रीणां चित्तं मनः कुसुमसुकुमारं पुष्पवत् कोमलं तीव्रदुःखासहिष्णु इत्यर्थः भवति। अतएवोभयोरवस्थयोः स्मरणेनैव मूर्च्छितेति भावः।

अत्रापि सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, कुसुमसुकुमारमिति लुप्तोपमया सङ्कीर्णः।

सुखमेव सौख्यं स्वार्थे ष्यञ्। तदिति "नपुंसकानपुंसकयोर्णपुंसकमेकवच्चा" इति नपुंसकत्वं एकवचनञ्च।

"पुरन्ध्री। पतिपुत्रदुहित्रादिमती" इति शब्दकल्पद्रुमः।

शिखरिणी वृत्तं॥ १२॥

(१) ननु खलु इति पाठान्तरं।

जन। हन्त हन्त !(१) सर्वथा नृशंसोऽस्मि संवृत्तः(२) यश्चिरस्य दृष्टान् प्रियसुहृदः प्रियान् दारान् न स्निग्धं पश्यामि। (ठ)

स सम्बन्धी श्लाघ्यः, प्रियसुहृदसौ, तच्च हृदयं
स चानन्दः साक्षा, दपिच निखिलं जीवितफलम्।(३)
शरीरं, जीवो वा, यदधिकमतो वा प्रियतमो
महाराजः श्रीमान् किमिव मम नासीद्दशरथः ॥१३॥

---

(ठ) जनेति। हन्तेति विषादसूचकमव्ययं द्विर्वचनञ्च विषादे। नृशंसः निष्ठुरः। चिरस्य दृष्टान् बहुपूर्व्वं दृष्टानित्यर्थः, प्रियसुहृदः दशरथस्य, दारान् भार्य्यां, स्निग्धं सस्नेहं। यो बन्धुजनं सर्व्वथा सस्नेहं नावलोकयति स निष्ठुर एवेति भावः।

स इत्यादि। स दशरथः श्लाघ्यः अतीवसद्वंशजातत्वात् प्रशस्यः सम्बन्धी वैवाहिकः, असौ दशरथः प्रियसुहृत् परमप्रणयास्पदं सखा, तच्च स च दशरथः हृदयं हृदयरूपप्रीतिभाजनं स च दशरथः साक्षात् चाक्षुषप्रत्यक्षविषयः मूर्त्तिमानित्यर्थः आनन्दः आमोदः अपिच अन्यच्च दशरथः निखिलं समस्तं जीवितस्य मम प्राणधारणस्य फलं सुखमेव सर्व्वेषां जीवनस्य सर्व्वदाभीष्टतया वास्तविकं फलं निरतिशयमनोनुकूलत्वात् तच्च दशरथ आसीदित्यर्थः तथा दशरथः शरीरं सुस्थत्वे कार्य्यसम्पादनात असुस्थत्वेच कार्य्यहानेः मम गात्रस्वरूपः तथा दशरथः जीवः अतीवप्रियत्वात् मम जीवात्मा अहङ्कारविशिष्टं चैतन्यमित्यर्थः वा अथवा अतः एभ्यो हृदयादिभ्यो यत् वस्तु अधिकं प्रियत्वनातिरिक्तं जगत्यामस्तीति शेषः तादृशोऽपि प्रियतमः दशरथः आसीदिति सर्व्वत्रान्वयः। अतएव श्रीमान् राजलक्ष्मीवान् महाराजो दशरथः मम किमिव नासीत् अपितु सर्व्वमेवासीदित्यर्थः। दशरथमयं मे जीवनमासीदिति भावः।

(१) कष्टमिति पाठान्तरं।

(२) अन्यपुस्तके संवृत्त इति पाठो नास्ति।

(३) जीवितपदमिति पाठभेदः।

कष्टम्, इयमेव सा कौशल्या ।
यदस्याः पत्युर्वा रहसि परमं दूषितमभू-
दभूवं दम्पत्योः पृथगहमुपालम्भविषयः ।
प्रसादे कोपे वा तदनु मदधीनो विधिरभू-
दलं वा तत् स्मृत्वा दहति यदवस्कन्द्य हृदयम् ॥१४॥

अत आनन्दस्य चाक्षुषप्रत्यक्षविषयत्वासम्बन्धेऽपि तत् सम्बन्धोक्तेरतिशयोक्तिः तथा दशरथे हृदयत्वजीवितफलत्वशरीरत्वजीवत्वानामारोपात् निरङ्गं मालारूपकं तथा हृदयादिभ्योऽधिकप्रियवस्तुनोऽसम्बन्धेऽपि तत्सम्बन्धोक्तेरपरातिशयोक्तिः तथा चतुर्थचरण-गत वाक्यार्थं प्रति प्राथमिकचरणत्रयगतवाक्यार्थानां हेतुत्वात् काव्यलिङ्गं अर्थापत्ति येति, एतेषामङ्गाङ्गिभावेन सङ्करः ।

"य आत्मारस्तदविकरण"मित्यादिवत् तत्त्वेति प्रकांस्वमानलिङ्गत्वेन हृदयविशेषणत्वात् क्लीबं मकं । इवशब्दो वाक्यालङ्कारे ।

"साक्षात्प्रत्यक्षतुल्ययो"रित्यमरः ।

अहङ्कारविशिष्टपुरुषस्य जीवत्वमाह सांख्य सूत्रं ।

"विशिष्टस्य जीवत्वमन्वयव्यतिरेका"दिति (सा ६ अ ६३ सू) "जीवत्वं प्राणित्वं तच्चाऽहङ्कारविशिष्टपुरुषस्य धर्म्म"इति तद्भाष्यञ्च ।

शिखरिणी वृत्तं ॥ १३ ॥

यदस्याइति । अस्याः कौशल्यायाः, पत्युर्वा अस्या एव भर्त्तुर्दशरथस्य वा रहसि निर्जनस्थाने यत्परमं दूषितं अत्यन्तं दूषणं प्रणयकलह इति यावत् अभूत्, तदर्थमहं दम्पत्योः उभयोरेव जायापत्योः पृथक् स्वतन्त्रं यथा स्यात्तथा उपालम्भस्य तिरस्कारस्य विषयः पात्रं अभूवं । तव सखा मां प्रतीदृशमन्याय्यमाचरितवान् तथापि त्वमुदासीन इति कीदृशोलोकस्त्वं यदेनं शिक्षयसि इत्थं कौशल्या मामुपालब्धवती ; तथा तव सखी नितरामन्याय्यकारिणी इत्यवगच्छन्नपि उपेक्षमाणोभवानावयोः कलहं कौतुकमिव मन्यते किं" इत्थं दशरथोपि मामुपालब्धवानित्यर्थः तदनु तदनन्तरं प्रसादे उभयोर्मनोमालिन्यदूरीकरणे कोपे वा क्रोधोत्पादने वा मदधीनो ममायत्तो विधि

अरु। हा कष्टम्! अतिचिरनिरुद्धनिश्वासनिष्ठुरं हृदयमस्याः। (ड)

जन। हा प्रियसखि! कमण्डलूदकेन सिञ्चति।(१)( ढ )

कञ्च। सुहृदिव प्रकटय्य सुखप्रदः

प्रथममेकरसामनुकूलताम्।

---

र्यं वस्था अभूत्। दम्पती परस्परं प्रति प्रसादयितुं कोपयितुं वा अहमेव समर्थोऽभवमित्यर्थः। अतएवाहमुभयोरपि परमविश्वस्तबन्धुरासमिति भावः। वा अथवा तत् समस्तं तां घटनावलीमित्यर्थः स्मृत्वा अलं तत्स्मरणेन नास्ति प्रयोजनमित्यर्थः यत् घटनावृन्दं स्मृतं सदिति शेषः हृदयं अवस्कन्द्य आक्रम्य दहति शोकरूपेण परिणतं सत् सन्तापयति। पूर्वघटनावलीनां स्मरणेन केवलं हृदयं शोकातुरमेव भवति नतु खल्विदानीं किमपि अन्यत् फलमस्तीति निष्कर्षः।

अत्र दम्पतीनिष्ठदूषणरूपकारणात् जनकस्योपालम्भरूपकार्य्योत्पत्तिः असङ्गतिरलङ्कारः।

प्रथमं बाढ्यं समुच्चये तथाच "वा स्याद्विकल्पोपमयो रेवार्थेच समुच्चये"इति विश्वः। "विविक्त विजनच्छन्ननिःशलाका स्तथारह"इत्यमरः।

स्मृत्वा अलमिति "अलंखल्वोः प्रतिषेधयोः क्त्वे"ति क्त्वाप्रत्ययः।

शिखरिणी वृत्तं॥ १४॥

( ड ) अरु इति। अतिचिरं अतिबहुकालं निरुद्धैरभ्यन्तरावद्धैः निश्वासैः निष्ठुरं कठोरं कठोरत्वात् निश्चलमित्यर्थः। निश्वासाभावात् वक्षःस्थलं निस्पन्दमास इति निष्कर्षः।

"कठोरं निष्ठुरं दृढ़"मित्यमरः।

( ढ ) जनेति। हा प्रियसखि! कीदृशीमवस्थां गतासीति शेषः। सिञ्चति कौशल्यामितिशेषः।

( १ ) कमण्डलुजलेनेति पाठान्तरं।

पुनरकाण्डविवर्त्तनदारुणो
विधिरहो विशिनष्टि मनोरुजम् ॥ १५ ॥

कौश। संज्ञां लब्ध्वा। हा वच्छे जानइ! कहिं सि, सुमरामि दे विआहलच्छीपरिग्गहेक्कमण्डणं पप्फुरन्त सुद्धहसिदमुद्धमुह-पुण्डरीअं, आपप्फुरन्तकोमुदचन्दचन्दिआसुन्दरेहिं अङ्गेहिं

(ग) हा वत्से! जानकि! कस्मिन्नसि, स्मरामि ते विवाहलक्ष्मीपरिग्रहैक-मण्डणं प्रस्फुरच्छुद्धहसितमुग्धमुखपुण्डरीकं, आस्फुरत्कौमुदचन्द्रचन्द्रिकासुन्दरै-

सुहृदिति। विधि र्विधाता सुहृत् सखेव प्रथमं आदौ वाल्यकालावधि रामवनवास-पर्य्यन्तमित्यर्थः एकः अविमिश्रः दुःखेनासंयुक्त इत्यर्थः रसः सुखास्वादो यस्यां तां धारावा-हिककेवलसुखशालिनीमित्यर्थः अनुकूलतां आनुकूल्यं प्रकटय्य प्रकाश्य सुखप्रदः सन् अहो वत पुनः अकाण्डे अनवसरे वार्द्धके तादृशदारुण दुःखासहिष्णुत्वेन अयोग्ये काल इत्यर्थः विवर्त्तनेन परिवर्त्तनेन दारुणो भयङ्करः, रूपान्तरधारणेन नृशंस इत्यर्थः मनोरुजः चित्तपीड़ा विशिनष्टि विशेषेण करोति नानाविधदुर्घटनाकरणेन दारुणं दुःखमुत्पादय-तीत्यर्थः।

अत्र सुखप्रदविधे र्दुःखोत्पत्तेर्विषमालङ्कारः सुहृदिवेति श्रौत्या उपमया सङ्कीर्य्यते।

"अहो। विषादः" इति शब्दकल्पद्रुमः।

"काण्डोऽस्त्री दण्डवाणार्ववर्गावसरवारिषु" इत्यमरः।

द्रुतविलम्बितं वृत्तं "द्रुतविलम्बितमाह न भौ भरा" विति लक्षणात् ॥ १५ ॥

(ग) कौशेति। संज्ञां चैतन्यं। विवाहलक्ष्म्याः विवाहकालीनशोभायाः परिग्रहो धारणमेव एकं अद्वितीयं मण्डलं भूषणं यस्य तत्, कृत्रिमालङ्काराभावेऽपि तात्कालिकस्वाभाविकशोभयैव अतीवशोभितमित्यर्थः। प्रस्फुरता विकसता शुद्धेन निर्म्मलेन हसितेन स्मितेन मुग्धं मनोहरं मुखं पुण्डरीकं पद्ममिव तत् तथोक्तं स्मरामीत्यनेनान्वयः। आस्फुरन्ती सम्यक्प्रकाशमाना कौमुदस्य कार्त्तिकमासीयस्य

उल्लासेहि ; जादे! पुणोवि उज्जोएहि उच्छङ्गं, सव्वदा महाराओ भणादि, एसा रहुउलमहत्तराणं वहू, अह्माणं उण जणअसम्बन्धेण दुहिदिआ एव्व। (ण)

कञ्चु। यथाह देवी। (त)

पञ्चप्रसूतेरपि राज्ञ आसीत्
प्रियो विशेषेण सुवाहुशत्रुः।
वधूचतुष्केऽपि यथैव शान्ता
प्रिया तनूजास्य तथैव सीता ॥ १६ ॥

रङ्गैरुल्लासय, जाते! पुनरप्युद्द्योतयोत्सङ्गं, सर्वदा महाराजो भणति, एषा रघुकुल-महत्तराणां वधूः, अस्माकं पुनर्जनकसम्बन्धेन दुहिता एव।

चन्द्रस्य चन्द्रिका ज्योत्स्ना तद्वत्सुन्दरैः अङ्गैरवयवैः उल्लासय आनन्दय अस्मानिति शेषः। जाते! कन्यातुल्ये! उत्सङ्गं क्रोड़ं उद्द्योतय प्रकाशय उपवेशनेनेत्यर्थः। महा-राजो दशरथः, भणति ब्रवीति स्म। किमित्याह एषा सीता रघुकुलस्य महत्तराणां प्राचीनानां अस्मत्पितृपितामहादीनामित्यर्थः वधूः स्नुषा, पुनः किन्तु जनकसम्बन्धेन जनकेन सह मित्रत्वरूपसम्बन्धेन दुहिता एव कन्यैव, जनकस्य यो यादृशः सम्बन्धी अस्माकमपि स तादृशः सम्बन्धी जनकस्य मम च अभिन्नहृदयत्वात्, अतएव जनकस्य या कन्या सा ममापि कन्येवेति भावः।

अत्र मुखपुण्डरीकमित्यत्र चन्द्रिकासुन्दरैरित्यत्र च लुप्तोपमाऽलङ्कारः। तथा चन्द्रिकेत्यनेनैव अभिप्रेतार्थनिर्वाहे पुनश्चन्द्रपदोपादानात् पुनरुक्ततादोषः, चन्द्रपद-परित्यागेन स समाधेयः।

भणतीति "प्रयोगतस्त्वे"ति अतीते वर्त्तमाना।

(त) कञ्चुकीति। देवी कौशल्या, यथाह सत्यं ब्रवीति।

यथार्थत्वं स्वयमपि प्रतिपादयति पञ्चेति। सुवाहोः सुवाहुनामकराक्षसस्य शत्रुः हन्ता रामः, प्रसूयते उत्पाद्यते या सा प्रसूतिरपत्यं, पञ्च प्रसूतयः अपत्यानि यस्य तस्य,

जन। हा प्रियसख! महाराज दशरथ! एवमसि सर्वप्रकार-हृदयङ्गमः कथं विस्मर्य्यसे। (थ)

कन्यायाः किल पूजयन्ति पितरो जामातुराप्तं जनं
सम्बन्धे विपरीतमेव तदभूदाराधनं ते मयि।
त्वं कालेन तथाविधोऽप्यपहृतः सम्बन्धबीजन्तु तत्
घोरेऽस्मिन् मम जीवलोकनरके पापस्य धिग् जीवितम् ॥१७॥

रामादयश्चत्वारः पुत्राः, शान्ता च एका कन्येति पञ्चापत्यशालिन इत्यर्थः राज्ञो दशरथस्य विशेषेण अन्येभ्य आधिक्येन प्रिय आसीत्। शान्ता तदाख्यातनुजा कन्या यथैव प्रिया, वधूचतुष्केऽपि स्नुषाचतुष्टयेऽपि मध्ये सीता तथैव प्रिया आसीत्।

अत्र आसीदित्येकक्रियया सुवाहुशत्रुसीतयोरन्वयात् तुल्ययोगिताऽलङ्कारः उपमया सङ्कीर्य्यते।

वृत्तं इन्द्रवज्रोपेन्द्रवज्रयोर्मेलनादुपजातिः ॥ १६ ॥

(थ) जनेति। सर्वेण प्रकारेण हृदयङ्गमः हृद्यः प्रीतिभाजनमिति यावत्। अतोऽप्रीतिभाजनरूपो जनः सर्वदैव मनसि वर्त्तत इति बहुकालात्ययेऽपि विस्मर्त्तुं न शक्यत इति भावः।

कन्याया इति। किलेति लोकवार्त्तायां। कन्यायाः पितरः पितृपक्ष इत्यर्थः जामातुः कन्याभर्त्तुः आप्तं बन्धुत्वेन विश्वस्तं पित्रादिकमित्यर्थः जनं पूजयन्ति दानानुगत्यादिना सम्मानयन्ति, इयमेव साधारणी चिरन्तनी रीतिरिति किलशब्दस्यार्थः। किन्तु सम्बन्धे आवयोरस्मिन् वैवाहिकत्वसम्बन्धे तत् पूजनं विपरीतमेव समाज-प्रचलितरीतिविरुद्धमेव अभूत्। तद्वैपरीत्यमेवाह आराधनं ते मयीति। ते तव जामातृपितुः मयि कन्यापितरि आराधनं दानानुगत्यसान्त्ववादादिना सम्माननं इत्येव विपरीतमित्यर्थः। त्वं तथाविधोऽपि अशास्त्रीयां तां समाजरीतिमननुरुन्धन् केवल-सरलतौदार्य्यगुणेन बन्धुजनसम्मानकारकः कालेन समयेन अपहृतः लोकान्तरं प्रापितः,

कौश। जादे जाणइ ! किं करेमि, दढ़वज्जलेव घड़िअवन्धणिच्चलं ज्जेव हदजीविदं मं मन्दभाइणीं ण परिच्चअइ। (द)

(द) जाते जानकि ! किं करोमि, दृढ़वज्रलेपघटितवन्धनिश्चलमेव हतजीवितं मां मन्दभागिनीं न परित्यजति।

अपीति निन्दासूचकमव्ययं भवादृशसत्पुरुषापहरणं कालस्य नितान्तमनुचितमिति भावः। तथा तत् सीतारूपं सम्बन्धवीजं आवयोर्वैवाहिकसम्बन्धमूलं च कालेनापहृतमित्यन्वयः। अतएव अस्मिन् घोरे अशेषक्लेशकारणत्वात् भयङ्करे जीवलोके नरक इव जीवलोक एव नरको वा तस्मिन् पापस्य पापवतः पापं विना दुःखभोगो न स्यादितिभावः मम जीवितं जीवितावस्थया अवस्थानं धिक् निन्दामीत्यर्थः। इदानीं मम मरणमेव श्रेय इति भावः।

अत्रोपमारूपकयोः सन्देहसङ्करालङ्कारः उभयोरपि साधकवाधकप्रमाणाभावात्, काव्यलिङ्गञ्च। तथा पूजयन्तीत्यभिधाय पुनराराधनमित्यभिधानात् प्रक्रमभङ्गः, तथा सम्बन्धवीजमित्यत्र समुच्चयार्थकचकार आवश्यकः किन्तु नोक्त इति न्यूनपदत्वञ्चेति दोषद्वयं, आराधनमित्यत्र 'सम्पूजनं' सम्बन्धवोजन्तु इत्यत्र च 'सम्बन्धवीजञ्च' ति पाठे न समाधेयं।

"वार्त्ता सम्भाव्ययोः किल" "आत्तः प्रत्ययित स्त्रिषु"। "गर्हासमुच्चय प्रश्नशङ्कासम्भावनास्वपी"ति चामरः।

शार्दूलविक्रीड़ितं वृत्तं॥ १७॥

(द) कौशेति। जाते। पुत्रि!। दृढ़ेण दीर्घकालस्थायिना वज्रलेपेन वज्रनिर्म्मितलेपेन घटितो विहितो यो वन्धः संयोगः तेन निश्चलं सुस्थिरं गन्तुमसमर्थमित्यर्थः, हतजीवितमेव दुर्भाग्यप्राणा एव कर्त्तृ मां मन्दभागिनीं न परित्यजति। अहन्तु जीवनं त्यक्तुमिच्छाम्येव सीताभावे जीवनधारणस्य निष्फलत्वादिति भावः।

अरु। आश्वसिहि राजपुत्रि! वाष्पविश्रामोऽप्यन्तराले (१) कर्त्तव्य एव, अन्यच्च किं न स्मरसि, यदवोचदृष्यशृङ्गाश्रमे युष्माकं कुलगुरुः, तदुपजातमेव, (२) किन्तु कल्याणोदर्कं भविष्यति। (ध)

कौश। भअवदि! अदिक्कन्तो मणोरहो। (न) (३)

अरु। तत् किं मन्यसे राजपुत्रि! (४) मृषोद्यं तदिति, न्वीदं सुक्षत्रिये! अन्यथा मन्तव्यं, भवितव्यमेव तेन। (प)

(न) भगवति! अतिक्रान्तो मनोरथः!

(ध) अरु इति। अन्तराले अवसरे मध्ये मध्ये इत्यर्थः वाष्पविश्रामोऽपि अश्रुविसर्जनविरामोऽपि। केवलमविरतं रोदनं न कर्त्तव्यमित्यर्थः तथात्वे चक्षुर्नाशाद्यनिष्टसम्भावनासत्त्वादिति भावः। अन्यच्च वाष्पविसर्जनविरामकारणमित्यर्थः ब्रवीमीति-शेषः। कुलगुरुः वशिष्ठः। उपजातमेव जातप्रायमेव नात्र सन्देह इत्येवशब्दार्थः। कल्याणं मङ्गलं उदर्कं उत्तरफलं यस्य तत् कल्याणोदर्कं भविष्यति एतदवस्थान्तर-मितिशेषः। ऋष्यशृङ्गाश्रमे तस्य यज्ञसम्पादनाय गतो भगवान् वशिष्ठः लोकपरम्परा-श्रुतसीताविसर्जनव्यापारो भृशशोकाकुलां कौशल्यामिदमाह स्म "भद्रे! समाश्वसिहि, पुत्रपूर्णोत्सङ्गामेव जानकीं पुनर्द्रक्ष्यसि" इति वाक्यस्य सत्यताविश्वासवशादरुन्धत्याः सान्त्ववादोऽयमिति मन्तव्यं।

"उदर्कः फलमुत्तर"मित्यमरः।

(न) कौशेति। मनोरथः अभिलाषः सीतापुत्रदर्शनाकाङ्क्षितियावत् अतिक्रान्तः अतीतः चिराय नष्ट इत्यर्थः। नानाश्वापदसङ्कुलारण्ये निर्वासनेन सीताया एव अभावादिति भावः।

(प) अरु इति। तत्तदित्यर्थः तत् कुलगुरोर्वचनं मृषोद्यं मिथ्या वाक्यं

(१) अन्तरे। (२) तत्तथैत्युपजातमेव। (३) कुदो अदिक्कन्दमणोरहाए मह एदं। (४) राजपुत्रि!। इति पाठान्तराणि।

आविर्भूतज्योतिषां ब्राह्मणानां
ये व्याहारास्तेषु मा संशयो भूत्।
भद्रा ह्येषां वाचि लक्ष्मीर्निषक्ता
नैते वाचं विप्लुतां व्याहरन्ति॥ १८

नेपथ्ये कलकलः। (फ)

इति किं मन्यसे? हे सुचरिते। सत्क्षत्रियवंशजाते! इदं गुरुवचनं अन्यथा मिथ्याभूतं नहि मन्तव्यं, तेन गुरुवचनेन भवितव्यमेव सत्येन भाव्यमेव। अवश्यमेव सपुत्रामेव सीतां पुनः द्रक्ष्यसि युष्मत्कुलगुरुसदृशानां त्रिकालज्ञानामृषीनां महासत्यवादित्वादिति भावः।

मृषा उद्यते मिथ्या उच्यत इति मृषोद्यं "नाग्निवदः क्यप्चे"ति क्यप्।

तेषां महासत्यवादितां प्रतिपादयति आविरिति। आविर्भूतं प्रकाशितं ज्योतिः ब्रह्माख्यं तेजो येषां तेषां ज्ञातब्रह्मसाक्षात्काराणामित्यर्थः ब्राह्मणानां ये व्याहारा उक्तयः तेषु संशयःवाक्यमिदं सत्यं मिथ्या वेति सन्देहो माभूत् न भवतु तवेतिशेषः। हि यस्मात् एषां ब्राह्मणानां वाचि वाक्ये भद्रा कल्याणी निर्दोषेत्यर्थः लक्ष्मी यथार्थतासम्पत्तिः निषक्ता नियतलग्ना। अन्यच्च एते ब्राह्मणाः विप्लुतां अर्थविप्लवशालिनीं मिथ्याभूतामिति यावत् वाचं वाक्यं न व्याहरन्ति न वदन्ति।

अत्र ब्राह्मणानां वाक्ये संशयकर्त्तव्यत्वाभावरूपकार्य्यस्य तदीयसत्यत्वरूपकारणेन समर्थनात् कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः।

"व्याहार उक्तिर्लपितं"। "सम्पत्तिः श्रीश्च लक्ष्मीश्च"इति चामरः।

एतत्तृतीयचरणानुरूपं वाक्यं पाणिनिमहाभाष्येऽपि दृश्यते। यथा—

"भद्रैषां लक्ष्मीर्निहिताधि वाचि।"

एकादशीतत्त्वधृतं विष्णुवचनञ्च "ब्राह्मणानां प्रसादेन दिवि तिष्ठन्ति देवताः।
ब्राह्मणाभिहितं वाक्यं न मिथ्या जायते क्वचित्।"

शालिनी वृत्तं॥ १८॥

(फ) नेपथ्य इति। नेपथ्ये वेशरचनास्थाने, कलकलः कोलाहलः।

सर्व्वे आकर्णयन्ति। (व)

जन। अद्य खलु शिष्टानध्याय इत्युद्धतं खेलतां वटूनां कलकलः। (भ)

कौश। सुलहसोक्खं दाव बालत्तणं होदि। निरूप्य। अम्महे! एदाणं मज्झे को एसो रामभद्दलच्छीपरिसोहिदेहिं सावउम्भमुद्धललिदेहिं अङ्गेहिं अह्माणं वि लोअणाइं सीदलावेदि। (म)

(म) सुलभसौख्यं तावत् बालत्वं भवति। अहो! एतेषां मध्ये क एष रामभद्रलक्ष्मीपरिशोभितैः सावष्टम्भमुग्धललितैरङ्गैः अस्माकमपि लोचनानि शीतलयति।

(व) सर्व इति। आकर्णयन्ति उत्कर्णाः सन्त इति शेषः।

(भ) जनेति। कुतस्त्योऽयं कलकल इति कौशल्यादीनामनुमितं संशयं निराकर्त्तुमाह अद्येति। शिष्टानां वंशपरम्परया वेदाध्यायिनां अनध्यायः अध्ययनाध्यापनाविरामः, इति हेतोः, उद्धतं उल्लम्फन-द्रुतधावनादिरूपं यथा स्यात्तथा खेलतां क्रीड़ां कुर्वतां वटूनां ब्राह्मणकुमाराणां। अद्य वशिष्ठादीनामागमनेन अनध्यायो जात इति पाठाभावात् निरुद्वेगोत्फुल्लचित्ता ऋषिकुमाराः कोलाहलं कुर्वन्त उल्लम्फनद्रुतधावनादिरूपां खेलां कुर्वन्तीत्यर्थः।

जनसमागमादनध्यायमाह मनुः "अनध्यायो रुद्यमाने समवाये जनस्य च।"

शिष्टमाह वशिष्ठः—"पारम्पर्य्यागतो येषां वेदः सपरिवृंहणः।

ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः॥"

(म) कौशेति। बालत्वं शैशवं, सुलभं सांसारिककार्य्यकलापचिन्ताऽभावात् अनायासलभ्यं सौख्यं सुखं यत्र तत्। शैशवसमये हि यतः कुतश्चिदेव कारणात् सुखमुत्पद्यत इति मनःस्फूर्त्तिमन्त एते अनध्यायसुखमेव कलकलेन प्रकटयन्तीति भावः। रामभद्रस्य या लक्ष्मीः शरीरशोभा तया तत्सदृशशोभयेत्यर्थ इति निदर्शनाऽलङ्कारः अवष्टम्भेन सौष्ठवेन सह विद्यमानानि सावष्टम्भानि सुघटितत्वात् अतीवप्रशस्ता-

अरु। अपवार्य्य सहर्षोत्कण्ठं स्वगतम्। इदं नाम तद्भागीरथी-निवेदितरहस्यं कर्णामृतं, नत्वेवं विद्मः कतरोऽयमायुष्मतोः कुशलवयोरिति। (य)

जन। कुवलयदलश्यामस्निग्धः (१) शिखण्डकमण्डनो-
वटुपरिषदं पुण्यश्रीकः श्रियेव सभाजयन्।

नौत्यर्थः मुग्धानि सुन्दराणि, ललितानि मनोहरविन्यासभङ्गियुक्तानि च तैः अङ्गैः हस्त-पदाद्यवयवैः, अस्माकमपि ससम्पर्काणां का कथा निःसम्पर्काणामप्यस्माकमित्यर्थः। शीतलयति सुखशीतलानि करोति।

"सौष्ठवं स्यादवष्टम्भ" इति हलायुधः। ललितमाह उज्ज्वलनीलमणिः—

"विन्यासभङ्गिरङ्गानां भ्रूविलासमनोहरा।
सुकुमारा भवेद्द यत्र ललितं तदुदीरितं॥"

(य) अरु इति। अपवार्य्य सदूरवारिणन कौशल्यादीनां श्रवणयोग्यतामदत्त्वेत्यर्थः। तल्लक्षणमाह साहित्यदर्पणे "...तद्भवेदपवारितं।
रहस्यन्तु यदन्यस्य परावृत्य प्रकाश्यते॥"

भागीरथ्या गङ्गया निवेदितं ज्ञापितं रहस्यं गुप्तविवरणं जन्मावस्थित्यादिकं यस्य तत् तथोक्तं, कर्णयोरमृतं पीयूषवदामोदजनकं इदं तत् वचनं वचनाभिधेयः कुशलवयोः कश्चिदित्यर्थः वाच्यवाचकयोरभेदविवक्षयोपपत्तिः तु किन्तु आयुष्मतोः दीर्घजीविनोः कुशलवयोर्मध्ये अयं कतरः क इत्येवं न विद्मः जानीमः। भागीरथी-कथितानुरूपाकृतिदर्शनात् कुशलवयोरेकोऽयमिति सामान्यतो निश्चेतुं शक्नोमि, किन्तु कुशोऽयं किम्वा लवोऽयमिति विशेषेण निश्चेतुं न शक्नोमि पूर्वमदर्शनादिति भावः। कर्णामृतमिति निरङ्ग केवलरूपकमलङ्कारः।

कुवलयेति। कुवलयस्य उत्पलस्य दलवत् पत्रवत् श्यामः श्यामलः तथा स्निग्धः मसृणः स तथोक्तः, तथा शिखण्डकः काकपक्षः मण्डनं भूषणं यस्य सः, तथा पुण्या पवित्रा श्रीः शोभा यस्य सः, तया श्रिया देहशोभया वटुपरिषदं ब्राह्मणकुमारवर्गं

(१) स्निग्धश्याम इति पाठान्तरं।

पुनरिव शिशुर्भूतो(१) वत्सः स मे रघुनन्दनो-
झटिति कुरुते दृष्टः कोऽयं दृशोरमृताञ्जनम् ॥१८॥

कञ्चु। नूनं क्षत्रियब्रह्मचारी दारकोऽयमिति मन्ये ॥ (र)

जन। एवमेतत् ।(२) तथाहि। (ल)

चूड़ाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो
भस्मस्तोम(३) पवित्रलाञ्छनमुरो धत्ते त्वचं रौरवीम् ।

सभाजयन् अलङ्कुर्वन्निव स्थित इति शेषः, पुनः शिशुर्भूतः शैशवमापन्नः स मे वत्सो रघुनन्दनो राम इव कोऽयं बालकः दृष्टः अवलोकितः सन् झटिति द्रुतं दर्शनमात्रेणैवेत्यर्थः दृशोश्चक्षुषोः अमृताञ्जनं सुधाया म्रक्षणं कुरुते अमृतेन चक्षुषी लिम्पतीवेत्यर्थः ।

अत्र अमृताञ्जनं कुरुत इति भावाभिमानिनी प्रतीयमाना क्रियोत्प्रेक्षाऽलङ्कारः, सभाजयन्निवेति वाच्या, क्रियोत्प्रेक्षा तथा पुनःशिशुर्भूतो रघुनन्दन इवेति वाच्या द्रव्योत्प्रेक्षा, तथा कुवलयदलश्यामस्निग्ध इति लुप्तोपमा च इत्येतेषां परस्परनिरपेक्षस्थितेः संसृष्टिः। शिखण्डकमण्डन इत्यत्र छेकानुप्रासः।

"अञ्जनं। म्रक्षणं"इति शब्दकल्पद्रुमः।

हरिणी वृत्तम् ॥ १८ ॥

(र) कञ्चु इति। अयं दृश्यमानो दारको बालकः, ब्रह्म चरतीति ब्रह्मचारी नवोपनीतो गुरुकुले निवसन् वेदमधीयान इत्यर्थः। क्षत्रियश्चासौ ब्रह्मचारी चेति सः। नूनं निश्चितं भवेदिति शेषः, इति मन्ये सम्भावयामि।

(ल) जनेति। एतत्क्षत्रियब्रह्मचारीति यदुक्तं तदेवं सत्यमित्यर्थः। स्वयमपि तत्समर्थयति तथाहीति।

---

(१) भूत्वा इति पाठभेदः। (२) एवमेव इति भिन्नः पाठः। (३) भस्मस्तोक इति क्वचित् पाठः।

मौर्व्या मेखलया नियन्त्रितमधोवासश्च माञ्जिष्ठिकं
पाणौ कार्म्मुकमक्षसूत्रवलयं दण्डं तथा(१) पैप्पलम् ॥२०॥

चूडेति । अयं बालकः, पृष्ठतः अभितः पृष्ठस्य उभयोः पार्श्वयोः चूडाभिः शिखाभिः केशाग्रैरित्यर्थः चुम्बितानि स्पृष्टानि कङ्कपत्राणि कङ्कनामकपक्षिपक्षा सरल शीघ्रगमनार्थं बाणमूलभागे दत्ता यस्य तत्तथोक्तं तुणीद्वयं तूर्णीरयुगलं, लम्बित-केशाग्रसंस्पृष्टबाणान्विततूर्णीरद्वयमित्यर्थः । तथा भस्मनां स्तोमेन पुञ्जेन पवित्रं लाञ्छनं चिह्नं यत्र तादृशं, पवित्रहोमवाङ्कभस्मना चिह्नितमित्यर्थः उरो वक्षःस्थलं । तथा रुरो-र्मृगविशेषस्येयं इति रौरवी तां त्वचं चर्म्म, मृगचर्म्मरूपमुत्तरीयमित्यर्थः । मूर्वायाः-तृणविशेषस्येयमिति मौर्वी तया, मूर्वासूत्रनिर्म्मितयेत्यर्थः मेखलया काञ्च्या कटि-सूत्रेणेति यावत् नियन्त्रितं निवद्धं मञ्जिष्ठया संसृष्टमिति माञ्जिष्ठिकं मञ्जिष्ठानाम-लतारञ्जितमित्यर्थः अधोवासः परिधेयवसनञ्च । तथा पाणौ करे कार्म्मुकं धनुः तथा अक्षसूत्रवलयं वलयीकृतां सूत्रग्रथितजपमालामित्यर्थः, तथा पिप्पलस्य अश्वत्थस्य अश्वत्थशाखाया इत्यर्थः अयमिति पैप्पलः तं दण्डञ्च धत्ते बिभर्त्ति । वामपाणौ धनुः, दक्षिणमणिवन्धे जपमालां दक्षिणपाणौच दन्डं धत्ते इत्यर्थः । एभिश्चिह्नैः क्षत्रिय-ब्रह्मचारी अयमिति निर्णीयत इति भावः ।

अत्र धत्त इत्येकया क्रियया तूणीद्वयादीनां कर्म्मतयाऽभिसम्बन्धात् तुल्ययोगिताऽलङ्कारः ।

क्षत्रियब्रह्मचारिणो रौरवोत्तरीयादि धारणमाह मनुः—

"कार्ष्णरौरववास्तानि चर्म्माणि ब्रह्मचारिणः ।
वसीरन्नानुपूर्व्वेण शाणक्षौमाविकानि च ॥
मौञ्जी त्रिवृत् समा श्लक्ष्णा कार्य्या विप्रस्य मेखला ।
क्षत्रियस्य तु मौर्व्वीज्या वैश्यस्य शणतान्तवी ॥"

गौतमः । "वैल्वपालाशौ ब्राह्मणस्य दण्डौ, अश्वत्थपैलवौ शेषे ।"

"समीपोभयतः शीघ्रसाकल्याभिमुखेऽभितः ।" "वोधिद्रुमश्चलदलः पिप्पलः कुञ्जराशनः । अश्वत्थे" इति चामरः ।

(१) दण्डोऽपर इति पाठान्तराणि ।

भगवत्यरुन्धति! किमुत्प्रेक्षसे कुतस्त्योयमिति। (व)

अरु। अद्यैव वयमप्यागताः। (१) (श)

जन। आर्य्यगृष्टे! अतीव मे कौतुकं वर्त्तते, तद्भगवन्तं वाल्मीकिमेव गत्वा पृच्छ, इमञ्च बालकं ब्रूहि, केऽप्येते प्रवयसस्त्वां दिदृक्षव इति। (ष)

कञ्चु। यदाज्ञापयसि। (स) इति निष्क्रान्तः।

---

"अक्षसूत्रं। जपमाला" इति शब्दकल्पद्रुमः।

अभित इति "पर्य्यभिभ्यां सर्वोभयार्थ्या" मिति तसिः। पृष्ठत इति—"तमोभयाभिपरिसर्वे" त्युत्पन्नाया द्वितीयायाः "सर्वविभक्तिभ्यस्तसि" ति तस्। शार्दूलविक्रीडितं वृत्तं ॥ २० ॥

(व) भगेति। अयं बालकः कुत आगत इति कुतस्त्यः, इति अस्मिन् विषये किमुत्प्रेक्षसे बुध्यसे किमनुमिनोषीत्यर्थः। तद्व ब्रूहीति भावः।

कुतस्त्य इति "अव्ययात्त्यप्" इति त्यप्प्रत्ययः।

(श) अरु इति। न केवलं भवन्तः, अपितु वयमप्यद्यैवागता इत्यर्थः। सुतरां भवत्समाना वयं पूर्वमदर्शनात् नैनं परिचिनुम इति भावः।

वयमिति "वास्मदये" ति बहुवचनं। अहमितितदर्थः। नैनं परिचिनुम इत्युक्तौ मिथ्योक्तिः स्यादित्यतः अद्येत्याद्युक्त्वा छलेन वृत्तान्तगोपनं कृतमिति बोध्यं।

(ष) जनेति। केऽपि त्वया अपरिचिता इत्यर्थः, एते दृश्यमानाः, प्रकृष्टं प्रचुरं वयो येषां ते प्रवयसः स्थविराः। दिदृक्षवः द्रष्टुमिच्छवः। इति ब्रूहीत्यर्थः।

(स) कञ्चु इति। यदाज्ञापयसि तदेवानुतिष्ठामीत्यर्थः।

---

(१) अद्यैव वयमागता इति विभिन्नः पाठः।

कौश। किं भणध, एव्वं भणिदो आगमिस्सदित्ति। (छ)

अरु। भिद्येत किं महृत्तकीदृशस्य निर्म्माणस्य?। (च)(१)

कौश। निरूप्य। कहं सविणअं णिसामिदगिट्ठिवअणो विसज्जित इसिदारआ इदो अहिमुहं पसरिदो ज्जेव सो वच्छो। (क)

जन। चिरं निर्वर्ण्य। भोः! किमप्येतत्। (ख)

महिम्नामेतस्मिन् विनय शिशुता मौग्ध्यमसृणा-
विदग्धै निर्ग्राह्यो(२) न पुनरविदग्धै रतिशयः।

---

(छ) किं भणत, एवं भणित आगमिष्यतीति।

(क) कथं सविनयं निशामितगष्टिवचनः विसर्जितऋषिदारक इतः अभिमुखं प्रसृत एव स वत्सः।

(छ) कौशेति। एवं भणितः कञ्चुकिना जनकोपदिष्टप्रकारेणोक्तः आगमिष्यति किमित्यर्थः, इति विषये यूयं किं भणथ इत्यर्थः।

(च) अरु इति। ईदृशस्य अद्भुतसौन्दर्य्यशालिनः निर्म्माणस्य सृष्टेः "कवित्विहितोभावो द्रव्यवत् प्रकाशत" इतिन्यायात् विधात्रा परमसुन्दरीकृत्य निर्म्मितस्येत्यर्थः, सद्वृत्तं सच्चरितं किं भिद्येत वियुज्येत, अपितु कथमपि नेत्यर्थः। "यत्राकृति स्तत्र गुणा वसन्ती"ति न्यायात् सुन्दराकृतिमान् विनयान्न प्रच्यवेत इति भावः।

(क) कौशेति। निरूप्य विशेषेणावलोक्य। निशामितं श्रुतं गृष्टेस्तदाख्यस्य कञ्चुकिनः वचनं येन सः। विसर्जिताः त्यक्ताः ऋषीणां मुनीनां दारका बालका येन सः, मुनिबालकवृन्दान्निःसृत्य इत्यर्थः, इतोऽभिमुखं अस्मान् प्रतीत्यर्थः प्रसृतः प्रस्थितः। विसर्जितऋषिदारक इति "ऋत्यनित्यसमासेऽनुपसर्गसमानस्य ह्रस्वश्च"ति सन्धिप्रकृतिः।

(ख) जनेति। भोरिति कौशल्यादीनां सम्बोधने। एतत् बालकरूपं वस्तु किमपि अनिर्वचनीयमाश्चर्य्यमित्यर्थः।

(१) भिद्येत वा इति पाठान्तरं। (२) निग्राह्य इति पाठान्तरं।

मनो मे सम्मोदः(१) स्थिरमपि हरत्येव बलवान्
अयोधातुं यद्वत् परिलघुरयस्कान्तशकलः ॥ २१ ॥

प्रविश्य लवः। स्वगतम्। अज्ञातनामक्रमाभिजनान् पूज्यानपि नः स्वतः कथमभिवादयिष्ये। विचिन्त्य। अयं पुनरविरुद्धः

तदायश्यं समर्थयति सहिम्नामिति। एतस्मिन् शिशौ विदग्धैः निपुणैः लोकनिर्वाचनदक्षैरिति यावत् निर्याह्यः निश्चेयः बोद्धुं शक्य इति यावत्, पुनः किन्तु अविदग्धैरनिपुणैर्जनैः न निर्याह्य इत्यर्थः, तथा विनयो नम्रभावः शिशुता बालकत्वं ताभ्यां यत् मौग्ध्यं सरलता तेन मसृणः कोमलः स्नेहोत्पादक इत्यर्थः महिम्नां माहात्म्यानां दयादाक्षिण्यशौर्यवीर्यादिव्यञ्जकमहापुरुषभावानामित्यर्थः अतिशय आधिक्यं वर्त्तत इति शेषः। अतएव परिलघुर्नितान्तक्षुद्रोऽपि अयस्कान्तस्य लौहाकर्षकपदार्थविशेषस्य ( चुम्बक पाथर इति ख्यातस्य ) शकलः खण्डः यद्वत् यथा अयोधातुं लौहं हरति आकृष्य नयति, तद्वत् बलवान् विशालः सम्मोदः एतद्बालकदर्शनजनितानन्दः मे मम स्थिरमपि योगाभ्यासेन नियतमपि मनः हरत्येव आकर्षत्येव। मादृशयोगिनोऽपि मनोहरणादनिर्वचनीय आश्चर्य एवायं बालक इति भावः।

अत्र प्रथमपादे विनयशिशुतामौग्ध्यरूपाणां गुणानां यौगपद्यात् समुच्चयः, द्वितीयपादे शाब्दी परिसंख्या, द्वितीयार्द्धे च श्रौती उपमा, एतेषां परस्परनिरपेक्षस्थितेः संसृष्टिरलङ्कारः। तथा मौग्ध्यं त्यत्र दुःश्रवत्वदोषः, स च 'विनयशिशुभावार्जवसृदु'रितिपाठेन समाधेयः।

"मसृणः।...अकर्कशः।" "विदग्धः।...निपुण"इति च शब्दकल्पद्रुमः।

"भित्तं शकल खण्डं वा"इत्यमरः।

शङ्कः पाण्डर एवेत्यादिवत् हरत्येवेति एवशब्दस्य अयोगव्यवच्छापनार्थत्वान्न अनियमे नियमाख्यदोषः।

शिखरिणी वृत्तं ॥ २१ ॥

( ग ) प्रविश्येति। नोऽस्माकं पूज्यानपि वृद्धत्वदर्शनात् पूजनीयतया अभिवादन-

( १ ) सम्मोह इति विभिन्नः पाठः।

प्रकार इति वृद्धेभ्यः श्रूयते। सविनयमुपसृत्य। एष वो लवस्य शिरसा प्रणामपर्य्यायः। (ग)

अरुन्धतीजनकौ। कल्याणिन्! आयूष्मान् भूयाः। (घ)

कौश०। जाद! चिरं जीव। (ङ) (१)

अरु०। एहि वत्स! इति लवमुत्सङ्गे कृत्वा स्वगतं। (२) दिष्ट्या न केवलमुत्सङ्गश्चिरान्मनोरथो मे सम्पूर्णः। (च)

---

(ङ) जात! चिरं जीव।

योग्यानपि। नाम नामधेयं, क्रमः पौर्वापर्यं, अभिजनः कुलञ्च ते, अज्ञाता अविदिता नामक्रमाभिजना येषां तान्, एतान् वृद्धानित्यर्थः। स्वतः स्वयं कथमभिवादयिष्ये प्रणमामि। एतेषां मध्ये कः खलु अधिको गुरुः, को वा ततोन्यून इति प्रणामविषये गुरुत्वपौर्वापर्य्यं न जानामि; येन तदनुसारेणाभिवादनं स्यात् नवा नाम जानामि, येन शर्म्मवर्म्मान्तनामज्ञानेन ब्राह्मणक्षत्रियनिश्चयात् तत्क्रमेण नमस्कारः स्यात्; नवा कुलं जानाति, येन प्रधानकौलीन्यानुसारेणापि प्रणामः सम्भवेत्; आत्मबुद्धिनिश्चित-क्रमानुसारेण नमस्कारे तु वैपरीत्यस्यापि सम्भवात् मूर्खता प्रकाशने तदेव किं करोमीति भावः। पुनः किन्तु, अयं मनसा निश्चीयमानः प्रकारः कल्पः रीतिरिति यावत्, अविरुद्धः लोके शास्त्रे च अनिन्दनीय इत्यर्थः। वो युष्माकं, प्रणामपर्य्यायः पर्य्यायेण नमस्कारः पूज्यताक्रमेण अभिवादनमिति यावत्। नमस्काररीतयो मनुसंहितादौ द्रष्टव्याः।

(घ) अरु इति। आयुष्मान् प्रशस्तायुर्दीर्घायुरित्यर्थः।

(ङ) कौशीति। जात सन्तान पुत्रतुल्येत्यर्थः।

(च) अरु इति। दिष्ट्या भाग्येन। उत्सङ्गः क्रोड़ः। मनोरथः सीतायाः पुत्रं क्रोड़े करिष्यामीत्यभिलाषः।

(१) ताद! मे चिरं जीव इति पाठभेदः। (२) उत्सङ्गे कृत्वा अपवार्य्य। क्रोड़े कृत्वा। उत्सङ्गे गृहीत्वा। इति त्रयः पाठभेदाः।

क्रोड़े। जाद ! इदोवि दाव एहि। उत्सङ्गे कृत्वा। (१) अम्महे ! ण केवलं दरविअसन्तणीलुप्पलसामलुसदेण देह-बन्धेण कवलिदारविन्दकेसरकसाअकण्ठकलहंसणिणाद-दीहरदीहरेण सरेण अ रामभद्दमणुहरदि, णं कठिण (२) कमलगब्भपक्खलो सरीअप्फंसोवि तादिसो ज्जेव वच्छस्स।

(छ) जात ! इतोऽपि तावदेहि। अहो ! न केवलं दरविकसन्नीलोत्पल-श्यामलोन्नतेन देहबन्धेन कवलितारविन्दकेसरकषायकण्ठकलहंसनिनाददीर्घदीर्घेण स्वरेण च रामभद्रमनुहरति, ननु कठिनकमलगर्भपक्ष्मलः शरीरस्पर्शोऽपि तादृश एव वत्सस्य।

---

(छ) क्रोड़ेति। इतोऽपि मम क्रोड़ेऽपि। केवलमस्या एव क्रोड़े स्थातव्य-मिति नास्ति नियमः, ममाप्युत्सङ्गे किञ्चिदेहीति भावार्थः। उत्सङ्गे कृत्वा क्रोड़े स्थापयित्वा।

दरं अल्पं विकसत् प्रस्फुटत् यत् नीलोत्पलं इन्दीवरं तद्वत् श्यामलः श्यामवर्णः, उन्नतः लम्बमानश्च तेन तथोक्तेन देहबन्धेन शरीरघटनेन अयं बालकः केवलं रामभद्रमनुहरति इति न ; अपितु, कवलिताः मुखमध्ये प्रवेशिता, ये अरबिन्दकेशराः पद्मकिञ्जल्का स्तैः कषायोमधुरः सुश्राव्य इति यावत् कण्ठः स्वरो यस्य स तथोक्तः, यः कलहंसः मधुरास्फुटध्वनिकारी राजहंसः तस्य निनादः शब्द इव दीर्घदीर्घो दीर्घप्रकारः तेन उच्चैस्स्वरेणेत्यर्थः स्वरेण कण्ठध्वनिना च रामभद्रं अनुहरति अनुकरोति।

अत्र लुप्तोपमाद्वयं।

"दर (व्य) ईषदर्थः।" "कषायः (पुं) सुरभिः"। "कण्ठः (पुं)...ध्वनिः।" इति शब्दकल्पद्रुमः। सौरभार्थकोपि कषायशब्दोऽत्र माधुर्य्यार्थे लाक्षणिकः।

(१) क्रोड़े कृत्वा। उत्सङ्गे गृहीत्वा। इति विभिन्नौ पाठौ।

(२) कठोरेति पाठान्तरं।

जाद ! (१) पेक्खामि दाव दे मुहचन्दम् । (२) चिबुकमुन्नमय्य निरूप्य सबाष्पाकूतम् । राएसि ! किंण पेक्खसि, णिउणं णिरूविज्जमाणं से मुहं वच्छाए मुहचन्देण संवददि ज्जेव । (झ)

जन । पश्यामि सखि ! पश्यामि । (ञ)

जात ! प्रेक्षे तावत्ते मुखचन्द्रं । राजर्षे ! किं न प्रेक्षसे, निपुणं निरूप्यमाणं अस्य मुखं वत्साया मुखचन्द्रेण संवदति एव ।

कवलो ग्रासः कृत इतीनन्तात् कवलशब्दात् कर्म्मणि क्तः ।

नन्विव्यवधारणे । कठिनः पूर्णावयवत्वात् दृढ़ः यः कमलस्य पद्मस्य गर्भः बीजकोषः (पोखल, चाका इत्यादिप्रसिद्धः) तद्वत् पक्ष्मल कठिनकोमलः बीरत्वव्यञ्जक इति भावः । तादृश एव रामभद्रतुल्य एव ।

अत्रापि लुप्तोपमाऽलङ्कारः ।

द्वितीयं जातेत्यादिवाक्यं वात्सल्यानुनयप्रार्थनाव्यञ्जकं ।

चिबुकं अधरनिम्नभागं, उन्नमय्य उत्तोल्य, बाष्पेण आनन्दाश्रुणा आकूतेन अभिप्रायेण अभिप्रायव्यञ्जकभङ्गिविशेषेण सह वर्त्तत इति सबाष्पाकूतं पुनराहेत्यन्वयः ।

अस्य बालकस्य मुखं निपुणं सनैपुण्यं सूक्ष्मरूपेणेति यावत् निरूप्यमाणं अवलोक्यमानं सत् वत्सायाः सीतायाः मुखचन्द्रेण सह संवदति एव आकृत्या सम्मिलतीत्यर्थः, नतु किञ्चिद्वैषम्यं यातीतीव शब्दार्थः ।

अत्र निपुणशब्दः सनैपुण्यार्थे लाक्षणिकः ।

(ञ) जनेति । पश्यामि पश्यामीति अवधारणार्थे द्विरुक्तिः । पश्यामि एवेत्यर्थः ।

(१) जीव जाद इति भिन्नः पाठः । (२) मुहं इति क्वचित् पाठः ।

कौश। अम्मो! उम्मत्तीभूदं विअ मे हिअअं किम्पि चिन्तअन्तो वहु विप्पलवदि। (भ)

जन। निरूप्य। (ञ)

वत्सायाश्च रघूद्वहस्य च शिशावस्मिन्नभिव्यज्यते
सम्पूर्णप्रतिविम्बितेव(१)निखिला सैवाकृतिः सा द्युतिः।

---

(भ) अहो! उन्मत्तीभूतमिव मे हृदयं किमपि चिन्तयत् बहु विप्रलपति।

---

(भ) कौशेति। मे मम हृदयं उन्मत्तीभूतमिव अस्मिन् बालके सीतारामयोराकृतिसौसादृश्यदर्शनात् उन्मादग्रस्तमिव सत् किमपि अनिर्वचनीयं चिन्तयत् बहु नानाप्रकारं विप्रलपति विशेषेणासम्बद्धं ब्रवीति। सीता जीवति, तस्या एवायं पुत्र इत्यादिकं प्रकाशयतीति भावः।

(ञ) जनेति। निरूप्य विशेषेणावलोक्येत्यर्थः।

वत्साया इति। अस्मिन् शिशौ वत्सायाः सीतायाश्च, रघूद्वहस्य रघुवंशधुरन्धरस्य रामचन्द्रस्य च निखिला समग्रा सैवाकृतिः तत्सदृश एवाकारः, सा द्युतिः तत्सदृश्येव देहकान्तिः सम्पूर्णं अविकलं यथा स्यात्तथा प्रतिबिम्बितेव प्रतिफलितेव सती अभिव्यज्यते प्रकाशते। किञ्च सा वाणी तत्सदृशमेव वाक्यं, स एव विनयः तदनुरूप एव नम्रभावः, तथा असौ स एव सीतारामतुल्य एव सहजः स्वाभाविकः पुण्यानुभावः पवित्रो देहप्रभावः अभिव्यज्यत इत्यनेनान्वयः। तर्हि किं सीतारामयोरेवायं पुत्रः? तदपि न, बहुकालमेव सीताया अभावात्; हन्त! तदियं दुराशैवेत्याह हाहेति।

हा हा दैव अदृष्ट! पारिप्लवं सीतारामसमानाकृतिरयं बालकः कस्य पुत्र इति निर्णेतुमसामर्थ्यात् चञ्चलीभूतं मम मनः किं कथं केन हेतुनेत्यर्थः उत्पथैः असम्भवकल्पनामार्गैः धावति द्रुतं गच्छति। सीतायाः प्रागेवाभावात् सीतापुत्रोऽयमित्याशा दुराशैवेति भावः।

---

(१) सम्पूर्णप्रतिबिम्बतेव इति सम्पूर्णप्रतिबिम्बितेव इति च पाठान्तरं।

सा वाणी, विनयः स एव, सहजः पुण्यानुभावोऽप्यसौ,
हा हा दैव ! किमुत्पथैर्मम मनःपारिप्लवं धावति ॥२२॥

कौश। अत्थि दे मादा, सुमरसि वा तादं ?। (ट)

लवः। नहि नहि। (ठ)

कौश। तदो कस्स तुमं ?। (ड)

लवः। भगवतो वाल्मीकेः। (ढ)

(ट) अस्ति ते माता, स्मरसि वा तातम् ?।

(ड) ततः कस्य त्वम् ?।

अत्र अभिव्यज्यत इत्येकया क्रियया आकृति-द्युति-वाणी-विनय-पुण्यानुभावानां कर्त्तृतया अभिसम्बन्धात् तुल्ययोगितालङ्कारः। तथा सैवाकृतिः तत्सदृश्येवाकृतिरित्येवं सर्वत्र सादृश्याक्षेपात् असम्भवद्वस्तुसम्बन्धरूपाः पञ्च निदर्शनाः, तथा उत्पथैरिति भङ्ग्या गम्यस्य सीताया अभावस्याभिधानात् पर्य्यायोक्तञ्च एतेषामलङ्काराणामङ्गाङ्गिभावेन सङ्करः। एवशब्दस्य सा द्युतिरित्यादौ सर्वत्रानुषङ्गेनान्वयान्न नियमे अनियमाख्यदोषः।

रघुवंशे एतदनुरूपः श्लोको यथा—"रूपं तदोजस्वि तदेव वीर्य्य"मित्यादि।

"अनुभावः प्रभावेऽपि।" "चञ्चलं तरलञ्चैव पारिप्लवपरिप्लवे" इति चामरः।

अभिव्यज्यत इति कर्म्मकर्त्तरि प्रत्ययः।

शार्दूलविक्रीडितं वृत्तम् ॥ २२ ॥

(ट) कौशेति। स्मरसि वा तातमिति पितुरस्तित्वस्यैव भङ्ग्यन्तरेण प्रश्नः।

(ठ) लव इति। नहि नहीत्यवधारणे द्विरुक्तिः। माता नास्ति, तातञ्च न स्मरामीत्यर्थः।

(ड) कौशेति। तत स्तदा मातापित्रोरसत्त्व इत्यर्थः, कस्य त्वं कस्य तत्त्वावधानेन रक्षितस्त्वं इत्यर्थः।

(ढ) लव इति। भगवतो वाल्मीके स्तत्त्वावधानेन रक्षितोऽस्मीति वाक्यशेषः।

कौश। अइ जाद! कहिदव्वं कहेहि। (ण)

लवः। एतावदेव जानामि। (त)

नेपथ्ये। भो भोः सैनिकाः! एष खलु कुमारश्चन्द्रकेतुराज्ञापयति, न केनचिदाश्रमाभ्यर्णभूमिराक्रमितव्येति। (थ)

अरुन्धतीजनकौ। अये! मेध्याश्वरक्षाप्रसङ्गादुपागतोवत्सश्चन्द्रकेतुरद्य द्रष्टव्य इत्यहो सुदिवसः। (१) (द)

(ण) अयि जात! कथयितव्यं कथय।

(ण) कौशेति। कथयितव्यं यदस्ति तत्कथयेत्यर्थः, नतु गोपयेति भावः।

(त) लव इति। एतावदेव जानामि, नतु एतदतिरिक्तं मातापितृविषयकं किमपि जानामीति भावः।

(थ) नेपथ्य इति। केनचित् केनापि जनेन आश्रमस्य वाल्मीकेस्तपोवनस्य अभ्यर्णभूमिः निकटवर्त्ति स्थानं। तरुलताविनाशादिना तपोवनक्षतिनिवारणार्थं मुनीन् प्रति सम्मानप्रदर्शनार्थञ्च उक्तिरियं।

"उपकण्ठान्तिकाभ्यर्णा" इत्यमरः।

(द) अरु इति। अये इति सन्निहितजनसम्बोधनं। मेध्यः हिंसनीयः अश्वमेधयज्ञे छेदनीय इति यावत् योऽश्वस्तस्य स्वेच्छया विचरत इत्यर्थः रक्षाप्रसङ्गात् अपराक्रमणकारिजननिवारणेन पालनार्थमित्यर्थः। द्रष्टव्यः अस्माभिरिति शेषः। इति हेतोः, अहो प्रशस्तः अयं सुदिवसः शुभदिनं। यत्र प्रियजनदर्शनादिना महानानन्दो भवेत् तत् शुभदिनमेवेति भावः।

"अहो। (व्य)...प्रशंसा" इति शब्दकल्पद्रुमः।

---

(१) द्रष्टव्यः, अहो सुदिवसः। इति पाठान्तरं।

कौश। वच्छलक्खणस्स पुत्तको आणवेदित्ति अमिअविन्दु-सुन्दराइं अक्खराइं सुणीअन्ति। (ध)

लवः। आर्य्य! क एष चन्द्रकेतुर्नाम। (न)

जन। जानासि रामलक्ष्मणौ दाशरथी ?। (प)

लवः। एताविव (१) रामायणकथापुरुषौ ?। (फ)

जन। अथकिम्। (२) (ब)

(घ) वत्सलक्ष्मणस्य पुत्रक आज्ञापयतीति अमृतविन्दुसुन्दराणि अक्षराणि श्रूयन्ते।

(ध) कौशेति। अमृतस्य विन्दवः कणा इव सुन्दराणि मधुराणि श्रुतिसुख-कराणीत्यर्थः, अक्षराणि वचनानि। पौत्रस्याप्याधिपत्यश्रवणे कस्य न सुखं जायते इति भावः। अत लुप्तोपमाऽलङ्कारः।

(न) लव इति। चन्द्रकेतुर्नाम चन्द्रकेतुरिति नाम्ना प्रसिद्धः।

(प) जनेति। दशरथस्यापत्ये पुमांसाविति दाशरथी। काकुवशात् प्रश्नो व्यज्यते, जानासि किमित्यर्थः।

(फ) लव इति। एताविव दाशरथी एव न तु अपराविव्येवशब्दार्थः, रामलक्ष्मणौ रामायणकथायाः वाल्मीकिकृतरामायणनामकाव्यानस्य पुरुषौ प्रधानपात्रभूतौ किमित्यर्थः। अत्रापि काकुवशात् प्रश्नो व्यज्यते।

(ब) जनेति। अथकिमिति स्वीकारसूचकमव्ययं। (ह्याँ इति वङ्गभाषा। और क्या इति हिन्दी भाषा)।

(१) ताविवेति पाठभेदः।

(२) तत् कथं न जानासि लक्ष्मणस्यायमात्मजश्चन्द्रकेतुरिति विभिन्नः पाठः, किन्त्वेतत्पाठे तौ कथं न जानासीति परवाक्यं नास्ति।

लवः। तौ कथं न जानामि। (भ)

जन। तस्य लक्ष्मणस्यायमात्मजश्चन्द्रकेतुः। (म)

लवः। ऊर्म्मिलापुत्रस्तर्हि मैथिलस्य राजर्षेर्दौहित्रः। (य)

अरु। विहस्य। आविष्कृतं कथाप्रावीण्यं वत्सेन। (१) (र)

जन। विचिन्त्य। यदि त्वमीदृशः कथायामभिज्ञस्तद् ब्रूहि तावत्, पृच्छामस्तेषां दशरथात्मजानां किन्नामधेयान्यपत्यानि केषु केषु दारेषु प्रसूतानि। (२) (ल)

---

(भ) लव इति। तौ रामलक्ष्मणौ। अतीवप्रथितत्वात् अधीतरामायणाख्यानस्य प्रधानपात्रत्वाच्च जानाम्येवेति भावः।

(म) जनेति। तस्य प्रथितनाम्नः। आत्मजः पुत्रः।

(य) लव इति। तर्हि चन्द्रकेतोर्लक्ष्मणस्यात्मजत्वे सति स चन्द्रकेतुरित्यर्थः, ऊर्म्मिलाया स्तदाख्य लक्ष्मणभार्य्यायाः पुत्रः लक्ष्मणस्य दारान्तराश्रवणादितिभावः, मैथिलस्य मिथिलानगरीपतेः राजर्षेर्जनकस्य।

(र) अरु इति। वत्सेन लवेन, कथाया रामायणाख्यानस्य प्रावीण्यं अभिज्ञत्वं, आविष्कृतं प्रकटितं,चन्द्रकेतोर्मातृपितृमातामहानां यथावदुल्लेखादिति भावः। एतेन बालकोऽयमतीव मेधावीत्याश्चर्य्यमिति वस्तुना वस्तुध्वनिः।

(ल) जनेति। किं नामधेयं नाम येषां तानि, अपत्यानि सन्तानाः, दारेषु भार्य्यासु, प्रसूतानि उत्पन्नानि। सूधातोरकर्म्मकत्वविवक्षया कर्त्तरि क्तः। यदि बालकोऽयं दशरथात्मजानामपत्यविवरणप्रसङ्गेन 'रामात् सीतायामुत्पन्नोऽह'मिति वदेत् तदा अनायासेनैव ज्ञातव्यविज्ञानं स्यादित्यभिप्रायेणायं प्रश्नः।

(१) कुमारेणेति पाठान्तरं।

(२) कस्मिंश्चित् पुस्तके केषु केष्विति द्विरुक्ति र्नास्ति।

लवः। नायं कथाप्रविभागोऽस्माभिरन्येन वा श्रुतपूर्वः। (व)

जन। किं न प्रणीत एव कविना?। (श)

लवः। प्रणीतो न तु प्रकाशितः। तस्यैव खलु कोऽप्येकदेशः सन्दर्भान्तरेण रसवानभिनेयार्थः कृतः, तच्च स्वहस्तलिखितं मुनिर्भगवान् व्यसृजद्भरतस्य मुनेस्तौर्य्यत्रिकसूत्रकारस्य। (ष)

---

(व) लव इति। अयं भवता पृच्छ्यमानः रामादीनामपत्यविवरणरूपः कथाप्रविभागः आख्यानांशः। अन्येन मद्भिन्नजनेन। अस्माभिः साक्षात् न श्रुतः, अन्यस्यापि श्रवणाभावात् परम्परयापि न श्रुत इति नोत्तरं दातुमस्य समर्थ इति भावः।

(श) जनेति। कविना वाल्मीकिना, प्रणीतो विरचितः। किम्वा प्रणीत एव न तु त्वया श्रुत इत्येवशब्दार्थः।

(ष) लव इति। प्रकाशितः समक्षं नीतः श्रुतिविषयं प्रापितो वा। तस्यैव रामादीनामपत्यविवरणांशस्यैव नत्वन्यस्येत्येवशब्दार्थः एकदेशः अवान्तरांशः केवलरामसन्ततिविवरणांश इत्यर्थः इति बोध्यं सन्दर्भान्तरेण अन्येन केनचित् प्रबन्धेन अश्वमेधविवरणेन सहेत्यर्थ इति ज्ञेयं, प्रचुरकारुणाद्भुतरसान्वितः अभिनेयः अभिनययोग्यः अर्थः वस्तु स्वरूपमिति यावत् यस्य स अभिनेयार्थः किमप्येकं दृश्यकाव्यमित्यर्थः कृतः। आद्योपान्तमेव रामचरितमादाय रामायणाभिधानं किमपि श्रव्यं महाकाव्यमुपनिबद्धं, अधिकन्तु तदन्तर्गतं सीतानिर्वासनादिपुनःसंयोगान्तमंशमादाय किमपि दृश्यकाव्यं प्रणीतमिति निष्कर्षस्त्ववबोद्धव्यः। इदन्तु अस्यैव नाटकस्य सप्तमाङ्कानुसारेणोक्तं रामायणे तु अन्यथा द्रष्टव्यं। मुनिः वाल्मीकिः। स्वहस्तलिखितं नतु शिष्यादिनेत्यर्थः। एतेन तदंशस्य गोपनीयत्वं व्यज्यते। तौर्य्यत्रिकस्य नृत्यगीतवाद्यस्य सूत्रकारः व्यवस्थापकग्रन्थकारस्तस्य भरतस्य तदाख्यस्य मुनेः समीप इत्यर्थः व्यसृजत् प्रेरितवान्।

"तौर्य्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रय"मित्यमरः। "तूर्य्यं मुरजादि तत्र भवं तौर्य्यं। तौर्य्योपलक्षितं त्रिकमिति तौर्य्यत्रिक"मित्यमरटीकायां महेश्वरः।

जन। किमर्थम् ?। (ग)

लवः। स किल भगवान् भरतस्तमप्सरोभिः प्रयोजयिष्यतीति। (ङ)

जन। सर्वमिदमस्माकमाकूतकरम्। (च) (१)

लवः। महती पुनस्तस्मिन् भगवतोवाल्मीकेरास्था, केषाञ्चिदन्तेवासितां हस्तेन तत्पुस्तकं भरताश्रमं प्रति प्रेषितम् (२)। तेषामानुयात्रिकश्चापपाणिः प्रमादापनोदनार्थं (३) अस्मद्भ्राता प्रेषितः। (क)

(ग) जनेति। किमर्थमिति व्यसृजदितिक्रियाविशेषणं।

(ङ) लव इति। तमेकदेशं। अप्सरोभिरभिनेत्रीभिरित्यर्थः। प्रयोजयिष्यति अभिनाययिष्यति, इति हेतोर्व्यसृजदित्यन्वयः।

(च) जनेति। इदं त्वयोक्तं. सर्वं तदंशस्य दृश्यकाव्यरूपेण विरचनं स्वहस्तेन लेखनं भरतान्तिके प्रेरणञ्चेत्यर्थः। आकूतकरं कौतुकजनकं। तत्र कस्यापि महाद्भुतस्य स्थितिसम्भवादिति भावः।

(क) लव इति। तस्मिन् गुते दृश्यप्रबन्धे। आस्था यत्न आदर इति यावत्। महती आस्था इति कथमवगतमित्याह केषाञ्चिदिति। अन्तेवासिनां छात्राणाम्। अनु पश्चात् यात्रायां गमने नियुक्त इत्यानुयात्रिकः अनुगामीत्यर्थः। चापपाणिः कार्म्मुकहस्तः। प्रमादस्य अनवधानतायाः अनवधानताजन्यविपत्तेरित्यर्थः अपनोदनार्थं

(१) तत् सर्वमस्माकमिदमाकूतकरमिति पाठान्तरं।

(२) कस्मिंश्चित् पुस्तके 'प्रति' शब्दो नास्ति।

(३) अप्रमादार्थमिति पाठान्तरं।

कौश । जाद ! भादावि दे अत्थि ? । (ख)

लवः । अस्ति, आर्य्यः कुशो नाम । (ग)

कौश । जेट्ठोत्ति भणिदं होदि । (घ)

लवः । एवमेतत्, प्रसवक्रमेण स किल ज्यायानिति । (ङ)

जन । किं यमजावायुष्मन्तौ ? । (च)

लवः । अथ किम् । (छ)

(ख) जात ! भ्रातापि ते अस्ति ? ।

(घ) जेष्ठ इति भणितं भवति ? ।

---

दूरीकरणार्थं दस्युतस्करहिंस्रभयनिवारणार्थमित्यर्थः । चापपाणिरित्यनेन प्रमादापनोदनार्थमित्यनेन च भ्रातुर्वीरत्वविस्मयकारित्वप्रकाशादमीषां वृत्तान्तज्ञानं प्रति कौतुकं वर्द्धितं ।

"आख्यानीयकयोराख्ये"त्यमरः ।

(ग) लव इति । आर्य्यः पूज्यः । एतेन ज्येष्ठत्वं व्यज्यते ।

(घ) कोशेति । ज्येष्ठ इति भणितं उक्तं भवति, स किं त्वत्तो ज्येष्ठ इत्यर्थः ।

(ङ) लव इति । प्रसवस्य क्रमेण पौर्वापर्य्येण स कुशः ज्यायान् ज्येष्ठः । इति शब्दो वाक्यसमाप्तौ । यमजयोः प्राक्प्रसूतस्य ज्येष्ठत्वमाह देवलः ।

"वह्निर्वर्णेषु चारित्वात् यमयोः पूर्वजन्मतः ।
यस्य जातस्य यमयोः पश्यन्ति प्रथमं मुखं ।
सन्तानः पितरश्चैव तस्मिन् ज्येष्ठ्यं प्रतिष्ठितं ।"

"जन्मप्राथम्यात् ज्यैष्ठं यमजयोर्न तु निषेकप्राथम्या"दिति स्मार्त्तश्च ।

(च) जनेति । आयुष्मन्तौ युवां किं यमजौ युग्मजातौ ।

(छ) लव इति । अथ किं सत्यमित्यर्थः । कुशलवेति नामकारणं तयोर्यमजत्वञ्चाह रामायणम् ।

जन। कथय, कथाप्रबन्धस्य कीदृशः पर्य्यन्तः। (ज)

लवः। अलीकपौरप्रवादोद्विग्नेन राज्ञा निर्वासितां देवयजनसम्भवां सीतादेवीमासन्नप्रसववेदनामेकाकिनीमरण्ये परित्यज्य लक्ष्मणः प्रतिनिवृत्त इति। (झ)

"यस्तयोः प्रथमं जातः स कुशैर्म्मन्त्रसंस्कृतैः।
निर्म्मार्जनीयो नाम्ना हि भविता कुश इत्यसौ॥
यश्चावरज एवासीत् लवनेन समाहितः।
निर्म्मार्जनीयो वृद्धाभिर्नाम्ना स भविता लवः॥
एवं कुशलवौ नाम्ना यमौ तौ संबभूवतुः।
भगवत्कृतनामानौ सुखिनावचर्यौ च तौ॥"

(ज) जनेति। कथाप्रबन्धस्य रामायणाख्यानसन्दर्भस्य पर्य्यन्तः शेषभागः। यदि च 'सीताया अपत्यं जातं, तच्च एवमेव परिपालितं परिवर्द्धितञ्च' इत्यंशोऽपि तत्कथापर्य्यन्तमध्ये परिगणितः स्यात्, तदापि तत्कथनेन ज्ञातव्यज्ञानं स्यादित्यभिप्रायेणेयमप्युक्तिरिति बोध्यं।

(झ) लव इति। अलीकः अयथार्थो यः पौराणां प्रवादोऽपवादः तेन उद्विग्नेन अस्थिरचित्तेन कार्य्याकार्य्यविवेकशून्यमनसेत्यर्थः। राज्ञा रामचन्द्रेण निर्वासितां परिवर्जितं। आसन्ना सन्निहिता उपस्थितप्रायेत्यर्थः प्रसववेदना यस्यास्ताम्। परित्यज्य रथादवतार्य्य। प्रतिनिवृत्तः पुनरयोध्यां गतः। इति एष कथाप्रबन्धस्य पर्य्यन्त इत्यर्थः।

"अलीकन्त्वप्रियेऽनृते" इत्यमरः।

कौश। हा वच्छे! मुद्धचन्दमुहि! को दाणिं दे कुसुमभूदस्स सरीरस्स(१) देव्वदुव्विलासपरिणामो एअलिआए णिवड़िदो। (ञ)

जन। हा वत्से!।

नूनं त्वया परिभवञ्च नवञ्च घोरं
ताञ्च व्यथां प्रसवकालकृता मवाप्य।

(ञ) हा वत्से! मुग्धचन्द्रमुखि! क इदानीं ते कुसुमभूतस्य शरीरस्य दैवदुर्विलासपरिणाम एकलिकाया निपतितः।

(ञ) कौशेति। मुग्धः सुन्दरो यश्चन्द्रः स इव मुखं यस्यास्तत्सम्बोधनं। कुसुमभूतस्य पुष्पतुल्यस्य अतीवकोमलस्येत्यर्थः। कोऽनिर्वचनीयः अतीवभयङ्कर इत्यर्थः। दैवस्य नियतेः दुष्टो दुःखदायी विलासो व्यवहारो यस्मिन् सचासौ परिणामः शेषावस्था चेति स तथोक्तः। जगति सुखं दुःखं वा दैवस्यैव कार्य्यं लोकस्तु तत्र निमित्तमात्रमितिभावः। एकलिकाया एकाकिन्याः, सहायसत्त्वे दुःखं कथमपि सह्यं स्यादितिभावः। निपतित उपस्थित आसीदिति शेषः। "भूतं (त्रि) सदृशं" "एकलः (त्रि) एकाकी। एकला इतिभाषि"तिच शब्दकल्पद्रुमः।

एकलिकेति एकलाशब्दादनुकम्पायां कप्रत्ययः।

नूनमिति। हा वत्से! त्वया नवं नूतनं इतः पूर्वं कदापि न त्वया ईदृशः परिभवोऽनुभूत इति भावः, घोरं दारुणञ्च स्त्रीणां चरित्रदोषापवादादधिको भयङ्करस्य अपवादो नास्तीति भावः, परिभवं निर्वासनात् तिरस्कारं अपमानमित्यर्थः, तथा प्रसवकालीन कृतां तां सर्वत्र प्रसिद्धां व्यथां वेदनाञ्च अवाप्य अनुभूय क्रव्यादगणेषु मांसभोजिश्वापदजन्तुसमूहेषु परितः सर्वतः परिवारयत्सु परिवेष्टमानेषु सत्सु सन्त्रस्तया अतीव-

(१) शरीरकुसुमस्य इति पाठान्तरं।

क्रव्याद्गणेषु परितः परिवारयत्सु
सन्त्रस्तया शरणमित्यसकृत् स्मृतोऽस्मि ॥ २३ ॥

लवः। अरुन्धतीं प्रति। आर्य्ये! कावेतौ?!

अरु। इयं कौशल्या, अयं जनकः।

लवः। सबहुमानखेदकौतुकं पश्यति। (ट)

भीतया मया, अस्मि अहं शरणं रक्षिता इति कृत्वा भयेषु नितान्तवात्सल्येन पित्रा-दैरेव प्राथमिकस्मरणस्य सार्वलौकिकत्वादितिभावः, नूनं निश्चितं असकृत् वारं वारं स्मृतः चिन्तितः अभवमित्यर्थः। हा पितः! रक्ष रक्ष मां इत्यादि बहुशः क्रन्दितवतीति निष्कर्षः। यद्यपि भयेषु लोके मातापि स्मर्य्यते आहूयते च तथापि सीताया मातुः पृथिव्या जड़त्वेन तत्स्मरणमनर्थकमिति जनकमात्रमेव स्मृतमिति बोध्यं।

पदार्थानां प्रस्तुतानामिति बहुवचनस्याविवक्षितत्वात् अत्र अवाप्त्येकया क्रियया व्यथापरिभवयोः कर्म्मतयाऽभिसम्बन्धात् तुल्ययोगिताऽलङ्कारः। किन्तु नूनशब्दसत्त्वेऽपि नोत्प्रेक्षा, प्रकृतस्य परात्मना सम्भावनाया एव उत्प्रेक्षारूपत्वात्, अत्र तु स्मरणस्यैव वास्तविकत्वेन तादृशसम्भावनाया एवाभावादिति ज्ञेयं। किञ्च तृतीयचरणे परिपरीति सकृत्साम्यात् छेकानुप्रासश्चेति संसृष्टिः। घोरं नवञ्चेति चकारो घोरनवयोः समुच्चये, अपरौ चकारौ तु इतरेतरयोगे; तेन न निरर्थकत्वदोषः।

"क्रव्यात्।...मांसाशिनि त्रि"इति शब्दकल्पद्रुमः। "अस्मीति अहमर्थे अव्ययं" इति मल्लिनाथः। "शरणं गृहरक्षित्रो"रित्यमरः।

वसन्ततिलका वृत्तं ॥ २३ ॥

(ट) लव इति। बहुमानः महापुरुषस्य रामस्य मातृत्वात् श्वशुरत्वाच्च अति-गौरवं, कौशल्याजनकयोर्विषाददर्शनात् खेदो विषादः, रामायणवर्णितमहोदार-चरितयोः कौशल्याजनकयोः साक्षाद्दर्शनात् कौतुकं; तैः सहेति सबहुमानखेद-कौतुकं।

जन। अहो! दुर्म्मर्य्यादता दुरात्मनां पौराणाम्. अहो! रामस्य राज्ञः चिप्रकारिता। (ठ)

एतद्वैशसघोरवज्रपतनं शश्वन्ममोत्पश्यतः
क्रोधस्य ज्वलितुं धगित्यवसरश्चापेन शापेन वा।(क)

---

(ठ) जनेति। अत्राहोशब्दद्वयमसूयार्थे। दुरात्मनां अलीकापवादकारित्वेन पापदूषितचित्तानां पौराणां पुरवासिजनानां दुर्म्मर्य्यादता न्याय्यपथातिक्रमः। जनस्य हि परेषां यथार्थगुणकीर्त्तनमेव न्याय्यं विशेषतस्तु राजादेः, अत्र तु राजमहिष्या एव अलीकापवादकीर्त्तनमतोऽन्याय्यं जातमिति भावः। रामस्य राज्ञः नृपस्य विशेषविवेचनापूर्वकसदसद्विचारानुसारेणैव दण्डविधातुः सत इत्यर्थः चिप्रकारिता शीघ्रकार्य्यकरणं अविमृष्यकारित्वमित्यर्थः। तथा च रामो यदि पौराणामपवादोऽयमयथार्थो यथार्थो वा इति किञ्चिद्विलम्ब्य वृद्धैः सह समालोच्य कर्त्तव्यावधारणमकरिष्यत् तदा कथमपि सीता निर्वासिता नाभविष्यत्, अतएव लोकानामेकमात्रनिग्रहानुग्रहकर्त्तुः राज्ञ ईदृशी चिप्रकारिता सीतानिर्वासनवत् महानर्थकारित्वादतीवदोषावहेति भावः।

"अहो (व्य)···असूया"। "मर्य्यादा (स्त्री) न्याय्यपथस्थितिरि"ति च शब्दकल्पद्रुमः।

दुर्दुष्टा राजमहिष्या एवालीकापवादकारित्वात् मर्य्यादा येषां ते दुर्म्मर्य्यादा स्तेषां भावः दुर्म्मर्य्यादता।

अतः पौराणां रामस्य च दण्डविधानं मया कर्त्तव्यमित्याह एतदिति। एतत् सीतानिर्वासनरूपं यत् वैशसं हिंसा तदेव घोरवज्रपतनं दारुणवज्राघातः, तत् शश्वत् सदा उत्पश्यतः विजानतो मम क्रोधस्य चापेन धनुर्द्वारा शापेन अभिसम्पातद्वारा वा धगिति 'धक्' इति शब्दं कृत्वा ज्वलितुं अवसरः समयः उपस्थित इति शेषः। इदानीमेव अरुन्धतीकौशल्याकञ्चुकिभिरपि अलीकपौरापवादमात्रस्यैव सीतानिर्वासनकारणत्वकथनात् कदलीफलचौर्य्येण प्राणदण्डकरणमिव नितान्ततुच्छकारणात् सीताया निर्वासनं कृतमिति निश्चयो जातः, सुतरामधुनैव अस्त्रेण शापेण वा सपौरं रामं निहन्मीति भावः।

कौश। भअवदि! परित्ताहि परित्ताहि, पसादेहि कुविदं राएसिं। (ड)

अरु। एतद्धि परिभूतानां प्रायश्चित्तं मनस्विनाम्।
राजन्नपत्यं रामस्ते पाल्याश्च कृपणाः प्रजाः ॥२४॥

(ड) भगवति! परित्रायस्व परित्रायस्व, प्रसादय कुपितं राजर्षिं।

अत्र सीताहिंसने वज्रपतनत्वारोपात् निरङ्गं केवलरूपकमलङ्कारः। ज्वलितुमित्यनेन क्रोधस्य वह्निरूपत्वं व्यज्यते।

विशसति हिनस्तीति विशसो हिंसकः पचाद्यच्, विशसस्येदं कार्य्यमिति वैशसं हिंसेति बोध्यं।

क्षत्रियत्वात् चापस्य ऋषित्वाच्च शापस्योक्तिरिति बोध्यं।(क)

(ड) कौशेति। प्रसादय कोपहीनं कुरु इत्यर्थः। तत्प्रसादनमेव परित्राणमिति भावः।

एतदिति। मनस्विनां प्रशस्तमनसां सज्जनानामित्यर्थः परिभूतानां अपमानितानां दुष्कार्य्यकरणात् लोकैस्तिरस्कृतानां सतामित्यर्थः एतद्धि एतदेव ईदृशं पुन र्गुरुजनकर्त्तृकभर्त्सनमेवेत्यर्थः प्रायश्चित्तं दोषक्षालनकारणमित्यर्थः। केनचिन्मनस्विना प्रमादवशात् कस्मिंश्चिदपराधे कृते लोकतिरस्कृतमपि तं यदि पुनर्गुरुजना भर्त्सयन्ति, तदा तदेव तस्य योग्योदण्डो भवति; अतो मिथ्यापौरापवादेन रामेण प्रमादात् सीता निर्वासितेति साधुजनास्ते पौरवर्गश्च निन्दन्त्येव तत्रापि यत् भवन्तोऽपि भर्त्सयन्ति, एतदेव रामस्य पौरवर्गस्य च महान् दण्डो जात इति भावः। विशेषतस्तु, हे राजन्! रामस्ते तव अपत्यं जामातृत्वात् मित्रपुत्रत्वाच्च सन्तानरूपः, तथा प्रजाः पौरजनाः कृपणाः दीनाः क्षुद्रबुद्धय इति यावत् अतएव पाल्या रक्षणीयाः; सुतरां चापेन शापेन वा प्राणदण्डो नोचितः, किन्तु पौराणामलीकापवादापराधः रामस्य च सीतानिर्वासना-

जन। शान्तं वा रघुनन्दने तदुभयं तत् पुत्रभाण्डं हि मे
भूयिष्ठद्विजबालवृद्धविकलस्त्रैणश्च पौरो जनः ॥२५॥

प्रविश्य सम्भ्रान्ता बटवः। कुमार! अश्वोऽश्व इति कोऽपि भूतविशेषो जनपदेषु श्रूयते, सोऽयमधुनाऽस्माभिः प्रत्यक्षीकृतः। (ढ)

पराधो भवता मार्जनीय इति भावः। एतद्व्याख्यानस्य व्याख्यानान्तरस्य च सदसत्त्वं सुधीभिर्विवेचनीयं।

अत्र पूर्वार्द्धे अप्रस्तुतात् मनस्विसामान्यात् प्रस्तुतस्य विशेषरामस्य प्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः रामभर्त्सने प्रायश्चित्तत्वारोपात् निरङ्गं केवलरूपकञ्चतयोरेकाश्रयानुप्रवेशरूपः सङ्करः, द्वितीयार्द्धे च पदार्थहेतुकं काव्यलिङ्गमिति संसृष्टिः।

"पापक्षयमात्रसाधनत्वेन विधिबोधितं कर्म्म प्रायश्चित्त"मिति स्मार्त्ताः। "हि हेताववधारणे"। "कदर्य्ये कृपणक्षुद्रकिम्पचानमितम्पचा" इति चामरः।

पथ्यावक्त्रं वृत्तं ॥ २५ ॥

शान्तमिति। रघुनन्दने रामे तदुभयं चापधारणं शापदानञ्च शान्तं विरतं भवत्विति शेषः, हि यस्मात् तत् राम इत्यर्थः प्रक्रान्तसामानलिङ्गत्वात् क्लीवत्वं पुत्रः पुत्रस्नेहस्तस्य भाण्डं भाजनं। वात्सल्यात् पुत्रसदृशो जनो न नाशयितुं शक्यत इति भावः। तथा पौरो जनः सीताया अलीकापवादप्रवर्त्तयिता पुरवासिवर्गश्च भूयिष्ठाः प्रचुराः द्विजा ब्राह्मणाः, बाला बालकाः, वृद्धाः जरन्तः, विकलाः हीनेन्द्रियाः काणखञ्जादयः स्त्रैणं स्त्रीसमूहश्च यस्मिन् स तथोक्तः, अतः पौरोऽपि तदुभयं शान्तमित्यर्थः। अतएव पौरान्तर्गतब्राह्मणादीनामवध्यत्वात्, साधारणपौरोऽपि नाशयितुं न शक्यत इत्यगत्या क्षमैव क्रियतेति भावः।

अत्र चतुर्थचरणे पदार्थहेतुकं काव्यलिङ्गमलङ्कारः।

ब्राह्मणादीनामवध्यत्वमनुसन्धेयं विस्तरभयादुपेक्षितं।

शार्द्दूलविक्रीड़ितं वृत्तम् ॥ २५ ॥

(ढ) प्रविश्येति। सम्भ्रान्ताः त्वरया व्यग्राः, बटवः ऋषिकुमाराः। अश्वोऽश्व

लवः। अश्वोऽश्व इति पशुसमाम्नाये सांग्रामिके च पठ्यते, तद्ब्रूत कीदृशः। (ग)

बटवः। श्रूयताम्। (त)

पश्चात् पुच्छं वहति विपुलं, तच्च धूनोत्यजस्रं
दीर्घग्रीवः स भवति, खुरा स्तस्य चत्वार एव।

इति वीप्सायां द्विर्वचनं। इति प्रसिद्धः। कोऽपि वनवासिभिरस्माभिरदृष्टपूर्व इत्यर्थः भूतविशेषः प्राणिविशेषः, जनपदेषु प्राकृतलोकालयदेशेषु, श्रूयते लोकपरम्परया शास्त्रेभ्यश्च। प्रत्यचीकृतः चक्षुषेति शेषः।

अश्वस्य ग्राम्यपशुत्वादेव जनपदेष्वित्युक्तं। तथाच पैठीनसिः "गौरविरजोऽश्वोऽश्वतरो गर्द्दभो मनुष्यश्चेति सप्तग्राम्याः पशवः"।

"श्रुधातोः शाब्दबोधे शक्ति"रिति नैयायिकमतानुसारेण 'अश्वोऽश्व इति कोऽपि भूतविशेषः श्रूयते' इति प्रयोगः सङ्गच्छते; अश्वशब्दजन्यं ज्ञानं क्रियत इति तदर्थः। "श्रवणेन्द्रियजन्यप्रत्यक्षे श्रुधातोः शक्ति"रिति मीमांसकमते तु अत्र श्रुधातोस्तादृशशाब्दबोध एव लक्षणेति संक्षेपः।

(ग) लव इति। पशुसमाम्नाये पशुनाम-संग्रहशास्त्रे प्रागुक्तपैठीनसिवचनादौ सांग्रामिके धनुर्वेदादौ युद्धशास्त्रे च। एतेनास्य शास्त्रज्ञानाधिक्यं व्यज्यते।

धनुर्वेद इदानीं दुर्लभ एव, किन्तु तत्संग्राहकं भोजराजकृतयुक्तिकल्पतरुप्रभृति शास्त्रं दृश्यते। तथाच युक्तिकल्पतरौ—

"ये शुद्धवर्णा जववेगयुक्ता अश्रान्तिभाजो बहुभोगिनश्च।
अक्रोधशीलाः समरेऽतिदृष्टा स्ते सात्त्विका भूपतुरङ्गमाः स्युः॥"

पश्चादिति। सः अस्माभिः प्रत्यचीकृतोऽश्वः पश्चात् देहपश्चाद्भागे विपुलं विशालं पुच्छं लाङ्गूलं वहति धारयति, तच्च पुच्छं अजस्रं अविरतं धूनोति कम्पयति, दीर्घा लम्बमाना ग्रीवा गलो यस्य स तथोक्तो भवति, तथा तस्य अश्वस्य चत्वार एव खुराः। तथा शष्पाणि नवतृणानि अत्ति खादति, तथा आम्रस्य चूतफलस्येव मात्रा प्रत्येकं

शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्रमात्रान्
किं व्याख्यातैर्व्रजति स पुनर्दूरमेह्येहि यामः ॥२६॥

इत्युपसृत्याजिने हस्तयोश्चाकर्षन्ति । (त)

लवः । सकौतुकोपरोधविनयम् । आर्य्याः ! पश्यत पश्यत, एभिर्नीतोऽस्मि । इति त्वरितं परिक्रामति । (थ)

परिमाणं येषां तान् आम्रमात्रान् शकृत्पिण्डकान् गूथपिण्डान् प्रकिरति विसृजति । आख्यातैरस्याश्वस्य वर्णनैः किं वा फलं अपि तु किमपि नेत्यर्थः, पुनः किन्तु सः अश्वः दूरं व्रजति वर्णनकालमध्य एव विप्रकृष्टो भवतीत्यर्थः, अतएव एतं हि आगच्छागच्छ यामो गच्छाम एनमवलोकयितुमित्यर्थः ।

अत्र वहतिप्रभृतीनामनेकक्रियाणां सोऽश्व इत्येककर्तृकारकत्वात् दीपकमलङ्कारः, स च उपमाऽर्थापत्तिकाव्यलिङ्गैः सङ्कीर्य्यते । तथा पूर्वापरकर्तृप्रयोगमध्ये 'खुरास्तस्य चत्वार एव' इति सम्बन्धनिर्देशात् प्रक्रमभङ्गदोषः, किञ्च एवशब्दापादानात् अनियमे नियमाख्यदोषश्च, "खुरान् वेदसंख्यान् बिभर्त्ती"ति पाठेन तयोः समाधानं स्यात् ।

ईदृशस्थानविशेषे निवेशवशेन श्रोतॄणामयं श्लोकः परमचमत्कारमावहति । प्रहेलिकावदिममपि प्रायेण पृच्छन्ति च बालकाः ।

मन्दाक्रान्ता वृत्तं ॥ २६ ॥

(त) इतीति । उपसृत्य आसन्नीभूय, अजिने उत्तरीयभूतमृगचर्म्मणि हस्तयोः करयोश्च गृहीत्वा आकर्षन्ति लवं वटव इति शेषः ।

(थ) लव इति । कौतुकं अश्वदर्शनकौतूहलं, उपरोधो बालकानामनुरोधः, विनयो गमनानुमतिप्रार्थनया निर्ब्रीडत्वपरिहारः तैः सह विद्यमानमिति तत् तथोक्तं । आर्य्याः पूज्याः । एभिर्बालकैः नीतोऽस्मि, न त्वहं युष्माननादृत्य स्वेच्छया गच्छामि, अत्र किं ब्रुवन्ति भवन्त इति भावः ॥

अरुन्धतीजनकौ। पूरयतु कुतूहलं वत्सः। (द) (१)

कौश। भअवदि! जाणामि, एदं अणालोअअन्ती ण जीआमि विअ, अदो अस्सदो भविअ पेक्खह्म दाव गच्छमाणं दीहाउं (ध)

अरु। अतिजवेन दूरमतिक्रान्तः स चपलः, कथं दृश्यते(२)। (न)

प्रविश्य कञ्चुकी। भगवान् वाल्मीकिराह, ज्ञातव्यमेतदवसरे भवद्भिरिति। (प)

---

(ध) भगवति! जानामि, एतमनालोकयन्ती न जीवामीव, अतोऽन्यतो भूत्वा पश्यामस्तावद्गच्छन्तं दीर्घायुषम्।

(द) अरु इति। कुतूहलं आत्मनोऽस्यावलोकनकौतुकमित्यर्थः। यातुमिच्छसि याहीति भावः।

(ध) कौशेति। जानामि बुध्ये अनुमानं करोमीति यावत्। एतं बालकं। अन्यतो भूत्वा अन्यत्र गता भूत्वा दर्शनयोग्यस्थाने गत्वेत्यर्थः। दीर्घायुषं चिरायुर्विशिष्टेन बालकं।

(न) अरु इति। चपलः चञ्चलप्रकृतिः स बालकः अतिजवेन महावेगेन दूरं पन्थानं अतिक्रान्तः अतीत्य गतः, अतएव कथं दृश्यते द्रष्टुं शक्यते त्वयेतिशेषः, चक्षुर्विषयातिक्रमादिति भावः।

(प) प्रविश्येति। एतत् 'कस्यायं बालक' इति युष्माभिर्जिज्ञास्यं वृत्तं। अवसरे यथासमये। इति एवं वाक्यं वाल्मीकिराहेत्यर्थः। नैतदिदानीं वक्तव्यमितिभावः।

(१) कौतुकं वत्स इति पाठान्तरं।

(२) कथं दृश्यत इति पाठः पुस्तकान्तरे नास्ति।

जन। अतिगम्भीरमेतत् किमपि भविष्यति। भगत्यव-रुन्धति! सखि कौशल्ये! आर्य्यगृष्टे! स्वयमेव गत्वा भगवन्तं प्राचेतसं पश्यामः। (फ)

इति निष्क्रान्तो वृद्धवर्गः।

वटवः। पश्यतु हि कुमारस्तदाश्चर्य्यम् (व)

लवः। दृष्टमवगतञ्च नूनमाश्वमेधिकोऽयमश्व इति। (भ)

वटवः। कथं ज्ञायते?। (म)

लवः। ननु मूर्खाः! पठितमेव युष्माभिस्तत्काण्डे। किं न पश्यथ, प्रत्येकं शतसंख्याः कवचिनो दण्डिनो निष-

(फ) जनेति। एतत् "कल्याणं पुत्र'इत्यस्मानिर्जिज्ञास्यं वृत्तं विषय इति यावत्, अतिगम्भीरं दुरवगाहं दुर्बोधमित्यर्थः, अतएव किमपि अनिर्वचनीयं। अत्र 'भवतु तावदि'ति वाक्यं मन्तव्यं। स्वयमिति वहुवचनान्तं पदं; स्वयं स्वयमेवेत्यर्थः न तु प्रतिनिधिभिरित्येवशब्दार्थः, तथाच अनादरप्रकाशेन महर्षेर्गौरवहानिः कृता स्यादिति भावः। प्राचेतसं वाल्मीकिं।

(व) वटव इति। कुमारो लवो भवान्। तदाश्चर्य्यं तमद्भुतरूपमश्वमित्यर्थः। योहि यत्प्रथमं पश्यति, स तदाश्चर्य्यमेव मन्यत इति बोध्यं। हिशब्दोऽवधारणे, पश्यत्वेव नतूपेक्षस्वेत्यर्थः।

(भ) लव इति। दृष्टं युष्माभिरुच्यमानं तदाश्चर्य्यं तदश्वरूपमद्भुतं वस्तु अवलोकितं तथा अयमश्वः नूनं निश्चितं अश्वमेधो यज्ञः प्रयोजनमस्येति आश्वमेधिको भवेदित्यर्थः। इति अवगतं वुद्धञ्च मयेति शेषः। नूनमिति भवेदित्यध्याहार्य्यक्रियाया विशेषणं।

(म) वटव इति। कथं केन प्रकारेणेत्यर्थः।

(य) लव इति। तत्काण्डे अश्वमेधपरिपाटीकथनप्रकरणे पठितमेव तथापि अज्ञानामिव पुनः प्रश्नकरणात् मूर्खत्वमिवायातीति भावः। एकानेकान् प्रतीति

ङ्गिणश्च रक्षितारस्तत्प्रायमेवेदमपि दृश्यते. यदीह न प्रत्यय-स्तद्गत्वा पृच्छत। (य)

बटवः। भो भोः! किम्प्रयोजनोऽयमश्वः परिवृतः पर्य्यटति?। (र)

लवः। सस्पृहमात्मगतं। अये! अश्वमेध इति विश्वविजयिनां क्षत्रियाणामूर्जस्वलः सर्वक्षत्रियपरिभावी महानुत्कर्ष-निकषः। (ल) (१)

प्रत्येकं, शतं संख्या येषां ते, कवचं वर्म्म एषामस्तीति कवचिनः असियोद्धारः, दण्डो यष्टिरेषामस्तीति दण्डिनः दण्डयोधिनः, निषङ्गः तूणीरमेषामस्तीति निषङ्गिणो धनुर्द्धराश्च रक्षितारः अश्वस्य रक्षका विद्यन्त इति शेषः तेषां प्रायो वाहुल्यं यत्र तत् तत्प्रायं, इदमपि बलं। अत एवायमश्वमेधीयोऽश्व इति निश्चीयत इति भावः। इह मम वाक्ये न प्रत्ययो न विश्वासो यदि युष्माकमभूदित्यर्थः, तत् तदा, पृच्छत सैन्यान् जिज्ञा-सध्वं ययमित्यर्थः।

"निषङ्गस्त्वी धनुर्द्धरः"। "प्रायोभून्म्यन्तगमने" इति चामरः।

एतेन अन्यऋषिकुमारेभ्यो लवस्य मेधावित्वं व्यज्यते।

(र) बटव इति। भो भोरिति सैन्यसम्बोधने, किं प्रयोजनं यस्य सः, परिवृतः सैन्यैः परिवेष्टितः पर्य्यटति भ्रमति।

(ल) लव इति। स्पृहया अश्वमेधेच्छया सहेति सस्पृहं। लवस्य क्षत्रिय-त्वादादावेव अश्वमेधकरणकामना जाता, तथा च योहि यज्जातीयः, सः अङ्कुर एव तद्भावं व्यनक्तीति बोध्यं। विश्वं भुवनं विजयन्त इति विश्वविजयिन स्तेषां। ऊर्ज्जोबलमस्यातीति ऊर्ज्जस्वलो वलवान् अन्यैरनिरोधनीय इत्यर्थः। सर्वान् क्षत्रियान् परिभवितुं लङ्घयितुं तिरस्कर्त्तुमिति यावत् शीलं यस्य स सर्वक्षत्रियपरिभावी

(१) उत्कर्षनिष्कर्षं इति पाठान्तरं।

नेपथ्ये । अयमश्वः पताकेयमथवा वीरघोषणा ।

सप्तलोकैकवीरस्य दशकण्ठकुलद्विषः ॥ २७ ॥

लवः । सव्यथमिव । अहो ! सन्दीपनान्यक्षराणि । (व)

सकलक्षत्रियपराजयचिह्नभूत इत्यर्थः । उत्कर्षस्य सर्वप्राधान्यस्य निकषः परीक्षास्थान मित्यर्थः । अश्वमेधस्य सार्वभौमानुष्ठेयतया । तत्र क्षत्रियमात्रस्यैव स्पृहा जायत इति भावः । तथाच आपस्तम्बः—

"राजा सार्वभौमोऽश्वमेधेन यजेत नाप्यसार्वभौमः ।"

ऊर्जस्वल इति "ज्योत्स्नादिभ्यो वलच्" इति अस्त्यर्थे वलच् प्रत्ययः ।

स्वर्णपरीक्षकपाषाणे रूढ़स्य निकषशब्दस्यात्र परीक्षकमात्रे उपादानलक्षणा ।

वटुभिर्जिज्ञासिततदर्थं केचिदश्वरक्षकाः सैनिका नेपथ्यादाहुः अयमिति । सप्तसु भूरादिषु लोकेषु भुवनेषु एकः अद्वितीयः वीरः शूरः तस्य, दशकण्ठकुलद्विषः रावण-वंशविध्वंसिनो रामस्येत्यर्थः अयमश्वः अश्वमेधयज्ञीयो घोटकः, तथा इयञ्च पताका जयपत्राङ्किता वैजयन्ती ; अथवा वीरघोषणा अश्वपताकात्मिका रामस्य वीरत्वप्रख्यापन-वाणी ; अयमश्व इयञ्च पताका शास्त्रानुसरणात् सामान्यमात्रं यत्किञ्चित्, किन्तु सप्तलोकमध्ये राम एव सर्वप्रधानो वीर इति घोषणैव मुख्यं प्रयोजनमित्यर्थः ।

अत्र अश्वपताकाभ्यां वीरघोषणाया भेदेऽपि अभेदाध्यवसायादतिशयोक्तिरलङ्कारः । सप्तलोकविजयिनो रावणस्य विजितत्वात् तेषु राम एवाद्वितीयो वीर इति शब्दशक्ति-मूलो वस्तुध्वनिः ।

सप्तलोकानाह अग्निपुराणं—

"भूर्भुवः स्व र्महश्चैव जनश्च तप एव च ।

सत्यलोकश्च सप्तैते लोकास्तु परिकीर्त्तिताः ॥" ॥२७॥

(व) लव इति । व्यथया उक्तोक्तिश्रवणात्मनोवेदनया सहेति सव्यथं । अक्षराणि वर्णाः 'अयमश्व'इत्यादिवाक्यमित्यर्थः सन्दीपनानि उत्तेजकानि कोपोत्-साहवर्द्धकानीति यावत् । "प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया"ति

बटवः। किमुच्यते, प्राज्ञः खलु कुमारः। (श)

लवः। भो भोः! तत्किमक्षत्रिया पृथ्वी? यदेवमुद्धतमुद्घोष्यते। (ष) (१)

नेपथ्ये। अरे! महाराजं प्रति कुतः क्षत्रियाः। (स)

लवः। धिग्जाल्मान्। (ह)

न्यायेन वीरस्य वीरान्तरवीरत्वघोषणाश्रवणे कोपोत्साहयोरुत्तेजनात्स्वभावसिद्ध वेतिभावः। स्वगतवदुक्तिरियं।

(श) बटव इति। किमुच्यते किं वक्तव्यमस्तीत्यर्थः, कुमारः खलु प्राज्ञः सर्वेषामस्माकं मध्ये लव एव विशेषाभिज्ञः, अस्मिन् विषये किं पुनर्वक्तव्यमस्तीति समुदायार्थः। अधीतवैदिकाश्वमेधकाण्डा अपि वयं प्रागिममश्वमवलोकमाना अपि अश्वमेधीयत्वेन न निश्चितवन्तः, किन्तु लवो दर्शनमात्रमेव निश्चितवानिति अस्माकं मध्ये लवस्यैव प्राज्ञतमत्वमव्याहतमेवेति भावः। केचित्तु एभिः सैन्यैः किमुच्यते तद्वयं न बुध्यामहे किन्तु कुमारः प्राज्ञः, तेन स बुध्यत इति भाव इति व्याख्यानमाचक्षते।

(ष) लव इति। यत् यस्मात् एवमीदृशं उद्धतं सदर्पं उद्घोष्यते रामस्य वीरत्वं प्रख्याप्यते, तत् तस्मात् किं पृथ्वी पृथिवी अक्षत्रिया क्षत्रियरहिता वीरशून्येत्यर्थः मन्यते युष्माभिरितिशेषः। पृथिवीयं क्षत्रियवती सुतरां नेदृशं पुनरुद्घोषणीयमिति भावः।

(स) नेपथ्य इति। अरे इति नीचसम्बोधने। महाराजं रामचन्द्रं। तथाच रावणविजयिनो रामचन्द्रस्यान्तिके वीर्य्यविषये रावणविजितविदलितक्षत्रियाणामुल्लेख एव निर्बोधतापरिचय इति भावः।

(ह) लव इति। जाल्मान् असमीक्ष्यकारिणः अविवेचकानिति यावत् युष्मान् 'अरे' इत्यादिवादिनः सैनिकानिति शेषः, धिक् निन्दामि। ये वीराणां बलाबलम-

(१) यदेवमुदीर्य्यत इति पाठान्तरं।

यदि ते सन्ति सन्त्वेव, केयमन्या विभीषिका।
किमुक्तैः, सन्निपत्यैव पताकां वो हराम्यहम् ॥२८॥(१)
भो भो वटवः परिवृत्य लोष्टैरभिघ्नन्तो नयतैनमश्वं।(२)
एष रोहितानां मध्ये वराकश्चरतु। (च)

प्रविश्य सक्रोधदर्पः पुरुषः। धिक् चापलं, किमुक्तवानसि, तीक्ष्ण-

---

परोक्षेव तारतम्यं निर्दिशन्ति, ते निन्दनीया एवेति भावः। "जाल्मोऽसमीक्ष्यकारी स्या"दित्यमरः।

यदीति। ते रामचन्द्राः रावणादिविजयिन इति भावः महावीरत्वेन गौरवाद्बहुवचनं यदि सन्ति तिष्ठन्ति, सन्त्वेव तिष्ठन्तु तावत्। न तेनास्माकं किमप्यायाति याति वेति भावः। किन्तु अन्या का इयं विभीषिका भयप्रदर्शनं, रामस्य महावीरत्वप्रकाशपूर्वकं कथं भयप्रदर्शनं क्रियत इत्यर्थः। न तेन चमां करोमीति भावः। अथवा उक्तैरत्रविषये वागाडम्बरैः किं प्रयोजनमस्ति, अपि तु किमपि नेत्यर्थः, कर्त्तव्यमेव मया करणीयमिति भावः। तथा च सन्निपत्यैव वेगेन गत्वैव न तु किञ्चिद्विवेच्येत्येवशब्दार्थः। अहं वो युष्माकं पताकां जयपत्राङ्कितां वैजयन्तीं हरामि बलप्रकाशेन गृह्णामि ; यदि भवन्तः शक्नुवन्ति तर्हि रक्षन्त्विति भावः।

अत्र अर्थापत्तिरलङ्कारः ॥ २८ ॥

(च) भो भोरिति। परिवृत्य परिवेष्ट्य, लोष्टैः शुष्कमृत्पिण्डैः पाषाणखण्डैर्वा अभिघ्नन्तः ताड़यन्तः एनमश्वं नयत आश्रमाभिमुखं चालयत। एष वराकः क्षुद्रोऽश्वः रोहितानां आश्रमस्थमृगविशेषाणां मध्ये चरतु भ्रमतु।

"रोहितः।...मृगविशेषः"। "वराकः।...अवर"इति च शब्दकल्पद्रुमः।

(क) प्रविश्येति। चापलं चञ्चलतां धिक्, बालस्वभावसुलभचपलतया यदेनमश्वं ताड़यन् हर्त्तुमिच्छसि, तन्निन्दामीत्यर्थः अविवेकप्रयुक्तत्वादिति भावः। किमुक्तवानसि

---

(१) एभिरधुना, तां पताकां हरामि वः। ..शरसम्बाधां पताकां वो हराम्यहमिति पाठान्तरद्वयं। (२) परावर्त्तयतैनमश्वमिति विभिन्नः पाठः।

नीरसा ह्यायुधीयश्रेणयः शिशोरपि दृप्तां वाचं न सहन्ते(१), राजपुत्रश्चन्द्रकेतुररिविमर्द्दनः (२) सोऽप्यपूर्वारण्य (३) दर्शन-कौतूहलाक्षिप्तहृदयो न यावदायाति(४) तावत् (५) त्वरितमनेन तरुगहनेनापसर्पत । ( क )(१)

बटवः। कुमार! कृतमनेनास्त्रेन, तर्जयन्ति विस्फुरितशस्त्राः

परित्यजेत्यादि किं कथितवान् त्वं, तादृशं न पुनर्वाच्यमिति भावः। तत्र कारण-माह, हि यस्मात् तीक्ष्णाः प्रचण्डाश्चासौ नीरसा निर्द्दयाश्चेति तीक्ष्णनीरसाः, आयुधीय-श्रेणयः शस्त्रास्त्रधारिणो योद्धृवर्गाः शिशोरपि युवादिषु का कथा बालकस्यापि दृप्तां-सगर्वां वाचं न सहन्ते श्रुत्वा न क्षमन्त इत्यर्थः। सुतरां बालकत्वेनापि न ते परित्राण-मस्तीति भावः। विशेषतश्च, नाऽपि न केवलमायुधीयश्रेणयः अस्माकं सेनापतिस्त्वं न प्रसिद्धः चन्द्रकेतुरपीति अपिशब्दस्यार्थः। अरिविमर्द्दनः शत्रुनिर्यातनकारी, अतएव तेन सह शत्रुताचरणं कस्यापि नास्ति परित्राणमिति भावः। अपूर्वस्य आश्चर्यस्य अरण्यस्य वनस्य दर्शनकौतूहलेन आक्षिप्तं आकृष्टं हृदयं मनो यस्य स तथोक्तः। अनेन सन्निहितेन तरुगहनेन वृक्षवनेन निविड़वनपथेनेत्यर्थः अपसर्पत पलायध्वं।

गहनशब्देनैव प्रकृतार्थनिर्वाहेऽपि तरुपदोपादानं तस्य निविड़त्वसूचनार्थं तेन च पलायने अन्येषां दर्शनासम्भवेन महती सुविधाऽस्तीति विज्ञापितमिति बोध्यं।

( ख ) बटव इति। कृतं अलं। विस्फुरितानि उत्तोलनेन विकसितानि शस्त्राणि यासां ताः, आयुधीयश्रेणयः योद्धृवर्गाः कुमारं त्वां तर्जयन्ति भर्त्सयन्ति। कौतुककरणार्थमश्वग्रहणेऽपि यद्यमी क्रुध्यन्ति तदेतदश्वग्रहणेन नास्ति प्रयोजनमिति भावः। नन्वेषु आक्रमत्सु अस्माकं चीत्कारमाकर्ण्य भगवान् वाल्मीकिरागत्य सैनिका-न्निवारयेदित्याह दूरेचेति। किञ्चेति चार्थः। आश्रमपदं तपोवनं। अतएवास्माकं

(१) न दृप्तां वाचमनुसहन्ते। (२) आक्रान्तशरासनः। (३) सौम्य पूर्वारण्य...। (४) परापतत्यद्यापि। (५) तत्। इति पञ्च पाठान्तराणि।

कुमारस्यायुधीयश्रेणयः, दूरं चाश्रमपदमितस्तदेहि हरिणप्लुतैः पलायामहे। (ख)

लवः। स्मितं कृत्वा। किं नाम विस्फुरन्ति शस्त्राणि।

धनुरारोपयन्। (ग)

ज्याजिह्वया वलयितोत्कटकोटिदंष्ट्र-
मुद्गारि घोरघन घर्घरघोषमेतत्।

चोत्काराश्रवणेन ऋषिरागमनासम्भवात् सैनिकानां निवारणसम्भावनाऽपि नास्तीति भावः। तत्तस्मात् एहि त्वमागच्छ, हरिणप्लुतैः हरिणवत् उल्लम्फनप्रलम्फनैः। अत्रसभीरु-स्वभावानां ब्राह्मणकुमाराणामनुरूपवेयमुक्तिरित्यतीवमनोहरेयं कविकल्पना।

(ग) लव इति। क्वापि नामशब्दः। विस्फुरन्ति उत्तोलनेन विकसन्ति। तदा अहमप्येतत्प्रतिविधानं करोमीति भावः। आरोपयन् गुणं ग्राहयन् सज्जं कुर्वन्नित्यर्थः।

ज्येति। ज्या मौर्वी गुण इति यावत् जिह्वा रसनेव तया वलयिते वलयाकारं प्रापिते नमीकृते इत्यर्थः उत्कटे भयानां भयङ्करे कोटी अग्रभागद्वयं दंष्ट्रे विशालौ दन्ताविव यस्य तत्तथोक्तं, भक्षणलोलुपः कृतान्तो यथा दीर्घया रसनया सृक्कणीद्वयं प्रान्तवर्त्ति विशालदन्तद्वयञ्च मुहुरजस्रञ्च परिलेढि, तथा अयं चापोऽपि लम्बमानेन गुणेन अजस्रबाणवर्षणात् अविरतमग्रदेशद्वयं स्पृशतु इति तात्पर्य्यार्थः। तथा उद्गारी उत्तिष्ठन्, घोरो भयङ्करः, घनो निरन्तरः, घनस्य मेघस्येव वा, घर्घरघोषो घर्घरेत्येवं गम्भीरटङ्कारध्वनिर्यस्मात् तत् तथोक्तं, एतत् मदीयं चापं धनुः कर्त्तृ, कृतान्तो यथा मड़मड़ेत्येवं चर्वणशब्दं करोति, तथा अयमपि चापः घर्घरटङ्कारध्वनिं करोत्विति तात्पर्य्यार्थः ; ग्रासे प्रलयकालीनजगत्कवलीकरणे प्रसक्तस्य प्रवृत्तस्य, हसतो विकटहास्यं कुर्वतः, अन्तकस्य कालस्य यत् वक्त्रं मुखं यन्त्रमिव तस्य जृम्भां व्यादानं विड़म्बयितुं अनुकर्त्तुं शीलं यस्य तत् ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्रजृम्भाविड़म्बि, तादृशं विकटं दारुणं उदरं मध्यं यस्य तत् तथोक्तं अस्तु भवतु। प्रलयकाले कृतान्तो यथा

ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्र-
जृम्भाविडम्बिविकटोदरमस्तु चापम् ॥ २९ ॥

इति यथोचितं परिक्रम्य निष्क्रान्ताः सर्वे। (घ)

प्रचुरभक्ष्यलाभादानन्देन विकटहास्यकरणात् मुखव्यादानं करोति, तथा अयमपि चापः प्रचुरविनाशनीयलाभेन गुणारोपणात् विपुलायतनमुदरं करोत्विति तात्पर्य्यं।

अत्र रेखाङ्कितस्थलवर्त्तिनीनां पञ्चानां लुप्तोपमानां अङ्गाङ्गिभावेन सङ्करः। तेन च सर्व्वाँश्चसर्वसेन सैन्यसमूहमहं व्यापादयिष्यामीति वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः; तथा कदापि न खलु कालो लोलरसनामुखव्यादानादिकं विधाय जगद्ग्रासं करोति, तथापि तत्सम्बन्धोक्तेः "उभौ यदि व्योम्नि पृथक् प्रवाहावाकाशगङ्गापयसः पतेता"मित्यादिवदसम्बन्धे सम्बन्धरूपातिशयोक्तिरलङ्कारश्च व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिरपि। तथा प्रथमे पादे कटकोटीत्येतयोरनेकधा सकृत्साम्यात् छेकानुप्रासः, द्वितीये एकस्य वकारस्य असकृत्साम्यात् वृत्त्यनुप्रासः, तृतीये सकारस्य असकृत् साम्यात् वृत्त्यनुप्रासः, तथा चतुर्थे विशब्दस्य सकृत्साम्यात् वृत्त्यनुप्रासश्च इत्येतेषां संसृष्टिः। तथाऽत्र दुःश्रवत्वदोषः सन्नपि गुणायते वक्तुः क्रुद्धत्वात् वीररसाश्रयत्वाच्च। तथा चोक्तं साहित्यदर्पणे।

"वक्तरि क्रोधसंयुक्ते वाच्येऽत्यन्तं समुद्धते।
रौद्रादौ तु रसेऽत्यन्तं दुःश्रवत्वं गुणो भवेत्॥"

तथाऽत्र युद्धवीरो रसः, ओजो गुणः, गौडी रीतिः।

चापशब्दस्य "धनुश्चापौ"इत्यमरकोषे पुंसा निर्द्देशेऽपि साहचर्य्यात् क्लीवत्वमपि ज्ञेयं। वलयितेति करोत्यर्थेनन्तात् कर्म्मणि क्तः।

वसन्ततिलका वृत्तं ॥ २९ ॥

(घ) इतीति। यथोचितं उचितमनतिक्रम्य। एकेन द्वारेण लवादिमुनिकुमाराः, अन्येन च द्वारेण सैनिका निष्क्रान्ता इत्यर्थः प्रवृत्तवैराणां विभिन्नपथेनैव गमनौचित्यात्।

## इति कौशल्याजनकयोगोनाम चतुर्थोऽङ्कः । (ङ)



(ङ) इतीति । इतिशब्दोऽङ्कसमाप्तौ । कौशल्याजनकयोर्योगः मेलनं साक्षात्कार इति यावत् यत्र सः । नाम कौशल्याजनकयोग इति नाम्ना प्रसिद्धः चतुर्थोऽङ्कः समाप्त इति शेषः ।

इति श्रीहरिदाससिद्धान्तवागीश-विरचितायामुत्तररामचरित-
टीकायां सर्वार्थबोधिनी-समाख्यायां चतुर्थाङ्क-
विवरणं समाप्तम् ॥ ० ॥







# अथ पञ्चमोऽङ्कः ।

—: * :—

नेपथ्ये ।

भो भोः ! सैनिकाः ! जातं जातमवलम्बनमस्माकं । (क)

नन्वेष त्वरित सुमन्त्रनुद्यमान-
व्यावल्गत्प्रजवनवाजिना रथेन ।
उद्घातप्रचलितकोविदारकेतुः (१)
श्रुत्वा नः(२) प्रधनमुपैति चन्द्रकेतुः ॥ १ ॥

(क) भो भोरिति । अस्माकं अनेन मुनिकुमारेण निहन्यमानानामिति भावः अवलम्बनं, रक्षकत्वेनाश्रयः आश्वासकारणमित्यर्थः, जातं भूतं । हर्षे द्विरुक्तिः ।

कथमित्याह नन्वेष इति । नन्विति सैनिकसम्बोधने । एषः अनतिदूरे दृश्यमानः चन्द्रकेतुः अस्माकं सेनापतिः लक्ष्मणपुत्रः चन्द्रकेतुनामा वीरः नोऽस्माकं प्रधनं केनचिन्मुनिकुमारेण सह युद्धं श्रुत्वा संवाददातुर्मुखादाकर्ण्य त्वरितेन त्वरान्वितेन सुमन्त्रेण सुमन्त्रनामकेन सारथिवरेण नुद्यमानाः प्रेर्यमाणाः व्यावल्गन्तः प्रधावन्तः अतएव प्रजवना महावेगा वाजिनो घोटका यस्य तेन तथोक्तेन रथेन करणेन उद्घातेन उन्नतावनत-

(१) उद्घातप्रचलितकोविदारकेतु इति विसर्गहीनं क्रियाविशेषणरूपं पाठान्तरं ।
(२) वः । इति पाठभेदः ।

ततः प्रविशति सुमन्त्रसारथिना रथेन धनुष्पाणिः
साद्भुतहर्षसम्भ्रमश्चन्द्रकेतुः । ( ख )

चन्द्र। आर्य्य ! सुमन्त्र ! पश्य पश्य । ( ग )

किरति कलितकिञ्चित्कोपरज्यन्मुखश्री-
रनवरतनियुञ्जत्कोटिना कार्म्मुकेण ।

भ्रमितया मुहुः प्रतिघातेन प्रचलितः कम्पितः कोविदारकेतुः रक्तकाञ्चनवृक्षनिर्म्मित-ध्वजदण्डो यस्य स तथोक्तः सन् उपैति समरभूमिमागच्छति, अस्मान् परिरक्षन् युद्धार्थमिति शेषः । अतएव यूयमाश्वसितेति भावः ।

अत्र प्रजवनत्वं प्रति व्यावल्गनं हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, तथा द्वितीयार्द्धे केतुः केतुरिति अन्त्ययमकाख्य शब्दालङ्कारः, अनयोः संसृष्टिः ।

“कोविदारः । रक्तकाञ्चनवृक्ष”इति शब्दकल्पद्रुमः । “युद्धमायोधनं जन्यं प्रधनं प्रविदारण”मित्यमरः ।

त्वरा अस्य सञ्जातेति तारकादित्वादितच् प्रत्ययः ।

प्रहर्षिणी वृत्तं ।

भो भोरित्यादिः श्लोकस्थचन्द्रकेतुरित्यन्तः सन्दर्भश्चूलिका नाम विष्कम्भकादिव दर्थोपक्षेपकः । तथा च साहित्यदर्पणे—

“अन्तर्जवनिकासंस्थैः सूचनाऽर्थस्य चूलिका ।” ॥ १ ॥

( ख ) तत इति । असंख्यदुर्द्धर्षसैनिकैः सह एकाकिनोबालकस्य समरदर्शनात् अद्भुतं आश्चर्य्यं, वीराणां समानवीरान्तरलाभस्य आनन्दकारणत्वात् हर्ष आनन्दः, स्वकीयसैन्यविनाशदर्शनात् सम्भ्रमः त्वरा तैः सह विद्यमान इति साद्भुतहर्षसम्भ्रमः ।

( ग ) चन्द्रेति । स्वपितामहदशरथस्य मन्त्रित्वेन तत्सहचरत्वात् आर्य्येति गौरवसम्बोधनं । पश्य पश्येति विस्मये द्विरुक्तिः ।

किरतीति । कलितेन कृतेन “कलिः कामधेनु”रिति मल्लिनाथः किञ्चित्कोपेन बहुसंख्यकानामपि अस्मत्सैनिकानामतितुच्छतयाऽवज्ञानात् अथच आक्रमणात् ईषत्-क्रोधेन रज्यन्ती लोहितायमाना मुखश्री वंदनकान्तिर्यस्य स कलितकिञ्चित्कोप-

समरशिरसि चञ्चत्पञ्चचूड़ श्चमूनां-
मुपरि शरतुषारं कोऽप्ययं वीरपोतः ॥ २ ॥

आश्चर्य्यम्। (घ)

मुनिजनशिशुरेकः सर्वतः सैन्यकाये
नव इव रघुवंशस्याप्रसिद्धःप्ररोहः।

:रज्यन्म ्खर्य्योः, तथा चञ्चन्त्यः सर्वासु दिक्षु अविरतपरिभ्रमणात् मस्तककम्पनेन कम्पमानाः पञ्चचूड़ाः शिखा यस्य स चञ्चत्पञ्चचूड़ः मस्तककम्पनात् चलितकाकपक्ष इत्यर्थः अयं दृश्यमानः कोऽपि अपरिचितः वीरश्चासौ पोतः शिशुश्चे ति वीरपोतः शूरबालकः समरशिरसि युद्धमूर्द्धनि संग्राममूलाविल्यर्थः अनवरतं अजस्रं निगुञ्जन्त्यौ टङ्कारं कुर्वन्त्यौ कोटी अटन्यौ अग्रदेशाविति यावत् यस्य, तेन तथोक्तेन कार्म्मुकेण धनुषा चमूनामस्मत्सेनानां उपरि शरोवाण स्तुषारः असंख्यत्वात् हिममिव तं किरति विक्षिपति। एतदेवाश्चर्य्यमिति भावः।

अत्र शरतुषार इति लुप्तोपमाऽलङ्कारः, तथा प्रथमार्द्धे ककारस्य तृतीयपादे चकारस्य चतुर्थपादे च रेफस्यासकृत् पाठात् वृत्त्यनुप्रासः किञ्च तृतीयपादे चञ्चत्पञ्चेति छेकानुप्रासः, तेन च तृतीयपादे वृत्त्यनुप्रासच्छे कानुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करः। इन्द्रधनुःपरिशोभितः शब्दायमानो नवजलधरो यथा वारि वर्षति तद्वदयं वाणान् वर्षतीति व्यज्यते तेन च वस्तुनाऽलङ्कारध्वनिः। शराणामसंख्यत्वांश एव तुषारसादृश्यं तेन न उपमानस्य प्रमाणगतन्यूनत्वरूपानुचितार्थत्वदोषः।

मालिनी वृत्तं ॥ २ ॥

(घ) आश्चर्य्यं परश्लोके व्यक्तो भविष्यति।

मुनीति। नवो नूतनः अतएव अप्रसिद्धः लोके अप्रथितः रघुवंशस्य रघुकुलस्य प्ररोहः अङ्कुर इव एक द्वितीयरहितः निःसहाय इति यावत् मुनिजनशिशुः ऋषिबालकः सर्वतः सर्व्वस्मिन् सैन्यकाये सैनिकसमूहे। ज्वलितक्रियाया अधिकरणे सप्तमीयं दलिता विमर्द्दिता ये करिकपोलग्रन्थयः हस्तिगण्डसन्धिभागाः तेषु टङ्कारेण टंटमित्येवं-

दलित करिकपोलग्रन्थिटङ्कारघोरं (१)
ज्वलितशरसहस्रः कौतुकं मे करोति ॥ ३ ॥(२)

आश्चर्यमाश्चर्यम्। (ङ)

सुमन्त्रः। आयुष्मन्। (च)

अतिशयित सुरासुरप्रभावं
शिशुमवलोक्य तवैव तुल्यरूपम्। (३)

रूपेण विदारणशब्देन घोरं भयङ्करं यथा स्यात्तथा ज्वलितानि दीप्तानि शरसहस्राणि बाणसमूहा यस्य स तथोक्तः सन् मे मम कौतुकं कौतूहलं करोति विदधाति। असौ मुनिबालकः सुधारशरसमूहेन हस्तिकपोलास्थीनि सशब्दं विदारयन् शिखिनर्मनिक-पुरुषांश्च निपीड़यन् यत् स्वयमकुतोभयः सम्य एवास्ते तदेवाश्चर्य्यमिति भावः।

अत्रोपमाऽलङ्कारः, इवशब्दसत्त्वेन प्ररोहत्वारोपाभावान्न रूपकमिति भाव्यं।

"काथः।...संघः"। "प्ररोहः। अङ्कुर"इति च शब्दकल्पद्रुमः।

मालिनी वृत्तं ॥ ३ ॥

(ङ) आश्चर्य्यं एकेन शिशुना दुर्द्धर्षवहुसैन्यनिपीड़नमित्यर्थः। अतिशयं द्विरुक्तिः।

(च) सुमन्त्र इति। आयुष्मन्निति रथिनः सम्बोधनं सारथेः कर्त्तव्यतया नियमितं। तथा च साहित्यदर्पणं।

"आयुष्मन् रथिनं सूतः"। वदेदिति पूर्वेणान्वयः।

अतीति। अतिशयितः अतिक्रान्तः सुरासुराणां देवदैत्यानां प्रभावो माहात्म्यं विक्रम इति यावत् येन तं अतिशयितसुरासुरप्रभावं। ननु तर्हि किं मत्तोऽप्यसौ प्रधानवीर इत्याह तवैव तुल्यरूपं समानस्वरूपं समानवीरमितियावत् असुं शिशुं

(१) टङ्कारघोरेति अनुस्वारहीनं पाठान्तरं। (२) कस्मिंश्चित् पुस्तके मुनिजनेत्यादिश्लोकात्परं किरतीत्यादिश्लोकसन्निवेशो दृश्यते। प्राथमिकमाश्चर्य्यमिति च नास्ति। (३) वतैव तुल्यरूपमिति पाठभेदः।

कुशिकसुतमखद्विषां प्रमाथि
धृतधनुषं रघुनन्दनं स्मरामि ॥ ४ ॥

चन्द्र। इमन्त्वेकमुद्दिश्य (१) भूयसामारम्भ इति हृदयमपत्रपते। (क)

अयं हि शिशुरेककः समरभारभूरिस्फुरत् (२)
करालकरकन्दलीकलितशस्त्रजालैर्वनैः।

मुनिबालकमवलोक्य कुशिकसुतस्य विश्वामित्रस्य मखद्विषां यज्ञविघ्नकारिणां सुबाहुमारीचादिराक्षसानामित्यर्थः प्रमाथि विमर्द्दनं धृतधनुषं धनुर्द्धरं रघुनन्दनं रामं स्मरामि; पराक्रमेण आकारेण च सर्व्वथैव शिशुरसौ रामसमानः तत्र च समान इति भावः।

अत्र सुरासुरप्रभावातिक्रमासम्बन्धेऽपि तत्सम्बन्धोक्ते रतिशयोक्तिः, तत्रैव तुल्यरूपमिति आर्थी उपमा, तथा सादृश्येन रामचन्द्रस्मरणात् स्मरणनामाऽलङ्कारश्च, एतेषामङ्गाङ्गिभावेन सङ्करः।

विश्वामित्रेण स्वकीयतपोवनं नीतो रामभद्रः तदीययज्ञविघ्नकारिणः सुबाहुमारीचादीन् शरजालैरमर्द्दयदिति रामायणवार्त्ता।

पुष्पिताग्रा वृत्तं ॥ ४ ॥

(क) चन्द्रेति। तु किन्तु, एकं द्वितीयसहायरहितं इमं बालकमुद्दिश्य प्रतिपक्षत्वेन लक्ष्यीकृत्य भूयसां प्रभूतानामस्मत्सैन्यानामित्यर्थः आरम्भः युद्धोपक्रमो वर्त्तत इति शेषः। इति हेतोः, हृदयं मदीयं मनः अपत्रपते लज्जते। अस्माकं प्रत्येकस्य दुर्बलताप्रकाशादिति भावः। एतेन चन्द्रकेतोर्महत् वीर्य्यं औदार्य्यञ्च व्यज्यते।

अयमिति। समरभारे संग्रामरूपदुर्वहव्यापारे तुमुलयुद्धकार्य्ये इत्यर्थः भूरि प्रचुरं सातिशयमित्यर्थः यथा स्यात्तथा स्फुरन्ति दीप्यमानानि करालानि भयानकानि

(१) ममत्वेकमुद्दिश्येति पाठान्तरं।

(२) समररेणुभूरिस्फुरदिति पाठभेदः।

क्वणत्कनककिङ्किणी झणझणायितस्यन्दनै-
रमन्दमददुर्द्दिनद्विरदवारिदैरावृतः ॥ ५ ॥

सम। वसत्! एभिः समस्तैरपि किमस्य, किंपुनर्व्यस्तैः।(ज)

करकन्दलीभिः स्तम्बसमानविशालहस्तैः कलितानि गृहीतानि शस्त्रजालानि आयुधवृन्दानि येषां तैः तथोक्तैः, तथा क्वणन्त्यः शब्दायमाना याः कनककिङ्किण्यः स्वर्णनिर्म्मितक्षुद्रघण्टाः ताभिः झणझणायिताः झण झण इत्येवं शब्दं कुर्वन्तः स्यन्दना रथा येषां तैः तथोक्तैः, तथा अनन्दा अनल्पा प्रगाढ इति यावत् मदा दानजलानि दुर्द्दिनानि वृष्टय इव येषां ते अमन्दमददुर्द्दिना द्विरदा हस्तिनः वारिदा मेघा इव येषु तैस्तथोक्तैः बलैः अस्मत्सैनिकैः अयं एकाकोहि एकाकी एव नत्वपरसहायशाली इत्यर्थः शिशुर्बालकः आवृतः हन्तुं परिवेष्टितः। पदातिरथिहस्त्यारोहिभिर्मम सैन्यैः हन्तुमयमेको बालकः समावृत इत्येतन्महदनुचितमिति भावः।

अत्र करकन्दलीत्यत्र लुप्तोपमा, तथा चतुर्थपादे लवस्य परिवेष्टनरूपावरणक्रिया उपमायाः साधिका रूपकस्य च बाधिकेति लुप्तोपमैव, अनयोः संसृष्टिः, वृत्त्यनुप्रासश्च नन्वस्मान् प्रति करुणाकरणाय अलङ्कारनिपुणा मनस्विनः कारणसमीपामनुसन्दधीरन्, इतरथा प्रतिपदमशेषहेतुसन्निवेशवशेन नितान्तमुपचीयमानकलेवरा किल टीकेयं नवीनानां विशालविरागमावहेतेति समुपेक्षितं।

"हि हेतावबधारणे।" "किङ्किणी क्षुद्रघण्टिका" "मूढाल्पापटु निर्भाग्या मन्दाः स्युः।" इति चामरः। "कन्दली। स्तम्बः।" "घनान्धकारे वृष्टौ च दुर्द्दिनं कवयोविदु"-रिति साज्ञ"इति च शब्दकल्पद्रुमः। एतेन "दुर्द्दिनं लक्षणया वर्षण"मिति यत् केनचिदुक्तं तत् परिहार्य्यं।

झणझणेत्यव्यक्तानुकरणशब्दात् "अव्यक्तानुकरणा"दित्यादिना डाच् "डाज् लोहितादिभ्यश्च"त्यायिः, ततः कर्त्तरि क्तः।

पृथ्वी वृत्तं "जसौ जसयलावसुग्रहयतिश्च पृथ्वी गुरु"रिति लक्षणात् ॥ ५ ॥

(ज) सुमेति। एभि रस्मत्सैनिकैः समस्तैरपि मिलितैरपि एकयोगेन

चन्द्र। आर्य्य ! त्वर्य्यतामनेन हि महानाश्रितजनप्रमाथोऽस्माकमारब्धः। तथाहि। (भ)

आगुञ्जद्गिरिकुञ्जकुञ्जरघटाविस्तीर्णकर्णज्वरं
ज्यानिर्घोषममन्ददुन्दुभिरवैराध्मातमुज्जृम्भयन्।

---

सकलैर्युध्यमानैरपि सद्भिरित्यर्थः, अस्य बालकस्य किं क्रियतामितिशेषः पुनः किन्तु व्यस्तैः एकैकशो युद्धप्रवृत्तैः किं क्रियतामिति शेषः। महायोद्धायं बालक इति भावः।

अत्र "एभिः समस्तैरपि किमस्य"त्यनेनैव वक्तव्यार्थनिर्वाहेऽपि पुनः किं पुनर्व्यस्तै'रितुरक्त्या "सहसा विदधीत न क्रिया"मित्यादिवदर्थगतपुनरुक्तत्वदोषः, किं पुनर्व्यस्तै'रित्येतत्परिहारेण तत्समाधानं विधेयं।

(भ) चन्द्रेति। त्वर्य्यतां सत्वरेण भूयतां त्वयेति शेषः शीघ्रं रथः प्रेर्य्यतामित्यर्थः। हि यस्मात्, आश्रितजनानां अस्मदुपजीविसैन्यानां प्रमाथोविमर्द्दनं विनाश इति यावत्। तथाहि तमेवार्थं जानीहीत्यर्थः।

आगुञ्जदिति। वीरः एष शूरो बालकः, आगुञ्जन्तः लवस्य ज्याघोषश्रवणेन भयवशात् गम्भीरध्वनिं कुर्वन्तः ये गिरिकुञ्जकुञ्जराः पार्वत्यलतादिसमाच्छादितस्थानवर्त्तिनो हस्तिनः तेषां या घटा समुहः तस्या विस्तीर्णः बाहुल्येनोत्पादितः कर्णज्वरः नितान्तदीर्घकर्कशतया श्रुतिपीड़ा येन तं तथोक्तं, यस्य दूरगामिनो ज्याघोषस्य श्रवणाद् भीता वन्यहस्तिनो व्याकुलतया गर्जन्ति कर्णपीड़ाञ्चानुभवन्ति तमित्यर्थः, तथा अमन्दा अनल्पा बहुला [illegible] ये दुन्दुभिरवाः अस्मत्पक्षीयवाद्यविशेषध्वनयस्तैः आध्मातं परिवर्द्धितं ज्या[illegible] अविरतबाणवर्षणेन मुहुर्मुहुः सञ्चालनात् मौर्वीशब्दं उज्जृम्भयन् उत्पादयन् सन्, [illegible] भूमौ स्पन्दमानानां भैरवाणां भयानकानां रुण्डानां कवन्धानां मस्तकरहितशरी[illegible] [illegible]निकरैः मस्तकसमूहैः करणैः भुवः समरभूभागान् तृप्यतः प्रभूतभोजनेन सन[illegible] [illegible]स्य यमस्य यत् करालं भयङ्करं वक्त्रं मुखं तस्य विघसैः भुक्तावशिष्टद्रव्यैः व्या[illegible] [illegible]माः समाच्छाद्यमाना इव विधत्ते करोति। जगद्ग्रासे प्रवृत्तस्य प्रभूत-

वेल्लद्भैरवरुण्डमुण्डनिकरैर्वीरो विधत्ते भुवः(१)
तृप्यत्कालकरालवक्त्रविघस व्याकीर्य्यमाणा इव ॥६॥

सुम । स्वगतं । कथमोदृशेन सह वत्सस्य चन्द्रकेतोर्द्वन्द्वसम्प्रहारमनुजानीयाम् ।(२) विचिन्त्य । अथवा इच्वाकुगृहवृद्धाः खलु वयं, प्रत्युपस्थिते (३) च का गतिः । (ञ)

भोजनेन सन्तुष्टस्य यमस्य व्यात्ताननादिगलितैः श्मश्रुतस्तैरिव मस्तकैः समरभूमिरियं प्रायेण समाच्छन्नेति निष्कर्षः । सुतरां सत्वरं गत्वा द्वन्द्वयुद्धेनैतन्निवारणं मया करणीयमिति भावः ।

अत्र पार्वत्यगजानां तादृशकर्णज्वरोत्पत्तेरसम्बन्धेऽपि तत्सम्बन्धोक्तेः रतिशयोक्तिः, तथा भावाभिमानिनी वाच्या क्रियोत्प्रेचा चालङ्कारः, तयोश्च मिथोऽनपेचणात् संसृष्टिः । तथा प्रथमचतुर्थचरणयोर्वृत्त्यनुप्रासः, एवं शीर्ण कर्ण, मन्द तुन्द, रुण्ड मुण्डे ति व्यञ्जनानामनेकधा सकृत्साम्यात् छेकानुप्रासश्च ; अनयोरपि संसृष्टिः । गुञ्जनस्य भ्रमरार्दः 'गन गुन' शब्द एव ख्यातत्वादत्र तु हस्तिध्वनौ तत्प्रयोगात् ख्यातिविरुद्धतादोषः, स च 'उद्गर्जद्गिरिकुञ्जे'त्यादि पाठेन समाधेयः ।

"गजानां घटना घटा" । "विघसो यज्ञशेषभोजनशेषयो"रिति चामरः । "कबन्धः कथ्यते रुण्ड"इति हलायुधः ।

विघस इति उपसर्गेऽदेरल् "घञ् लोर्घस्तृ"इति घसादेशः ।

शार्दूलविक्रीडितं वृत्तं ॥ ६ ॥

(ञ) सुमेति । ईदृशेन अद्भुतकर्म्मणा महावीरेण लवेन सहेत्यर्थः । द्वन्द्वस्य युग्मस्य सम्प्रहारं युद्धं एकाकिन चन्द्रकेतोर्युद्धमिति निष्कर्षः, अनुजानीयां अनुमतिं दद्यां । असंख्यसैन्यसंहारकारिणा अनेन सममेकाकिनश्चन्द्रकेतोर्युद्धं यदि अनिष्टपातः

(१) भुवमिति पाठान्तरं । (२) अनुजानीम इति पाठभेदः । (३) च इत्यधिकः पाठः क्वचित् ।

चन्द्र। सविस्मयलज्जासम्भ्रमं। धिक् प्रतिनिवृत्तानि सर्वतः सैन्यानि मम। (ट)

सुम। रथवेगमभिनीय। आयुष्मन्! एष वाग्विषयीभूतस्ते स वीरः। (ठ)

चन्द्र। विस्मृतिमभिनीय। आर्य्य! किमस्य नामधेय(१) माख्यातमाख्यायकैः?। (ड)

स्यादिति भावः। विचिन्त्य विविच्य। इक्ष्वाकुगृहे इक्ष्वाकुवंशोत्पन्नदशरथगृहे वृद्धाः मन्त्रित्वे सारथ्ये च यौवने नियुक्ताः सन्त इदानीं वार्द्धक्यमुपगताः, सुतरामेनेषां युद्धं अनिवर्त्तित्वरूपमाचारमवगच्छन्तोऽपि कथं निवारयाम इति भावः। विशेषतश्चेति चकारार्थः, प्रत्युपस्थिते आपतिते समरे इति शेषः का गतिः क उपायः समरं विनेत्यर्थः। इदानीमनयोरनिवार्य्य एव जातः समरः, तन्मया अनुमतिरेव दातव्येति भावः।

वयमिति "वाऽस्मदश्च"ेति वहुवचनं।

(ट) चन्द्रेति। लवस्य महाविक्रमदर्शनात् विस्मयः, स्वकीयसैन्यानां पराजयावलोकनात् लज्जा, तेषां रक्षणाय सम्भ्रमस्त्वरा, तैः सहेति तथोक्तं। सर्वतः सर्वासु दिक्षु, सैन्यानि बलानि, प्रतिनिवृत्तानि पराजयेन पराङ्मुखानि, धिक् निन्दामीत्यर्थः; सम्मुखसंग्रामे क्षत्रियाणां पृष्ठप्रदर्शनस्य नितान्तनिन्दनीयत्वादिति भावः।

"वरूथिनी वलं सैन्य"मित्यमरः।

(ठ) सुमेति। रथवेगमभिनीय रथं वेगेन चालयित्वेत्यर्थः। एष दृश्यमानः, सः अस्मत्सैन्यप्रमाथी वीरः ते तव वाग्विषयीभूतः रथचालनेन सान्निध्यादालापगोचरो जातः। पूर्वं दूरवर्त्तित्वात् वाक्यं श्रावयितुमशक्य आसीत् इदानीन्तु सन्निहित इति यथेष्टमालपितुमर्हसीति भावः।

(ड) चन्द्रेति। विस्मृतिं विस्मरणसूचकमूर्द्धदृष्टिपातादिकं। आख्यायकैः

---

(१) किं तन्नामधेयमिति पाठान्तरं।

चन्द्र। वत्स ! लव इति। (ढ)

सुम। भो भो लव ! महावाहो ! किमेभिस्तव सैनिकैः ।
ऐषोऽहमेहि मामेव तेजस्तेजसि शाम्यतु ॥ ७ ॥

सुम। कुमार ! पश्य पश्य। (ण)

व्यपवर्त्तत एष वालवीरः पृतनानिर्म्मथनात्त्वयोपहूतः ।
स्तनयित्नुरवादिभावलीनामवमर्द्दादिव दृप्तसिंहशावः ॥८॥

---

युद्धवार्त्ताहरैः, अस्य महावीरशिशोः, किं नामधेयं नाम आख्यातं कथितं, स्मरसि चेत् तद्ब्रूहि, अन्यथा आलापे वक्तव्यदसुविधा स्यादिति भावः ।

(ढ) सुमेति। लव इति लव इत्यानुपूर्व्वीकमस्य नामधेयमित्यर्थः ।

भोभोरिति। महान्तौ वीर्य्यवत्तया विशालौ वाहू यस्य तत्सम्बोधनं, भो भो लव ! सम्भ्रमे विरुक्तिः। एभिरस्मदीयैः सैनिकैः सैन्यैः तव किं प्रयोजनमित्यर्थः तव असमान-तया एभिः सह युद्धं न करणीयमिति भावः। एषः अहमस्मि तव युद्धयोग्य इति भावः, अतएव मामेव एहि योद्धुमागच्छ, ननु तेनापि किं भविष्यतीत्याह तेजः त्वदीयः पराक्रमः क्षुद्र वह्निश्च तेजसि मदीये पराक्रमे वह्निपुञ्जे च शाम्यतु लयं गच्छतु। एतान् सामान्यसैनिकानवमत्य यद्यपि न खलु समानिकै पराक्रमितुमर्हसीति भावः।

अत्र वह्निपराक्रमयोर्भेदेऽपि श्लेषेणाभेदाध्यवसायमूला अतिशयोक्तिरलङ्कारः ।

"तेजस् ।...पराक्रमः, अग्नि"रिति शब्दकल्पद्रुमः।

(ण) सुमेति। पश्य पश्येति विस्मये विरुक्तिः।

व्यपेति। एष दृश्यमानः वालश्चासौ वीरश्चेति वालवीरः शिशुशूरः त्वया उपहूतः युद्धकरणाय आहूतः सन् दृप्तः वलदर्पान्वितः सिंहशावः केशरिशावकः स्तनयित्नोर्मेघस्य रवात् गर्जितं श्रुत्वेत्यर्थः इभावलीनां गजश्रेणीनां अवमर्द्दात् मथनात् विनाशादिव पृतनायाः अस्मत्सेनाया निर्म्मथनात् विदलनात् व्यपवर्त्तते निवर्त्तते। केशरिशावको यथा मेघनिनादमाकर्ण्य गजेभ्यो वलवन्तमपरं जन्तुं मन्यमानो गजयूथविमर्द्दना-न्निवर्त्तमानो मेघाभिमुखं धावति, तथाऽयमपि वालकः स्पर्द्धया त्वया समाहूतः सन्

ततः प्रविशति त्वरितोद्धतक्रमो लवः । (त)

लवः । साधु, राजपुत्र! साधु, सत्यमैच्वाकः खल्वसि, तदयं परागत एवास्मि । (थ)

नेपथ्ये महान् कलकलः । (द)

लवः । सावेगं परावृत्य । कथमिदानीं भग्ना अपि प्रतिनिवृत्य युद्धाभिसारिणः पर्य्यवष्टभ्य निघ्नन्ति मां चमूपतयः, धिग्‌-जाल्मान् । (ध)

---

सेनाविनाशमपहाय तवाभिमुखमागच्छतीति निष्कर्षः । अनेनैतस्य कर्म्मणा विस्मितो-स्मीति भावः ।

अत्र उपमाऽलङ्कारः ।

स्तनयित्नुरवादिति "यपोऽधिकरणकर्म्मणोरप्रयोगिणः"इति पञ्चमी, ल्यब्लोपे पञ्चमी-त्यपरे ।

मालभारिणीवृत्तं "विषमे ससजा यदा गुरू चेत् सभरा येन तु मालभारिणीय"मिति-लक्षणात् । अस्यैव श्रौपच्छन्दसिकमिति नामान्तरं ॥ ८ ॥

(त) तत इति । त्वरितो द्रुतः, उद्धतः सगर्व्वश्च, क्रमः पादक्षेपो यस्य सः ।

(थ) लव इति । साधु भद्रं, व्यवहरसीत्यध्याहृत्तव्यक्रियाविशेषणं । हर्षे साधुशब्दस्य द्विरुक्तिः, वीरस्य वीरान्तरलाभे हर्षः स्वाभाविक एवेति बोध्यं । खलु निश्चये, सत्यं खलु यथार्थमेव, ऐच्वाक इक्ष्वाकुवंशोत्पन्नः असि, इक्ष्वाकुवंशोद्भवानां पीड़ितपरित्राणस्य पराक्रमप्रकाशस्य च चिरप्रथितत्वादिति भावः । तत्तस्मात् त्वादृश-वीरलाभात् अयं अस्मि अयमहं, परागत एव त्वत्समीपे उपस्थित एव, स्वयोगव्यव-च्छेदने एवशब्दः । सुतरां यथेष्टं व्यवहर्त्तुमर्हसीति भावः ।

(द) नेपथ्य इति । कलकलः सैन्यानां कोलाहलः ।

(ध) लव इति । आवेगेन उत्साहोत्तेजनया सहेति सावेगं, परावृत्य पुनः सैन्यानामभिमुखीभूय । भग्ना अपि मया पराजिताः सन्तः पृष्ठप्रदर्शिनोऽपि प्रतिनिवृत्य

अयं शैलाघातक्षुभितवड़वावक्त्र हुतभुक्
प्रचण्डक्रोधार्च्चिर्निचयकवलत्वं व्रजतु मे ।
समन्तादुत्सर्पन् घनतुमुलसेनाकलकलः
पयोराशे रोघः प्रलयपवनास्फालित इव ॥ ८ ॥

ममाभिमुखीभूय युद्धमभिसर्त्तुं शीलं येषां ते युद्धाभिसारिणः पुनरपि युद्धोद्यताः सन्तः पर्य्यवष्टभ्य परितो दुर्गावस्थाय चमूपतयः सेनापतयः मां इदानीं निघ्नन्ति प्रहरन्ति ; अत एव जाल्मान् अपसदान् नीचानिति यावत् धिक् निन्दामि, एतान् चमूपतीनिति शेषः । पराजयात् परमपि पुनर्युद्धानुसरणे निर्लज्जताप्रकाशेन नीचलक्षणत्वावधारणादिति भावः ।

"निहीनोऽपसदो जाल्म"इत्यमरः ।

अयमिति । समन्तात् सकलासु दिक्षु, उत्सर्पन् उत्तिष्ठन्, अयं श्रूयमाणः घनो निरन्तरः, तुमुलः सङ्कुलः विशृङ्खलभावेनोत्पन्न इत्यर्थः सेनाकलकलः सैन्यकोलाहलः, प्रलयपवनेन युगक्षयकालीनवायुना आस्फालित आलोड़ितः पयोराशेः समुद्रस्य ओघो जलसमूह इव मे मम शैलानां समुद्रान्तर्निमग्नपर्वतानां आघातेन सङ्घर्षेण क्षुभितः उद्वेलितः यः वड़वावक्त्रहुतभुक् तुरङ्गकान्तामुखहव्यवाहः अर्व्वामुखनिर्गतवह्निः वाड़वानल इत्यर्थः स इव प्रचण्डः दारुणो यः क्रोधः कोपः स एव अर्च्चिषां निचय अग्निज्वालासमूह स्तस्य कवलत्वं ग्रासत्वं व्रजतु गच्छतु । पर्वतसङ्घर्षणेन विसर्पिशिखाजालो वाड़वानलो यथा समुद्वेलितं समुद्रजलसमूहं शोषणेन प्रशमयति तथा मम कोपोऽपि समुत्पन्नमिमं सैन्यकोलाहलविमर्द्दनेन उपशमयिष्यतीति सरलार्थः ।

अत्रोपमाऽलङ्कारः, क्रोधार्च्चिर्निचय इति रूपकञ्च अनयोरङ्गाङ्गिभावेन सङ्करः । तेन च इदानीमेव सर्वानेतान् विमर्द्दयामीति वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ।

पुरा किल भगवानौर्वनामा मुनिरग्नौ ऊरुं निविश्य कुशेन ममन्थ, ततस्तस्मादुत्पन्नो-वह्निर्जगन्ति दग्धुमुपचक्राम, अथ भगवान् ब्रह्मा समागत्य समुद्रान्तर्गतवड़वामुखे

इति परिक्रामति। (न)

चन्द्र। भो भोः कुमार !—

अत्यद्भुतादसि गुणातिशयात् प्रियो मे
तस्मात् सखा त्वमसि यन्मम तत्तवैव ।
तत् किं निजे परिजने कदनं करोषि
नन्वेष दर्पनिकषस्तव चन्द्रकेतुः ॥ १० ॥

तस्य वसतिं समुद्रजलस्य च भच्यत्वं निर्दिदेश इति पौराणिकी वार्त्ता। तथा च मत्स्यपुराणं।

"वड़वामुखेऽस्य वसतिः समुद्रे वै भविष्यति ।
* * * *
"एषोऽग्निरन्तकाले तु सलिलाशी मया कृतः ।"

शिखरिणी वृत्तं ॥ ९ ॥

(न) इतीति। परिक्रामति सैनामाक्रमितुं पुनरितस्ततः पादक्षेपं करोति।

अत्यद्भुतादिति। अत्यद्भुतात् एकाकिना महादुर्द्धर्षसेनाविमर्द्दनेन नितान्तविस्मयावहात् गुणानां शौर्य्यादीनां अतिशयादतिरेकात् त्वं मे मम प्रियः सखा दयितं मित्रमसि, सखित्वेन त्वामहमङ्गीकरोमीत्यर्थः तस्माद्धेतोः यत् वस्तु मम तदेव तव, आवयोरुभयोरेव परस्परमभिन्नहृदयत्वेनाभेदादिति भावः। तत्तस्मात् किं कथं निजे स्वकीये परिजने परिवाररूपे अस्मिन् सैन्यवर्गे कदनं विमर्द्दनं करोषि स्वजनपीड़नं नितान्तमनुचितमिति भावः। ननु सेनाविमर्द्दनं विना मम दर्पकण्डूया न निवर्त्तत इत्याह नन्विति। ननु सम्बोधने। एष चन्द्रकेतुः तव दर्पस्य वीरत्वाभिमानस्य निकषः निकषपाषाणः परीक्षास्थानमित्यर्थः। नितान्तसामान्यतया सैन्येषु न खलु तव दर्पपरीक्षा भवेत् किन्तु अहं ते दर्पपरीक्षया तं चूर्णयामीति भावः।

अत्र चन्द्रकेतौ निकषत्वारोपस्य प्रकृतदर्पपरीक्षोपयोगितया परिणामाऽलङ्कारः।

लवः। सहर्षसम्भ्रमं परावृत्य। अहो! महानुभावस्य प्रसन्न-कर्कशा वीरवचनप्रयुक्तिर्विकर्त्तनकुलकुमारस्य (१) तत् किमेभिः, एनमेव तावत् सम्भावयामि। (प)

पुनर्नेपथ्ये कलकलः।

लवः। सक्रोधनिर्वेदम्। आः! कदर्थितोऽहमेभिर्वारं वारं (२) वीरसंवादविघ्नकारिभिः। तदभिमुखं परिक्रामति। (फ)

तदित्यनेनान्वितस्य एवशब्दस्य तदित्यतः परमेव पाठो युक्तः, किन्तु तच्छब्दात परं पाठेन अक्रमतादोषः, स च 'वन्मम ते तदेवे'ति पाठेन समाधेयः।

वसन्ततिलका वृत्तं ॥ १० ॥

(प) लव इति। वीरस्य समानयोगलम्भेन हर्षः स्वाभाविकः, युद्धकरणाय सम्भ्रम त्वरा, ताभ्यां सहेति सहर्षसम्भ्रमं परावृत्य चन्द्रकेतोरभिमुखीभूय। महान-नुभावः प्रभावो यस्य तस्य विकर्त्तनकुलकुमारस्य सूर्यवंशोद्भवबालकस्य प्रसन्ना सखित्व-स्थापनोपन्यासेन स्नेहव्यञ्जिका कर्कशा वीरत्वगर्वेण परुषा वीरवचनप्रयुक्तिः 'नन्वयं दर्पनिकष' इत्यादि वीरजनोचितवाक्यव्यवहारः अहो विस्मयावहा इत्यर्थः, स्वजन-विमर्द्दनदर्शनेऽपि सखित्वस्थापनाभिप्रायप्रकाशनात् उद्दण्डशरकर्मदर्शनेऽपि निर्भय-हृदयत्वाच्चेति भावः। तत्तस्मात् एभिः क्षुद्रसैनिकैः किं मम प्रयोजनमित्यर्थः, एनं चन्द्रकेतुमेव सम्भावयामि युद्धकरणेन सम्मानयामि। पण्डितस्य शास्त्रालापेनेव योद्धुः युद्धेनैव सम्माननं स्यादिति भावः।

"अनुभावः प्रभावेऽपी"त्यमरः।

प्रसन्नकर्कशेति शेषपदस्य विशेष्यत्वविवक्षया कर्मधारयः।

(फ) लव इति। क्रोधेन कोपेन निर्वेदेन स्वावमाननया च सहेति सक्रोध-निर्वेदं। एतावताऽपि कालेन एतान् सामान्यसैनिकान् प्रहारेण सर्वथैव अकर्मण्यान् कर्त्तुं न शक्तोऽस्मीति मत्वा महावीरस्य लवस्य आत्मनः शक्त्यल्पत्वप्रतीतेरवज्ञा सञ्जातैवेति बोध्यं। "तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमानन"मिति साहित्यदर्पणं। आः

चन्द्र। आर्य्य! दृश्यतामेतद्द्रष्टव्यम्। (व).

दर्पेण कौतुकवता मयि बद्धलक्ष्यः
पश्चाद्बलैरनुसृतोऽयमुदीर्णधन्वा।
द्वेधा समुद्धतमरुत्तरलस्य धत्ते
मेघस्य माघवतचापधरस्य लक्ष्मीम्॥ ११॥

---

इति कोपसूचकमव्ययं। वीरस्य चन्द्रकेतो र्यः संवादः युद्धाय सम्मेलनं युद्धकरणार्थं चन्द्रकेतुना सह सम्मेलनमित्यर्थः तस्य विघ्नकारिभिः मुहुर्मुहुर्बाधाप्रदानेन अन्तराय-विधायिभिः एभिः सामान्यसैनि रैरहं वारं वारं पुनः पुनः, कुत्सितोऽर्थः चुद्रसैनिकैः सह संग्रामरूपो विषयो यस्य स कदर्थः, स कृत इति कदर्थितः इतन्तात् कदर्थशब्दात् कर्म्मणि क्तः। विडम्बितोऽस्मीत्यर्थः। तदेनेषां समुचितप्रतिविधानं मयेदानीं विधेयमितिभावः। तदभिमुखं सैन्यान् प्रतीत्यर्थः।

(व) चन्द्रेति। द्रष्टव्यं दर्शनोचितं एतत् लवस्याचरणं दृश्यतां। अतीव-विस्मयावहं लवस्ये तदाचरणमिति भावः।

तद्विस्मयावहत्वं प्रतिपादयति दर्पेणेति। चन्द्रकेतुः कीदृशो वीर इत्यवबोधाय कौतुकं औत्सुक्यमस्यास्तीति कौतुकवान्, तेन, दर्पेण वीरत्वगर्वेण हेतुना मयि बद्धलचाः कृतदृष्टिपातः, तथा पश्चात् पृष्ठभागे बलैरस्मदीयसैन्यैः, अनुसृतः अनुधावितः समाक्रान्त इत्यर्थः उदीर्णं बाणक्षेपाय उत्तोलितं धनु र्येन सः उदीर्णधन्वा अयं लवः द्वेधासमुद्धतेन द्विप्रकारेणोत्थितेन मरुता वायुना कारणेन तरलस्य चलितस्य मघवत इन्द्र स्येदमिति माघवतं चापं धनुर्धतीति माघवतचापधरस्तस्य मेघस्य लक्ष्मीं शोभां धत्ते वहति। पूर्वदिगुत्थितवायुना पश्चिमायां दिशि एकवारं चालितः द्वितीयवारञ्च पश्चिमदिगुथितवायुना पूर्वस्यां दिशि चालितः इन्द्रधनुःशाली मेघो यादृशीं शोभां धत्ते नवजलधरश्यामसुन्दरवपुरयं लवोऽपि सम्मुखवर्त्तिनं मां प्रत्येकवारं धनुरुत्तोलयन् पुनः पृष्ठदेशादाक्रमणकारिणः सैनिकान् प्रति धनुरुत्तोलयन् तादृशीं शोभां धत्त इति सरलार्थः। सुतरां आश्चर्य्यमेवैतदस्याचरणमिति भावः।

मम। कुमार एवैनं द्रष्टुमपि जानाति, वयन्तु केवलं परवन्तो विस्मयेन। (भ)

चन्द्र। भो भो राजानः ! ।

संख्यातीतैर्द्विरदतुरगस्यन्दनस्थैः पदाता-
वत्रैकस्मिन् कवचनिचितैर्मेध्यचर्म्मोत्तरीये ।

---

अत्र अन्यस्य लक्ष्मीं कथमन्यो धत्त इति वस्तुसम्बन्धोऽसम्भवन् मित्रस्य लक्ष्मीमिव लक्ष्मीमिति सादृश्याक्षेपान्निदर्शनाऽलङ्कारः तथा मित्रमाधेति व्यञ्जनानां सकृदनेकधा साम्यात् छेकानुप्रासस्य, अनयोः संसृष्टिः।

दर्पकौतुकयोरेकत्वात्मवृत्तिधर्म्मत्वात् दर्पस्य सामानाधिकरण्यसम्बन्धेन कौतुकवत्त्वं बोध्यं।

वसन्ततिलका वृत्तं ॥ ११ ॥

(भ) कुमेति। अपिशब्दः सम्भावनायां। कुमारो भवानेव नतु मादृश इत्येवशब्दार्थः एनं लवं द्रष्टुं जानाति दृष्ट्वा यथार्थतया परिचेतुमर्हतीत्यर्थः अपि इत्यहं सम्भावयामीत्यर्थः। वीरो वीरेणैव परिचेतुं शक्यते न तु मादृशदुर्वलजनेनेति-भावः। तु किन्तु वयं अहमित्यर्थः "वास्मदयं"ति वहुवचनं विस्मयेन असाधारणकर्म्मदर्शनेन परवन्तः पराधीनाः जड़भावमापन्ना जाता इत्यर्थः। अस्य तावदद्भुतकार्य्यदर्शनेन मम चैतावान् विस्मयो जातः येन 'अयं कीदृश'इति निर्णेतुमपि न शक्नोमीति भावः।

संख्येति। संख्यामतीता इति संख्यातीता तैरसंख्यैः, द्विरदा गजाः, तुरगा घोटकाः स्यन्दना रथा इति द्विरदतुरगस्यन्दनं तस्मिन् तिष्ठन्तीति तत्स्थैः, कवचनिचितैः वर्म्मावृतगात्रैः कालज्येष्ठैर्वयोवृद्धैः भवद्भिः, एकस्मिन् द्वितीयसहायरहिते पदातौ पादचारिणि भूतलस्थित इत्यर्थः मेध्यं पवित्रं चर्म्म मृगाजिनं उत्तरीयं प्रावारो यस्य तस्मिन्, अभिनवेन किशोरत्वात् नव्येन वयसा काम्यः कमनीयः कोमल इति यावत् कायः शरीरं यस्य तस्मिन्, अत्र अस्मिन् दृश्यमाने लवे युधि युद्धे योऽयं

कालज्येष्ठै रभिनववयः(१) काम्यकाये भवद्भि-
र्योऽयं वद्धो युधि परिकर स्तेन वो धिग्(२)धिगस्मान्॥१२॥

लवः। सक्षोभं। (३) कथमनुकम्पते नाम। विचिन्त्य। भवतु, कालहरणप्रतिषेधाय जृम्भकास्त्रेण तावत् सैन्यानि संस्तम्भयामि। इति ध्यानं नाटयति। (म)

---

परिकरः आरम्भो वद्धः कृतः तेन हेतुना वो युष्मान् धिक् तथा अस्मान् तानपि धिक् निन्दामीत्यर्थः। भवाद्दशामन्यायसमरप्रवृत्तानां नेतृत्वात् तथा यूयमसंख्याः अयन्तु एकः यूयं हस्त्यश्वरथारोहणात् अक्लान्तदेहाः अयन्तु चरणाभ्यां सञ्चरणात् नितान्तक्लान्तदेहः यूयं दुर्भेद्यकवचावृतगात्राः एष तु सामान्यत्वगचर्म्ममात्रावृतगात्रः, यूयं वयोवृद्धत्वेन पूर्णावयवतया चिरायापिश्रमसहाः असौ तु बालकत्वात् कोमलकलेवरतया सहसैव श्रमक्लान्त इति युष्माकमनेन सार्द्धं समरं कथमपि न सङ्गच्छत इति भावः।

अत एवात्र विषमालङ्कारः।

"परिकरः।...समारम्भ" इति शब्दकल्पद्रुमः।

मन्दाक्रान्ता वृत्तम्॥ १२॥

(म) लव इति। क्षोभेण चित्तचाञ्चल्येन ममासामर्थ्यं जानता चन्द्रकेतुनाऽहमवज्ञात इत्यवधारणात् मनोदुःखेन सह वर्त्तत इति सक्षोभं। नामात्र क्रोधसूचकं कथं केन हेतुना अनुकम्पते दयते मां प्रति दयां कुरुते चन्द्रकेतुरित्यर्थः। लोके दुर्बलं प्रत्येव दया दृश्यते किन्तु नखल्वहं दुर्बल इति भावः। विचिन्त्य विविच्य। भवतु मां प्रति दया वा क्रोधो वेति शेषः न तेन किञ्चिन्ममायाति याति वेति भावः। कालहरणप्रतिषेधाय एभिः सह युद्धेन अनर्थककालविलम्बनिवृत्तये। तावत् सैन्यानि

---

(१) क्वचित् कुलपदं नास्ति। (२) पुस्तकान्तरे वारं वारमिति नास्ति। (३) सौन्मादमिति विभिन्नः पाठः।

सुम। तत्किमकस्मादस्मत्सैन्यघोषः प्रशाम्यति। (य)

लव:। पश्याम्येनमधुना प्रगल्भम्। (र)(१)

सुम। ससम्भ्रमं। वत्स! मन्ये कुमारेणानेन जृम्भकास्त्रमामन्त्रितम्। (ल)

चन्द्र। अत्र कः सन्देहः। (व)

व्यतिकर इव(२) भीमस्तामसो वैद्युतश्च
प्रणिहितमपि चक्षुर्ग्रस्तमुक्तं हिनस्ति।

सर्वाणि बलानि संस्तम्भयामि मोहाविशवशेन अकर्म्मण्यानि करोमि, तदा न युद्धाकालक्षेपं कर्त्तुं शक्नुयुरिति भावः। ध्यानं नाटयति ध्यानभावं अभिनयति।

(य) सुमेति। तत्तदा लवकर्त्तृकधिक्कारमात्र एवेत्यर्थः, किं कथं अकस्मात् हठात् अस्मत्सैन्यानां घोषः कोलाहलः प्रशाम्यति विरमति।

(र) लव इति। प्रगल्भं धृष्टं साहङ्कारं भाषमाणमित्यर्थः, एनं चन्द्रकेतुं अधुना पश्यामि अस्य कियत्परिमितं बलमस्तीति परीक्षे इत्यर्थः। जृम्भकास्त्रेण मोहापन्नतया सैन्यैः कालक्षेपकरणासम्भवात् अस्य परीक्षाया अयमेवावसर इति भावः।

(ल) सुमेति। ससम्भ्रमं त्वरया सहितं। आमन्त्रितं मन्त्रपाठद्वारा समाहूतं प्रयुक्तमित्यर्थः।

(व) चन्द्रेति। अत्र जृम्भकास्त्रप्रयोगविषये।

स्वयमपि जृम्भकास्त्रप्रयोगमेव समर्थयति व्यतिकर इति। भीमो भयानकः, तमसोऽन्धकारस्यायमिति तामसः, विद्युतस्तडितोऽयमिति वैद्युतश्च व्यतिकरः समवायः तमस्तेजसोर्गाढसंयोग इत्यर्थः, इव सैन्यमध्ये प्रणिहितमपि किमर्थमेते निस्पन्दा नीरवाश्च जाता इति निश्चयाय सावधानतया निक्षिप्तमपि चक्षुः नयनं आदौ ग्रस्तं

(१) सप्रगल्भमिति पाठान्तरं। (२) व्यतिकर इवेति पाठभेदः।

अथ लिखितमिवैतत् सैन्यमस्पन्दमास्ते
नियतममितवीर्य्यं(१) जृम्भते जृम्भकास्त्रम् ॥१३॥

आश्चर्य्यमाश्चर्य्यं। (ञ)

पातालोदरकुञ्जपुञ्जिततमः श्यामैर्नभो जृम्भकै-
रुत्तप्तस्फुरदारकूटकपिलज्योतिर्ज्वलद्दीप्तिभिः।

---

अन्धकारेणावृतं दृष्टिशक्तिशून्यीकृतमित्यर्थः अनन्तरं मुक्तं परित्यक्तं तमोरूपावरणात् बहिष्कृतं उपस्थितदृष्टिकमित्यर्थः कृत्वा हिनस्ति निपीड़यति। अथेति वाक्यान्तरारम्भे। एतत् सैनां इदमस्मदीयं बलं लिखितमिव चित्रितमिव निस्पन्दमास्ते निश्चेष्टमवतिष्ठते अत एव अमितवीर्य्यं महाप्रभावं जृम्भकास्त्रं नियतं जृम्भते निश्चितं प्रादुर्भवति। अन्यथा सर्वेषामीदृशी दशा न स्यादिति भावः।

अत्र लिखितमिवेत्युपमा, तस्याश्च विच्छित्तिवशात् तत्कारणीभूतजृम्भकास्त्र-प्रादुर्भावरूपसाध्यस्य कार्य्यीभूत सैन्यनिस्पन्दत्व-चक्षुःपीड़ाकरत्वरूपसाधनेन ज्ञानादनु-मानालङ्कारः, अनयोरङ्गाङ्गिभावेन सङ्करः, जृम्भजृम्भेतिच्छेकानुप्रासश्च तेन संसृष्टिः।

"व्यतिकरः। व्यतिसङ्ग"इति शब्दकल्पद्रुमः।

मालिनी वृत्तं ॥ २३ ॥

(ञ) आश्चर्य्यमाश्चर्य्यमित्यतिशये द्विरुक्तिः।

पातालोदरेति। पातालस्य स्वाभाविकान्धकारविशिष्टस्य रसातलस्य उदरं मध्ये यानि कुञ्जानि लतादिसमाच्छादितस्थानानि तत्र पुञ्जितानि राशीकृतानि यानि तमांसि अन्धकाराः तानीव श्यामानि अतीवकृष्णवर्णानि तैः। अन्धकाराणामतीव गाढ़त्वप्रतिपादनार्थं पातालोदरादिग्रहणं। तथा उत्तप्तं वह्नितापाद्द्रवीभूतं अत एव स्फुरत् दीप्यमानं यत् आरकूटं पित्तलं तस्य यत् कपिलं पिङ्गलवर्णं ज्योतिस्तेजः तद्वत् ज्वलन्ती प्रकाशमाना दीप्तिः प्रभा येषां तैः तथाभूतैः जृम्भकैः जृम्भकास्त्रैः, कल्पं

---

(१) अजितवीर्य्यमिति पाठान्तरं।

कल्पाक्षेपकठोरभैरवमरुद्व्यस्तैरवाकीर्य्यते (१)
मीलन्मेघ(२) तड़ित्कड़ारकुहरैर्विन्ध्याद्रिकूटैरिव ॥१४॥

सुम। कुतः पुनरस्य जृम्भकाणामागमः स्यात्? ।(प) (३)

---

ब्रह्मणोदिनं ब्रह्मणोदिनवर्त्ति सचराचरं जगदित्यर्थः आक्षिपन्ति उन्मीलनादिना संहरन्ति ये ते कल्पाक्षेपाः कर्म्मखण्, कठोरा दृढ़ाः, भैरवा भयङ्करा ये मरुतः मिलितोनपञ्चाशद्वायवः तैः स्तयोक्तैर्मरुद्भिः व्यस्तैः विन्ध्याद्रिगात्रात् निक्षिप्तैः, मीलन्तः संयुज्यमाना मेघाः कृष्णवर्णवारिदा येषु ते, तथा तड़िद्भिः तेषां मेघानां विद्युद्भिः कड़ाराणि पिङ्गलवर्णानि कुहराणि गुहा येषां ते, मीलन्मेघाश्च ते, तड़ित्कड़ारकुहराश्चेति तैस्तथोक्तैः विन्ध्याद्रेः विन्ध्यपर्वतस्य कूटैः शृङ्गैरिव नभः गगनतलं अवाकीर्य्यते आच्छन्नं क्रियते। अतीवभीषणानि जृम्भकास्त्राणीतिभावः।

अत्र भावाभिमानिनी वाच्या उत्प्रेक्षाऽलङ्कारः। तथा प्रथमपादे कृत्रपुत्रेति च्छेकानुप्रासः अन्यपादेषु वृत्त्यनुप्रास इत्यनयोः संसृष्टिः।

"प्रचण्डपवनो राजं स्ततो वर्षशतं पुनः।
संवर्त्तको नाम महान् ब्रह्माण्डं चालयिष्यति॥"

इति पद्मपुराणादिवचनात् प्रलयकाले वायुना शैलशृङ्गादिनिक्षेपस्य वास्तविकत्वादलोपमालङ्कार इति केचित् प्रलपन्ति।

"रीतिः स्त्रियामारकूटः न स्त्रियां"। "कुहरं शुषिरं विवरं छिद्रं।"

"कड़ारः कपिलःपिङ्गपिशङ्गौ कद्रुपिङ्गला"विति चामरः। "कल्पः शास्त्रे विधौ न्याये संवर्त्ते ब्रह्मणो दिने"इति मेदिनी।

शार्दूलविक्रीड़ितं वृत्तं॥ १४॥

(प) सुमेति। अप्रथमे पुनःशब्दः "पुनरप्रथमे भेदे" इत्यमरकोषात्।

(१) अवास्तीर्य्यते इति क्वचित् पाठः। (२) नीलाम्भोद इति पाठभेदः।

(३) जृम्भकास्त्राधिगम इति पाठान्तरं।

चन्द्र । भगवतः प्राचेतसादिति मन्यामहे । (स)

सुम । नास्य व्यवहारोऽस्त्रेषु, विशेषतो जृम्भकेषु । यतः, —(ह)

कृशाश्वतनयाह्येते कृशाश्वात् कौशिकं गताः ।
अथ तत्सम्प्रदानेन रामभद्रे व्यवस्थिताः (१) ॥ १५ ॥

प्रथमं रामभद्री विश्वामित्रात्प्राप्तः, पुनर्द्वितीयवारं अस्य लवस्य कुतः कस्मात् जनात् जृम्भकाणां एषां जृम्भकास्त्राणां आगमः प्राप्तिः ।

(स) चन्द्रेति । प्राचेतसात् वाल्मीकेः, अस्य जृम्भकाणामागम इत्यन्वयः ।

(ह) सुमेति । अस्य वाल्मीकेः अस्त्रेषु न व्यवहारः, अस्त्रेण संग्रामं न कुरुते इत्यर्थः जृम्भकेषु अस्त्रेषु विशेषतः व्यवहारो नास्त्येवेत्यर्थः । वाल्मीकिः सर्वज्ञतया सर्वं धनुर्वेदादिकं जानात्येव किन्तु स्वयमसौ अस्त्रं प्रयुक्तवान् किम्बा परस्मै समुपदिष्टवानिति न श्रूयते, अतएव तस्मात् लवस्य जृम्भकास्त्रप्राप्तिरिति न सम्भवत्येवेति भावः । वाल्मीकी जृम्भकव्यवहारासम्भवं दर्शयति यत इति ।

कृशाश्वेति । एते जृम्भकास्त्रपदार्थाः कृशाश्वस्य प्रजापतेः तनयाः पुत्ररूपेणोत्पन्नाः, तस्माच्च कृशाश्वात् कौशिकिं विश्वामित्रं गताः । अथ अनन्तरं तस्य विश्वामित्रस्य सम्प्रदानेन वितरणेन हेतुना रामभद्रे व्यवस्थिताः रामभद्रस्य प्रयोज्या इत्यर्थः । अतो वाल्मीकेर्व्यवहारोऽसम्भव एवेति भावः ।

अत्र जृम्भकाणां कृशाश्वादिष्वनेकेषु गमनात् पर्य्यायनामाऽलङ्कारः । तथा निष्प्रयोजनहिशब्दप्रयोगात् निरर्थकत्वदोषः, किञ्च पुनः कृशाश्वादित्युपादानात् कथितपदतादोषश्च तेन च 'कृशाश्वतनया एते तस्माच्च कौशिकं गता' इति पाठः साधीयान् ।

प्रथमतो ब्रह्मा जृम्भकास्त्राण्युत्पादयामास, ततस्तान्येव दक्षकन्यायां जयायां सुप्रभायाञ्च पत्न्यां कृशाश्वस्य पुत्रत्वं ययुः, तस्माच्च कृशाश्वात् तान्यस्त्राणि विश्वामित्रो लेभे, विश्वामित्रेण च ताड़कावधात् पूर्वं रामाय प्रदत्तानीति रामायणवार्त्ता ॥ १५ ॥

---

(१) अथ तत् सम्प्रदायेनेति, रामभद्रं स्थिता इति, इति च पाठभेदौ ।

चन्द्र। अपरेऽपि परमोपचीयमानसत्त्वप्रकाशाः स्वयं हि मन्त्रद्रष्टारः पश्यन्ति। (१) (क)

सम। वत्स! सावधानो भव, परागतः प्रवीरः। (ख)

कुमारौ। अन्योन्यं प्रति। अहो प्रियदर्शनः कुमारः। (ग)

सस्नेहानुरागं निर्वर्ण्य।

यदृच्छासंवादः किमु, किमु गुणानामतिशयः,
पुराणो वा जन्मान्तरनिविड़बन्धः परिचयः।

---

(क) चन्द्रेति। अपरेऽपि अन्येऽपि वाल्मीकिभिन्ना अपीत्यर्थः परमं सातिशयं उपचीयमानस्य रजस्तमोऽभिभवेन वर्द्धमानस्य सत्त्वस्य सत्त्वगुणस्य प्रकाश आविर्भावो येषु ते तथोक्ताः, योगाभ्यासेन लब्धकेवलसत्त्वगुणप्रकाशा इत्यर्थः मन्त्रद्रष्टारः महाप्रभाववेदादिमन्त्राणां ज्ञातारः योगिन इति शेषः स्वयं हि आत्मनैव पश्यन्ति जानन्ति, योगिनः परोपदेशमन्तरेण स्वयमेव सत्त्वप्रकाशे संयमविधानेन जगतां सर्वमेवावगच्छन्तीत्यर्थः। सुतरां लवस्य वाल्मीकिभिन्नादपि कस्माच्चित् योगिजनात् जृम्भकास्त्राणां प्राप्तिर्भवेदिति सम्भाव्यत इति भावः।

सत्त्वप्रकाशसंयमस्य फलमाह पातञ्जलसूत्रं—

"प्रवृत्त्यालोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्टज्ञानम्।"

(ख) सुमेति। सावधानो भव आत्मरक्षां प्रति लवस्याक्रमणं प्रति च एकाग्रचित्तो भव, यतः स प्रवीरः महावीरो लवः परागत उपस्थितः। अत्र वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः।

(ग) कुमाराविति। प्रशंसायामहोशब्दः। प्रियं परमसुन्दरत्वात् सन्तोषकरं दर्शनमवलोकनं यस्य सः, कुमारौ लव चन्द्रकेतुश्च।

यदृच्छेति। एतस्मिन् लवे चन्द्रकेतौ च दृष्टे सति यदृच्छया दैववशेन संवादः

(१) प्रचीयमान सत्त्वप्रकाशाः स्वयं सर्वमन्त्रद्रष्ट इति पाठान्तरं।

निजो वा सम्बन्धः किमु विधिवशात् कोऽप्यविदितो
ममैतस्मिन् दृष्टे हृदयमवधानं रचयति॥ १६॥

सुम। भूयसा जीविधर्म्म एषः, यद्रसमयी कस्यचित् क्वचित् प्रीतिः; यत्र लौकिकानामुपचार(१)स्तारामैत्रकं वा(२)चक्षूराग इति, तमप्रतिसंख्येयमनिवन्धनं प्रेमाणमामनन्ति। (घ)

---

जातं सम्मेलनं दैववशादेव आवयोरिदं सम्मेलनं जातं न तु किमपि निर्द्दिष्टकारणमस्यासीदिति भावः, किमू किम्, गुणानां अस्मिन् कुमारे विद्यमानानां शौर्य्यधैर्य्यादीनां अतिशय आधिक्यं, वा अथवा जन्मान्तरे अन्यस्मिन् जन्मनि निविड़ो दृढ़ो वन्धः संश्लेषणं वन्धुत्वसूत्रेण वन्धनमित्यर्थः यस्मिन् सः तथोक्तः पुराणः प्राक्तनः परिचयः 'असौ स'इति विशेषज्ञानं वा किंवा विधिवशात् अदृष्टाधीनत्वात् अविदितः अज्ञातः कोपि निजः स्वकीयः सम्बन्धः भ्रातृत्वादिः किम् किं, मम हृदयं अन्तःकरणं अवधानं प्रणयैकाग्रतां रचयति प्रापयति प्रणयैकाग्रताविशिष्टं करोतीत्यर्थः। दृष्टमात्रमेव एनं कुमारं प्रति यन्मम हृदयमेकतानं आनन्दितञ्च जातं, तत्र किं अतीवशुभक्षणो जातसम्मेलनं कारणं, किम्वा अस्य असाधारणगुणग्राम एव हेतुः, अथवा जन्मान्तरीयः कोऽपि वन्धुत्वपरिचयो वीजं, आहोस्वित् अविज्ञातः कोऽपि भ्रातृत्वादिसम्बन्धः कारणं भवेदिति सरलार्थः, नखलु तन्निर्णेतुमर्हामीति भावः।

अत्र वारं वारं किमुशब्दोपादानात् अनवीकृतत्वदोषः, किन्तु प्रथमचरणे 'किमु किमु' इत्यत्र 'किमूत नु' इति पाठेन तृतीयचरणेच 'किमु' इत्यत्र नन्विति पाठेन च दोषाभावः।

शिखरिणी वृत्तं॥ १६॥

(घ) सुमेति। भूयसा वाहुल्येन एष वक्ष्यमाणः जीविधर्म्मः प्राणिनां स्वभावः, कोऽसावित्याह यदिति। कस्यचित् जनस्य क्वचित् कस्मिंश्चित् जने यत् रसमयी

---

(१) व्याहार इति पाठान्तरं। (२) कस्मिंश्चित् पुस्तके वाशब्दो नास्ति।

अहेतुः पक्षपातो यस्तस्य नास्ति प्रतिक्रिया ।
स हि स्नेहात्मकस्तन्तु रन्तर्मर्म्माणि सीव्यति ॥ १७ ॥

कुमारौ । अन्योन्यं प्रति । (१)

अनुरागात्मिका प्रीतिः प्रणयो जायते, स एष जीविधर्म्म इत्यर्थः । ननु कथमसौ जायत इत्याह यत्रेति । यत्र प्रेमणि तारयोः कनीनिकयोः मैत्रकं मित्रमिति तारामैत्रकं परस्परमिलितचक्षुस्ताराजन्यं बन्धुत्वमित्यर्थः, वाशब्दः समुच्चये, चक्षुषोः परस्परमिलितयोर्नयनयोरागोऽनुराग इति लौकिकानां लोकवृत्तान्ताभिज्ञानां उपचारो व्यवहारः । तथा च परस्परनयनतारासम्मेलनमात्रमेव ( दृष्टिमात्रमेव ) अन्योन्यस्य अन्योन्यं प्रति यः प्रणयो जायते, तस्य 'तारामैत्रकं' चक्षूराग'इति च संज्ञाद्वयं लोकवृत्तान्ताभिज्ञैर्व्यवह्रीयते इति निष्कर्षः । तं प्रेमाणं प्रणयं अप्रतिसंख्येयं इयत्तया संख्यातुमशक्यं अत्यधिकमित्यर्थः, निबध्यते अनेनेति निबन्धनं कारणं, अनिबन्धनं केनचित् कारणेन अनुत्पादितं ईश्वरेच्छया समुत्पन्नमित्यर्थः आमनन्ति ब्रुवन्ति लौकिकाचाराभिज्ञा इति शेषः । तादृशप्रीतौ ईश्वरेच्छैव कारणमिति भावः "तारकाक्ष्णः कनीनिका" । "प्रेमा ना प्रियता हार्द्द"मितिचामरः ।

अस्यैव प्रेम्णो विशेषमाह अहेतुरिति । अहेतु र्निर्णिमित्तकः उपकार-सौन्दर्य्यादि-सम्बन्धरूपविशिष्टकारणं विना जायमान इत्यर्थः यः पक्षपातः परस्परं प्रणयः, तस्य पक्षपातस्य प्रतिक्रिया प्रतीकार उच्छेद इति यावत् नास्ति न वर्त्तते ; तादृशप्रणयजनकेश्वरेच्छायाः सर्वदैव सत्त्वात्, उपकारादिरूपकारणजन्यप्रणयस्य तु समुच्छेदो भवत्येव तादृशकारणापाये अन्वयव्यतिरेकानुविधायित्वादिति भावः । हि यस्मात् स्नेहात्मकः तादृशपक्षपाताभिन्नः प्रगाढ़प्रणयरूप इति यावत् तन्तुः सूत्रं अन्तर्मर्म्माणि अभ्यन्तरसन्निस्थानानि अन्योन्यस्य अन्तःकरणमिति यावत् सीव्यति ग्रथ्नाति, अतएव तादृश प्रणयभङ्गो नितरामसम्भव एव, स तु युवयो र्जात इति प्रतीयत इति भावः ।

अत्र कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः अश्लिष्टशब्दनिबन्धनं

---

(१) अन्योन्यमुद्दिश्येति पाठान्तरं ।

एतस्मिन् मसृणितराजपट्टकान्ते
मोक्तव्याः कथमिव सायकाः शरीरे।
यत्प्राप्तौ मम परिरम्भणाभिलाषात्
उन्मीलत्(१)पुलककदम्बमङ्गमास्ते ॥ १८ ॥

किन्त्वाक्रान्तकठोरतेजसि गतिः का नाम शस्त्रं विना,
शस्त्रेणापि हि तेन किं, न विषयो जायेत यस्येदृशः।

परम्परितरूपकञ्च परस्परान्तराकर्षणे सेवनत्वारोपं प्रति स्नेहे तन्तुत्वारोपस्य कारणत्वात्, अनयोश्चाङ्गाङ्गिभावेन सङ्करः।

सीव्यतीति 'सिवु तन्तुसन्ताने, इत्यस्य प्रयोगः 'सेलाइ'इति तस्य वङ्गभाषा ॥ १७ ॥

एतस्मिन्निति। मसृणितः चिक्कणः क्रतः यो राजपट्टः मणिविशेषः स इव कान्तं मनोरमं तस्मिन्, एतस्मिन् शरीरे लवस्य चन्द्रकेतोश्च देहे कथमिव केन प्रकारेण इवशब्दो वाक्यालङ्कारे, सायकाः वाणाः मोक्तव्याः प्रहाराय निक्षेप्तव्याः मयेति शेषः कथमपि वाणा निक्षेप्तुं न शक्यन्ते स्नेहेन वाधाप्रदानादिति भावः। यस्य शरीरस्य प्राप्तौ सत्यां परिरम्भणस्य आलिङ्गनस्य अभिलाषात् इच्छावशात् मम अङ्गं उन्मीलत् उत्तिष्ठत् पुलकानां रोमाञ्चानां कदम्बं समूहो यस्मिन् तत्तथोक्तं सत् आस्ते वर्त्तते।

अत्र लुप्तोपमाऽलङ्कारः।

"राजपट्टः। मणिविशेष"इति शब्दकल्पद्रुमः।

मसृणः क्रत इति मसृणितः करोत्यर्थेनन्तात् कर्म्मणि क्तः।

प्रहर्षिणी वृत्तं ॥ १८ ॥

किन्त्विति। भेदे किन्तुशब्दः, अस्मिन् स्निग्धकोमलकाये सायका मोक्तुं न शक्याः किन्तु इति पूर्वश्लोकेनान्वयः। आक्रान्तं वलेन आवद्धं कठोरं प्रचण्डं तेजो मदीयः प्रभावो येन तस्मिन् तथोक्ते, अश्वधारणेन मत्प्रभावाक्रमणकारिणि लवे युद्धाय स्पर्द्धा-

(१) आवद्धोत्पुलकेति पाठभेदः।

किं वच्यत्ययमेवयुद्ध(१)विमुखं मामुद्यतेऽप्यायुधे
वीराणां समयो हि दारुणरसः स्नेहक्रमं वाधते ॥ ॥ १८ ॥

सुम। (लवं निर्वर्ण्य सास्रमात्मगतं) हृदय! किमन्यथा परिकल्पसे। (ङ)

---

पूर्वकाह्वानेन मत्प्रभावाक्रमणकारिणि चन्द्रकेतौ चेति स्पष्टार्थः, शस्त्रं विना शस्त्रनिक्षेपमन्तरेण का गतिः क उपायः, सम्भावनायां नामशब्दः उपायान्तरं नान्यं वेति सम्भाव्यत इत्यर्थः। ननु शस्त्रं परिहाय साम्ना सन्धिः क्रियतामित्याह शस्त्रेणेति। तेन शस्त्रेणापि किं किं प्रयोजनमित्यर्थः, यस्य शस्त्रस्य ईदृश इत्थम्भूतो महावीरः विषयः प्रयोगस्थलं न जायेत न भवेत्। यदीदृशेन महावीरेण सह न मे युद्धं स्यात् तर्हि युद्धशिक्षैव निस्फलेति भावः। युद्धाकरणे दोषान्तरमाह किमिति। आयुधे उद्यतेऽपि मां प्रति निक्षेपाय अनेन शस्त्रे उत्तोलितेऽपि युद्धविमुखं संग्रामपराङ्मुखं मां अयमेव तिष्ठन्तु तावदन्ये, मत्समानः प्रतिपक्षो बलगर्वित एष एव वीरः किं वक्ष्यति, भीतोऽयं कापुरुषः संग्रामात् विरत इति वक्ष्यतीत्यर्थः अतएव युद्धादन्यदिदानीं न मे करणीयमस्तीति भावः। ननु तथात्वे प्रणयभङ्गोभवेदित्याह वीराणामिति। हि यस्मात् दारुणो निष्ठुरत्वात् भयङ्करः रसः क्रोधात्मिका मनोवृत्ति र्यस्मिन् स दारुणरसः वीराणां समय आचारः परस्परप्रहाररूपो व्यवहार इति यावत् स्नेहक्रमं प्रीतिपरम्परां बाधते उत्सादयन्ति। सुतरामावश्यकत्वादङ्गीकरणीय एव प्रणयभङ्ग इति भावः।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः। द्वितीयपादे यच्छब्दघटितवाक्यस्य परत्र पाठात् विधेयाविमर्शदोषः पादपूरणमात्रार्थकहिशब्दान्निरर्थकत्वदोषश्च, तयोश्च "यस्येदृक्प्रवलोभवेन्न विषयस्तेनापि शस्त्रेण कि"मिति पाठे न समाधानं स्यात्।

"समयः शपथाचारकाल सिद्धान्त संविदः" इत्यमरः।

शार्दूलविक्रीड़ितं वृत्तं ॥ १८ ॥

(ङ) सुमेति। अन्यथा अपरिचितवीरवालकभिन्नप्रकारेण रामचन्द्र-पुत्रत्वेनेत्यर्थः किं कथं परिकल्पसे वितर्कयसि। तदसम्भवमिति भावः।

---

(१) किं वक्ष्यत्ययमेवमद्य विमुखमिति पाठान्तरं।

मनोरथस्य यद्बीजं तद्दैवेनादितो हृतम् ।
लतायां पूर्वलूनायां प्रसूनस्यागमः कुतः ॥ २० ॥

चन्द्र । अवतराम्यहमार्य्य ! सुमन्त्र ! स्यन्दनात् । (च)(१)

सुम । तत् कस्य हेतोः ? । (छ)

चन्द्र । यतस्तावदयं वीरपुरुषः पूजितो भवति, अपि च खल्वार्य्य ! क्षात्रधर्म्मः परिपालितो भवति ; न रथिनः पादचारमायोधयन्तीति शास्त्रविदः परिभाषन्ते । (ज)(२)

---

तदसम्भवत्वं प्रतिपादयति मनोरथस्येति । मनोरथस्य एष शिशुवीरः सीतागर्भजातो रामचन्द्रस्य पुत्रो भवेदित्येवमनुभिलाषस्य यत् बीजं सीतारूपं कारणं, दैवेन दुरदृष्टेन आदितः प्रथमत एव तत् हृतं विनाशितं । हिंस्रसमाकुलारण्ये एकाकिन्या निर्वासितायाः सीतायाः क्षणमपि जीवनधारणासम्भवात् एष तस्याः पुत्र इति कथमपि न सम्भवतीति भावः । इममर्थं दृष्टान्तेन द्रढ़यति लतायामिति । लतायां कस्याञ्चित् वल्लर्यां पूर्वं प्रागेव लूनायां छिन्नायां प्रसूनस्य पुष्पस्य आगम उत्पत्तिः कुतः कस्माद्धेतोर्भवेदित्यर्थः अपितु कथमपि नेत्यर्थः । यथा पूर्वलूनायां लतायां प्रसुनोत्पत्तिकामना असम्भवा तथा चिराय मृतायां सीतायां अस्याप्युत्पत्तिसम्भावना सर्वथैवासम्भवेति रामपुत्रत्वेनास्य सम्भावना भ्रमसूलैवेति भावः ।

अतएव प्रतिबिम्बनादत्र दृष्टान्तालङ्कारः । हृतलूनेत्युभयत्रापि निष्ठाप्रत्ययान्ततया आदिपद पूर्वपदानुपादानेऽपि यद्यपि अतीतत्वज्ञानं स्यात् तथापि अवधारणार्थपरतया तयोर्निर्द्देशात् न अधिकपदत्वदोष इति सुधीभिर्विभावनीयं ॥ २० ॥

(च) चन्द्रेति । स्यन्दनात् रथात् । अनुमतिप्रार्थनार्थमुक्तिरियं चन्द्रकेतोः ।

(छ) सुमेति । तदवतरणं । कस्य हेतोरिति षष्ठी हेतुप्रयोगे ।

(ज) चन्द्रेति । तावत् वाक्यालङ्कारे । पूजितः सम्मानितः । रथात् समान-

---

(१) कस्मिंश्चित् पुस्तके अहमिति पाठो नास्ति । (२) अपि खलु आर्य्य-

सुम। स्वगतं। कष्टां दशामनुप्रपन्नोऽस्मि। (भ) (१)

कथं न्याय्यमनुष्ठानं मादृशः प्रतिषेधतु।
कथं वाप्यनुजानातु साहसैकरसां क्रियाम्॥ २१।

स्थलावतरणेन निर्जीड्यपरिहारात् सम्मानं प्रदर्शितं स्यादिति भावः। क्षत्रियाणामयमिति क्षात्रः सचासौ धर्मोनियमश्चेति क्षात्रधर्मः परिपालितः सुरक्षितः। ननु कोऽसौ क्षात्रधर्मः यदर्थं त्वमेवं साहसमनुष्ठातुमिच्छसीत्याह नेति। रथिनो रथारोहिनो योद्धारः पादचारं पदातिं प्रतिपक्षयोद्धारमित्यर्थः न आयोधयन्ति न प्रहरन्ति इति शास्त्रविदो मन्वादयः परिभाषन्ते सर्वथा ब्रुवन्ति। रथादवतरणे समानस्थानगतत्वात् तन्निषिद्धवर्जनरूपः क्षात्रधर्मः परिरक्षितोभवेदिति भावः। तथा च मनुः—

"न च हन्यात् स्थलारूढ़ं न क्लीवं न कृताञ्जलिम्।" इत्यादि।

"स्वयं रथस्थो रथं त्यक्त्वा स्थलारूढ़ं न हन्या"दिति कुल्लूकभट्टः।

(भ) सुमेति। कष्टां दशां दुःखकरीमवस्थां अनुप्रपन्नः प्राप्तः।

कथमेतदित्याह कथमिति। मादृशो युद्धधर्मज्ञो रघुकुलनियमज्ञश्च जनः न्यायादनपेतं न्याय्यं सङ्गतं अनुष्ठानं रथाच्चन्द्रकेतोरवतरणरूपं कार्य्यं कथं केन प्रकारेण प्रतिषेधतु निवारयतु निवारयितुं शक्नुयात् अपि तु कथमपि नेत्यर्थः। शास्त्रन्यायसिद्धकार्य्यनिषेधे विहितानतुष्ठानप्रयोजकत्वेन प्रत्यवायः स्यादिति भावः। साहसं हठकारित्वमेव एकः केवलः रसः अवतरणप्रवर्त्तको रागो यस्यां तां तथोक्तां क्रियां रथादवतरणरूपं कार्य्यं कथं वापि अनुजानातु अनुमन्यतां। रथादवतीर्णस्य चन्द्रकेतोरीदृशेन महावीरेण सह समरे विपत्तिसम्भावनेवाधिकेति तदनुमन्तुमपि न शक्यते अतएव तदुभयो-

क्षात्रधर्मश्चानुगृहीतो भवति। क्षात्रधर्मः समनुगतो भवति। रथिनः पादचारमभियुञ्जन्तीति विभिन्नाः पाठाः।

(१) कष्टं वतानुप्रपन्नः। विपदमनुप्रपन्न इति च पाठभेदौ।

चन्द्र। यदा तातमिश्रा अपि पितुः प्रियसखं (१) धर्म्मार्थ-संशयेष्वार्य्यमेव पृच्छन्ति, तत् किमार्य्योविमृशति। (ञ)

सुम। आयुष्मन्! एवं यथाधर्म्ममभिमन्यसे। (ट)

एष सांग्रामिकोन्याय एषधर्म्मः सनातनः।
इयं हि रघुसिंहानां वीरचारित्रपद्धतिः॥ २२॥

रेकतरावधारणावश्यकत्वेऽपि तत्कर्त्तुमसामर्थ्यात्, कष्टां दशामनुप्रपन्नोऽस्मीति भावः।

अत्र अर्थापत्तिद्वयस्य संसृष्टिरलङ्कारः॥ २१॥

(ञ) चन्द्रेति। तातमिश्राः पूज्यास्ताताः रामादयोऽपि विशेषविचक्षणा इत्यपेरर्थः, धर्म्मार्थसंशयेषु 'अत्र को धर्म्म' इति धर्म्मसंशयेषु 'अत्र किं कर्त्तव्य' इति कर्त्तव्यविषयसंशयेषु च सत्सु पितुः तेषां जनकस्य दशरथस्य प्रियसखं योग्यमन्त्रित्वेन प्रियं मित्रं आर्य्यं भवन्तं पृच्छन्ति कर्त्तव्यं जिज्ञासन्ते धर्म्मार्थेषु भवतोनितान्तनैपुण्या-दिति भावः। तत्तस्मात् आर्य्योभवान् किं कथं विमृशति विविनक्ति। नैष दुरूहः प्रश्नः, न वा विवेचनावसरोऽस्तीति सत्वरमुत्तरं क्रियतामिति भावः।

(ट) सुमेति। एवं रथादवतरणं यथाधर्म्मं धर्म्मानतिक्रान्तं धर्म्मसङ्गत-मित्यर्थः अभिमन्यसे अभिमतं कृतवानसीत्यर्थः।

धर्म्मसङ्गतत्वं प्रतिपादयति एष इति। सांग्रामिकः युद्धसंसृष्टः एष न्यायो नीतिः, रथारोहिणो यत् पदातिभिः सह न युध्यन्ते इयमेव युद्धनीतिरित्यर्थः, तथा एष सनातनः धर्म्मश्चमहावीरैश्चिराचरित इत्यर्थः धर्म्म आचारः ननु होलाकादिवत् आचारस्य देशभेदेन भिन्नत्वात् रघूणां क आचार इत्याह इयमित्यादि। रघुषु रघु-वंशोद्भवेषु सिंहा इव तेषां रघुकुलश्रेष्ठानां इयं हि एषैव वीरचारित्रस्य वीरोचिताचारस्य

(१) प्रियं सखायमिति पाठान्तरं।

चन्द्र। प्रतिरूपं वचनमार्य्यस्य। (ठ)

इतिहासं पुराणञ्च धर्म्मप्रवचनानि च।

भवन्त एव जानन्ति रघूणाञ्च कुलस्थितिम्॥ २३॥

पद्धति: पन्था:, तव पूर्वपुरुषा अपि रथस्था: सन्त: पदातिभि: सह समरं न क्रतवन्त इति तव वंशपरम्पराप्रसिद्धोऽप्ययमाचार इति भाव:।

चरित्रमेव चारित्रं प्रज्ञादित्वात् स्वार्थे अण्॥ २२॥

(ठ) चन्द्रेति। आर्य्यस्य भवत: वचनं उक्तवाक्यं प्रतिरूपं अनुरूपं योग्य-मिति यावत्। धार्म्मिकस्य धर्म्मसङ्गतोक्तिरेव योग्येति भाव:।

अनुरूपवचनप्रयोगे कारणमाह इतिहासमिति। भवन्त एव नान्ये साधारणा इत्येवशब्दार्थ: गौरवात् बहुवचनं इतिहासं पूर्ववर्त्तिनीं घटनापरम्परां पुराणं स्वनाम्ना प्रसिद्धं पञ्चलक्षणं शास्त्रविशेषं, धर्म्मा: वर्णानामाश्रमाणाञ्च शौचाचारादय: प्रोच्यन्त एभिरिति धर्म्मप्रवचनानि मन्वादिशास्त्राणि रघूणां राघवाणां कुलस्थितिं वंश-परम्पराप्रसिद्धरीतिञ्च जानन्ति विदन्ति। सुतरामुक्तवचनप्रयोगे भवतां सामर्थ्य-मस्त्येवेति भाव:।

अत्र जानन्तीत्येकया क्रियया इतिहासादीनां कर्म्मतया सम्बन्धात् तुल्ययोगिता-लङ्कार:। जानन्तीत्यनेन समाप्तस्य वाक्यस्य पुन: रघूणाञ्चेत्यादिना उपात्तत्वात् समाप्तपुनरात्ततादोष: स च "कुलस्थितिं रघूणाञ्च भवन्त: खलु जानते" इति पाठेन समाधेय:।

इतिहासलक्षणमुक्तमभियुक्तैर्यथा—

"धर्म्मार्थकाममोक्षणामुपदेशसमन्वितं।
पुरावृत्तकथायुक्तमितिहासं प्रचक्षते॥"

पुराणलक्षणममरकोषटीकायां रघुनाथधृतं—

"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितञ्चैव पुराणं पञ्चलक्षणं॥" ॥ २३॥

सुम। सस्नेहास्रं परिष्वज्य। (ड)

जातस्य ते पितुरपीन्द्रजितो निहन्तु-(१)
र्वत्सस्य वत्स! कति नाम दिनान्यमूनि।
तस्याप्यपत्यमनुगच्छति वीरवृत्तं (२)
दिष्ट्या गतं दशरथस्य कुलं प्रतिष्ठाम् ॥२४॥

चन्द्र। सकष्टम्।

अप्रतिष्ठे रघुज्येष्ठे(३)का प्रतिष्ठा कुलस्य नः।
इति दुःखेन तप्यन्ते त्रयो नः पितरोऽपरे ॥२५॥

---

(ड) सुमेति। स्नेहेन वात्सल्येन अस्रेण आनन्दाश्रुणा च सहेति सस्नेहास्रं परिष्वज्य आलिङ्ग्य चन्द्रकेतुमिति शेषः।

जातस्येति। हे वत्स! चन्द्रकेतो! इन्द्रजितो युद्धे देवराजविजेतुः रावणपुत्रस्य मेघनादस्य निहन्तुर्विनाशयितुः वत्सस्य स्नेहास्पदस्य ते तव पितुस्तातस्य लक्ष्मणस्यापि जातस्य उत्पन्नस्य सतः अमूनि दिनानि कति नाम, कियन्ति सम्भावयामि, तव पितुर्लक्ष्मणस्यापि जन्मतः प्रभृति वर्त्तमानदिनपर्य्यन्तानि नितान्ताल्पान्येव दिनानीत्यर्थः इतो मध्य एव स इन्द्रस्य विजेतारं महावीरं मेघनादं निहतवानिति महदेवाश्चर्य्यमिति भावः। तस्यापि तादृशनितान्ताल्पवयसो लक्ष्मणस्यापि अपत्यं पुत्रः वीरवृत्तं वीरोचितमाचारं अनुगच्छति अनुसरति पालयति, अतएव दिष्ट्या भाग्येन दशरथस्य कुलं वंशः प्रतिष्ठां स्थितिं स्थायित्वमिति यावत् गतं प्राप्तं, इत्यस्माकं महत् आनन्दकारणमिति भावः।

अत्र चतुर्थपादार्थं प्रति पूर्ववाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। वसन्ततिलकावृत्तं ॥ २४ ॥

अप्रतिष्ठ इति। रघुज्येष्ठे रघुकुलप्रधाने रामे अप्रतिष्ठे अपत्याभावेन स्थिति-

(१) विजेतुरिति पाठान्तरं। (२) अनुतिष्ठति वीरधर्म्ममिति पाठभेदः। (३) कुलज्येष्ठे इति पाठान्तरं।

सुम। अहह ! हृदयमर्म्मदारणान्येतानि चन्द्रकेतो-र्वचनानि। (ढ)(१)

लवः। हन्त ! मिश्रीकृतो रसो (२) वर्त्तते। (ण)

यथेन्दावानन्दं व्रजति समुपोढ़े कुमुदिनी ।
तथैवास्मिन् दृष्टिर्मम, कलहकामः पुनरयम् ।

रहितैः सम्भाव्यमानवंशलोपसन्ततैः इत्यर्थः नः अस्माकं कुलस्य स्ववंशस्य का प्रतिष्ठा स्थितिः, सर्वगुणाकरस्य रामस्य निःसन्तानतया अस्मत्सन्तानानां सतामपि असत्कल्पत्वेन मन्यमानत्वादिति भावः। इति दुःखेन हेतुना नोऽस्माकं "वास्मद्यं"ति वहुवचनं सर्वेत्यर्थः अपरे रामादयो नयः पितरः पितृपर्यायाः भरतशत्रुघ्नौ पिता लक्ष्मणश्चेत्यर्थः तप्यन्ते सन्तापमनुभवन्ति ।

अत्र करुणोरसः रामविषयरतिभावस्याङ्गमिति रसवदलङ्कारः। तथा रघुज्येष्ठपदेन किं दिलीपपुत्रस्य रघोर्ज्येष्ठो भ्राता उच्यते किंवा रामः, अथवा अपरः कश्चिदिति सन्देहात् सन्दिग्धत्वदोषः स च 'अप्रतिष्ठेऽग्रजे रामे' इति पाठेन समाधेयः ॥ २५ ॥

(ढ) सुमेति। अहहेति खेदसूचकमव्ययं। हृदयस्य मर्म्माणि सन्धिस्थानानि दार्य्यन्ते भिद्यन्ते एभिरिति हृदयमर्म्मदारणानि, एतद्वचनश्रवणेन दुःखेन हृदयमर्म्मस्थलं विदीर्णमिवानुभूयत इत्यर्थः।

(ण) लव इति। हन्तेति हर्षसूचकमव्ययं। रसो वात्सल्यरसः मिश्रीकृतः वीररसेन सम्मिलितः सन् वर्त्तते।

रसयोर्मिश्रीकृतत्वं व्यनक्ति यथेति। इन्दौ चन्द्रे समुपोढ़े उदिते कुमुदिनी कुमुद्वती आनन्दं प्रफुल्लतां व्रजति प्राप्नोति, तथैव अस्मिन् कुमारे मम दृष्टिः आनन्दं प्रीतिविस्फारितत्वं व्रजति। पुनः किन्तु कलहं वैरेण समरं कामयते अभिलषति यः स कलहकामः सन् अयं वाहुभुजः झणत्कारिणा झणझणाशब्देन क्रूरं कर्कशं यथा स्यात्तथा क्वणितः शब्दायमानो यो गुणः मौर्वी तेन गुञ्जत् गर्जत् यत् गुरु विशालं धनुः

(१) हृदयमर्म्मदारुणानि इति पाठभेदः। (२) रसक्रम इति विभिन्नः पाठः।

झणत्कारक्रूरक्वणितगुणगुञ्जद्गुरुधनु-
र्धृतप्रेमा बाहुर्विकचविकरालोल्बणरसः(१) ॥२६॥

चन्द्र। अवतरन्। (२) आर्य्य! सावित्रश्चन्द्रकेतुरभिवादयते। (त)

---

तस्मिन् धृतं निहितं प्रेम ग्रहणाभिलाषो येन स तथोक्तः, तथा विकचः प्रस्फुटः विकरालः तुङ्गः अतिमहान् इत्यर्थः उल्बणरसः नियतसहचरेण रौद्ररसेन समुद्धतो वीररसो यस्मिन् स तथोक्तश्च जात इति शेषः। यथैनं महावीरं कमनीयकलेवरं कुमारमवलोक्य मम नयनमानन्दविस्फारितं जातं तथा बाहुरपि अविरतधनुर्ज्याशब्देन दिङ्मण्डलमापूर्य्य महासमराय समुत्सहते इति निष्कर्षः। अतएव वात्सल्य वीररसयोरिदानीं सम्मेलनं जातमिति भावः।

अत्र वात्सल्यवीरयोर्विरूपयोः संघटनया विषमाऽलङ्कारः श्रौतोपमया सङ्कीर्णः, वृत्त्यनुप्रासश्चेति संसृष्टिः। तथा 'हन्त मिश्रीकृतौ रसौ वर्त्तते' इति गद्यभागे अस्मिन् पद्ये च रसशब्दोपादानात् रसस्य स्वशब्दोक्तिदोषः, तथा गुञ्जनस्य भ्रमरादिशब्द एव ख्यातत्वादत्र धनुष्टङ्कारे च तदुपादानात् ख्यातिविरुद्धतादोषश्च तेन गद्यांशे 'मिश्रीकृता खल्ववस्था वर्त्तते इति' पाठेन पद्ये च 'गुञ्ज'दित्यत्र 'गर्ज'दिति पाठेन 'विकचविकरालोल्बणतम' इति पाठेन च तत्समाधानमिति सुधीभिर्विभावनीयं।

"करालो दन्तुरे तुङ्गे भीषणे चाभिधेयवत्"दिति मेदिनी। "उल्बणमुद्भतमुद्भटमुत्कटमिति नातिनानार्था"इति हलायुधः।

कालहकाम इति "शीलिकामिभिक्ष्याचरिभ्योणः"इति णप्रत्ययः।

शिखरिणी वृत्तं ॥ २६ ॥

(त) चन्द्रेति। सवितुरपत्यं सावित्रः सूर्य्यवंशोत्पन्न इत्यर्थः। सूर्य्यवंशस्य प्राधान्यसूचनार्थं सावित्रपदोपादानं। नमस्कर्त्तुः प्राधान्यसूचनेन नमस्कार्य्यस्यातिप्राधान्यं सूचितं स्यादित्यभिप्रायः।

(१) विकटविकराल व्रणसुख इति पाठान्तरं। (२) अवतरणं रूपयन्निति पाठभेदः।

सम। अजितं पुण्यमूर्जस्वि(१) ककुत्स्थस्येव(२) ते महः।
श्रेयसे शाश्वतो देवो वराहः परिकल्प्यताम् ॥२७॥

अपिच,

देवस्त्वां सविता धिनोतु समरे गोत्रस्य यस्ते पिता,
त्वां मैत्रावरुणोऽपि (३) नन्दतु, गुरुर्यस्ते गुरुणामपि।
ऐन्द्रं वैष्णव(४) माग्निमारुतमथो सौपर्णमोजोऽस्तु ते
देयादेव च रामलक्ष्मणधनुर्ज्याघोषमन्त्रो जयम् ॥२८॥

अजितमिति। शाश्वतो नित्यः उत्पत्तिविनाशहीन इति यावत् वराहो धृतवराह-मूर्त्तिः देवो विष्णुः ककुत्स्थस्य पुरञ्जयस्येव ते तव अजितं अन्यैरनभिभूतं पुण्यं पवित्रं ऊर्जस्वि प्रबलं महस्तेजः श्रेयसे विजयमङ्गलाय परिकल्प्यतां सर्वतोभावेन कुरुताम्।

अत्र श्रौत्युपमाऽलङ्कारः।

"शाश्वतस्तु ध्रुवो नित्यं"। "महस्तुत्सवतेजसो"रिति चामरः।

पुरा किल वृषरूपधारिणो देवराजस्य ककुदि समारुह्य इक्ष्वाकुवंशीयो राजा पुरञ्जयः दानवैः सह समरमारेभे, तेन च तस्य ककुत्स्थ इति नाम बभूव। भगवान् विष्णुस्तत्र युद्धे स्वतेजसा पुरञ्जयशरीरं परिपूर्य यथा तस्मै विजयं दत्तवान्, अधुनाऽपि तथैव तव तेजोविवर्द्धयन् विजयं ददातु इति सेतिहासः सरलार्थः।

वराहपदोपन्यासात् रघुकुलं वराहमन्त्रोपासकमासीदिति प्रतीयते॥ २७॥

देव इति। सविता सूर्य्यो देवः समरे अस्मिन् युद्धे त्वां धिनोतु विजयप्रदानेन प्रीणयतु, यः सविता ते तव गोत्रस्य वंशस्य पिता उत्पादक आसीदित्यर्थः। तथा

(१) ओजस्वीति पाठान्तरं। (२) काकुत्स्थस्येवेति पाठभेदः (३) अभिनन्दतु इति भिन्नः पाठः। (४) ऐन्द्रावैष्णवमिति कुत्रचित् पाठः।

लवः। कुमार! अति हि नाम शोभसे रथस्थ एव कृतं कृतमत्यादरेण। (थ)

चन्द्र। तर्हि महाभागोऽप्यनयं रथमलङ्करोतु। (द)

मैत्रावरुणी वशिष्ठोऽपि त्वां नन्दतु विजयदानेन सुखयतु, यो मैत्रावरुण स्तव गुरूणां पितृणां रामादीनामपि गुरुरुपदेष्टा वर्त्तते इत्यर्थः। वाक्यान्तरारम्भे अथोशब्दः इन्द्रस्येदं ऐन्द्रं इन्द्रौजस्तुल्यमित्यर्थः एवमन्यत्रापि। विष्णोरिदं वैष्णवं, अग्निमरुतोरिदं आग्निमारुतं "क्वचिदुभयपदस्यापी"ति उभयवाकारः, सुपर्णस्य गरुड़स्येदं सौपर्णं ओजस्तेजस्ते तव अस्तु भवतु इन्द्रादितेजसा तुल्यं तेजस्तव भवत्वित्यर्थः। रामलक्ष्मणयो र्या धनुर्ज्या मौर्वी तस्या यो घोषः शब्दः तेन युक्तो मन्त्रः ब्रह्मास्त्रप्रयोगमन्त्रश्च तव जयं दैयादेव ददात्वेव। ज्याघोषमन्त्र इति "शाकपार्थिवादयश्च"ति युक्तपदलोपेन मध्यपदलोपी समासः, तेन रामलक्ष्मणयोर्धनुष्टङ्कारः ब्रह्मास्त्रप्रयोगमन्त्रश्च तव जयं ददातु इत्यर्थः।

अत्र अस्मदीयं तेजः कथमन्यस्य भवेदिति वस्तुसम्बन्धोऽसम्भवन् इन्द्रौनां तेज इव तेजोभवतु इति बिम्बप्रतिबिम्बभावबोधनात् निदर्शनाऽलङ्कारः। पूर्वार्द्धे यच्छब्दयोरुत्तरवाक्यस्थितत्वेन तच्छब्दानपेक्षणात् न विधेयाविमर्शदोषः, किन्तु दैयादेव इत्यत्र नियमस्यानावश्यकत्वेऽपि एवशब्दोपादानात् अनियमे नियमाख्यदोषः, स तु 'दद्याद्धृत रामे'त्यादि पाठेन निरसनीयः।

शार्दूलविक्रीड़ितं वृत्तं ॥ २८ ॥

(थ) लव इति। रथस्थ एव अतिहि अत्यन्तमेव शोभसे, नाम इत्यहं सम्भावयामीत्यर्थः। अतएव अत्यादरेण अतिबहुमानेन मां प्रति बहुमानप्रदर्शनार्थं रथादवतरणेनेत्यर्थः कृतं कृतं अलमलमिति सम्भ्रमे द्विरुक्तिः।

(द) चन्द्रेति। तर्हि मयि रथस्थे सति, महान् भागो महावीरत्वसूचितं भाग्यं यस्य स महाभागो भवानपीत्यर्थः। अलङ्करोतु आरोहणेन शोभयतु। सवाहयामारोहणेन रथ एवालङ्कृतः स्यादिति भावः।

लव। आर्य्य ! प्रत्यारोपय रथोपरि राजपुत्रम्। (ध)

सुम। त्वमप्यनुरुध्यस्व चन्द्रकेतोर्वचनम्। (न)

लव। को विचारः स्वेषूपकरणेषु, किन्त्वरण्यसदो वयमन-भ्यस्तरथचर्य्याः। (प)

सुम। जानासि वत्स ! दर्पसौजन्ययोर्यथोचितमीरयितुं(१) यदि पुनरीदृशं त्वामैच्चाको(२)रामभद्रः पश्येत् तदाऽस्य स्नेहेन हृदयमभिष्यन्देत। (फ)

(ध) लव इति। चन्द्रकेतुकृतमभिवादनमवलोक्य सुमन्त्रमा प्रज्यत्वानुमानात् आर्य्य इति सम्बोधनं। प्रत्यारोपय आरोहय। राजपुत्रम् चन्द्रकेतुं।

(न) सुमेति। अनुरुध्यस्व अनुसर परिपालयेत्यर्थः। अन्तः रथमारोहेत्यर्थः।

(प) लव इति। स्वेषु स्वकीयेषु उपकरणेषु व्यवहार्य्यद्रव्येषु को विचारो वितर्कः विचिकित्सेति यावत्, अभिन्नहृदयस्य चन्द्रकेतोर्यत् व्यवहार्य्यद्रव्यं निःसंशयं तत् स्वकीयमिव व्यवहर्त्तुमहमर्हामीति भावः, किन्तु अरण्यसदो वनवासिनो वयं "वास्मदश्चे"ति बहुवचनं अहमित्यर्थः अतएव न अभ्यस्ता पुनः पुनरारोहणादिना न शिक्षिता रथचर्य्या रथेन सञ्चरणं यैस्तथोक्ताः, अतएव रथारोहणेन योद्धुमशक्तत्वात् भवद्भिरङ्गीक्रियमाणमपि रथं नाङ्गीकरोमीति भावः।

(फ) सुमेति। दर्पसौजन्ययोर्गर्वविनययोः यथोचितं अनुरूपं ईरयितुं वक्तुं जानासि चमसे इत्यर्थः। को विचारः स्वेषु उपकरणेषु इत्यनेन अतीवसौजन्यमाविष्कृतं अथ च परवाक्येन रथं विनापि रथिभिः सार्द्धमहं योद्धुमर्हामीति दर्पो ध्वनित इति भावः। ईदृशं शौर्य्यसौजन्यदर्पादिवीरोचितगुणालङ्कृतं। अभिष्यन्देत आप्लुतं भवेत्। रामभद्रस्यातीवगुणग्राहित्वादिति भावः—

(१) आचरितुमिति पाठान्तरं। (२) ऐच्वाको राजा रामभद्र इति पाठभेदः।

लवः। आर्य्य! (१) सुजनः स राजर्षिः श्रूयते। सलज्जमिव। (व)

वयमपि न खल्वेवंप्रायाः क्रतुप्रविघातिनः(२)
क इह च(३) गुणैस्तं राजानं नवा बहु मन्यते।
तदपि खलु मे स व्याहार स्तुरङ्गमरक्षिणां
विकृति मखिलक्षत्राक्षेपप्रचण्डतयाऽकरोत् ॥२८॥

---

(व) लव इति। आर्य्येति सुमन्त्रस्य सम्बोधनं। राजा सन् ऋषिः ऋषिवत् मंयमीति राजर्षिः स रामचन्द्रः सुजनः दयादाक्षिण्यशौर्य्यधैर्य्यादिसकलवीरगुणालङ्कृतः सज्जन इत्यर्थः श्रूयते लोकपरम्परया रामायणसन्दर्भे चेति शेषः। सलज्जमिव एवं सर्वगुणाकरस्यापि रामस्य अश्वावरोधेन अश्वमेधविघ्नाचरणात् लज्जया सहितमिव।

ननु यदि रामभद्रः सुजन इति श्रूयते तदा तस्य यज्ञविघ्नाचरणं तवातीवानयाय्यमित्याह वयमिति। वयमपि "वास्मदर्थे"ति बहुवचनं अहमपीत्यर्थः प्रायेण बाहुल्येन एवमिति एवंप्राया एवं विधाः क्रतुं यागं प्रविघ्नन्तीति क्रतुप्रविघातिनः राक्षसादिवत् स्वभावत एव यज्ञविघ्नकरा न खलु भवाम इत्यर्थः। तर्हि किं रामं दुर्जनं मत्वा तं प्रति विद्वेषात् मेध्याश्वो गृहीत इत्याह क इति। किञ्चेतिचार्थः। इह जगति कोजनः गुणैः दयादाक्षिण्यशौर्य्यादिभिः तं राजानं रामं नवा बहु मन्यते आद्रियते अपितु सर्वएव तं बहुमन्यत इत्यर्थः, सुतरामहमपि तं बहु मन्य एवेति भावः। ननु तर्हि कथं मेध्याश्वो धृत इत्याह तदपीति। तदपि तथापि तुरङ्गमरक्षिणां अश्वमेधीयाश्वरक्षिणां स व्याहारः खलु "अयमश्वः पताकेय"मित्याद्युक्तिरेव अखिलानां सर्वेषां क्षत्राणां क्षत्रियाणां आक्षेपेण अवमाननया या प्रचण्डता नितान्तक्रूरता तया मे मम विकृतिं मनोविकारं अश्वधारणप्रवृत्तिमित्यर्थः अकरोत् उत्पादितवान्। सर्वेषां क्षत्रियाणामवमाननाविधानादेव अश्वो धृतः, नतु जयलिप्सया नवा सहजदुर्जनतया येति भावः।

(१) मान्य इति पाठान्तरं। (२) क्रतुप्रतिघातिन इति पाठभेदः। (३) क इव च इति भिन्नः पाठः।

चन्द्र। सस्मितम्। किन्नु भवतस्तातप्रतापोत्कर्षेऽप्यमर्षः ?।(भ)

लवः। अस्त्विहामर्षो(१)माभूद्वा, एतत्तु पृच्छामि, दान्तं हि राघवं राजानं शृणुमः, स किल नात्मना दृप्यति, नाप्यस्य

अत्र द्वितीयचरणे अप्रस्तुतात् जननामाख्यात् प्रस्तुतस्य विशेषस्य लवस्य प्रतीतिरप्रस्तुतप्रशंसाऽलङ्कारः स च अर्थापत्त्याप्यापित इति सङ्करः। तदपीति तथापीत्यर्थे अवाचकमित्यवाचकत्वदोष इति वदन्ति।

"चण्डस्त्वत्यन्तकोपन" इत्यमरः।

हरिणी वृत्तम्॥ २९॥

(भ) चन्द्रेति। तातस्य पितृपर्य्यायस्य रामचन्द्रस्य प्रतापोत्कर्षेऽपि प्रभावातिशयेऽपि अमर्षः असहिष्णुता वर्त्तत इति शेषः। अन्य कस्यचित् साधारणस्य प्रतापोत्कर्षे भवादृशमहावीरस्य अमर्षः सम्भाव्यत एव किन्तु जगत्ख्याते तातप्रतापोत्कर्षे तवामर्षः अज्ञानविजृम्भित एवेति भावः।

(म) लव इति। इह रामप्रतापोत्कर्षे अमर्षः क्रोधेन मम असहिष्णुता अस्तु मा भूद्वा भवतु न भवतु वा, तव मम किमपि न प्रष्टव्यमस्तीति भावः। नु किन्तु, एतत् वक्ष्यमाणं पृच्छामि भवन्तमिति शेषः। राघवं राजानं रामचन्द्र दान्तं हि दान्तमेव इन्द्रियदमनशीलमेव अनुद्धतवादिनमेवेत्यर्थः शृणुमः लोकपरम्परया रामायणसन्दर्भे चेति शेषः। किलेति। वार्त्तायां। स रामचन्द्रः आत्मना स्वयं स्वसुखेनेत्यर्थः न दृप्यति न दर्पं करोति। अस्य रामस्य प्रजासु प्रकृतिषु दृप्तत्वं गर्वितत्व नापि नवा जायते जनव्यवहाराणां प्रधानानुयायित्वादिति भावः तत् तस्मात् रामस्य तत्प्रजानाञ्च अनुद्धतत्वाद्धेतोरित्यर्थः, अस्य रामस्य मनुष्याः अधिकृतसैनिकाः राक्षसीं राक्षसवत् दर्पोद्धतां। दान्तस्य प्रभोरधिकृतपुरुषाणां दान्तत्वमेवोचितमिति भावः।

आत्मनेति प्रकृत्यादित्वात् करणे तृतीया।

---

(१) क्वचित् इहशब्दो नास्ति।

प्रजासु दृप्तत्वं जायते,(१) तत् किमस्य मनुष्या राक्षसीं वाचं वदन्ति। (भ)

ऋषयो राक्षसीमाहुर्वाचमुन्मत्तदृप्तयोः।
सा योनिः सर्ववैराणां सा हि लोकस्य निऋतिः ॥३०॥

इति ह स्म तां निन्दन्ति, अथेतरामभिष्टुवन्ति। (य)

---

नन्वस्माकं सैनिका राक्षसीं वाचं वदन्ति तेन तव किमायाति याति चेत्याह ऋषय इति। ऋषयो वस्तुस्वभावाभिज्ञा मुनयः उन्मत्त उन्मादरोगग्रस्तः दृप्तः वीरत्वेन धनादिना वा गर्वितः तयोः वाचं गर्वोद्धतं वाक्यमित्यर्थः राक्षसीं राक्षसोचितां निष्ठुरां आहुर्वदन्ति। ननु वदन्ति, वदन्तु नाम तेन किमित्याह सेति। सा राक्षसी वाक् सर्ववैराणां सर्वविधानां शत्रुतानां योनिः कारणं, तथा सा हि सैव वाक् लोकस्य जनस्य निऋतिः निर्नं भवति ऋतिः शुभं यस्याः सकाशात् सा निऋतिः अलक्ष्मीः अलक्ष्मीरूपेत्यर्थः। तथा च लोका दर्पोद्धतां वाचमाकर्ण्यैव शत्रुतामारभन्ते तेन च अलक्ष्मीर्दर्पोद्धतवादिनः स्कन्धमारुह्य सर्वविधममङ्गलं घटयतीति भावः।

अत्र "मुखं तव कुरङ्गाक्षि सरोजमिति नान्यथा" इत्यादिवत् सा वाक् निऋतिरिति समासाभावेऽपि निरङ्गं केवलरूपकमलङ्कारः। सा योनिः सर्ववैराणामित्यनेन युष्मत्सैनिकानां दर्पोद्धतां वाचमाकर्ण्यैव मेध्याश्वमहं धृतवानस्मीति वस्तु व्यज्यत इति वस्तुना वस्तुध्वनिः।

"ऋतिर्गतौ घृणायाञ्च अन्नायाञ्च शुभेऽपि चे"ति रभसः। "स्यादलक्ष्मीस्तु निऋति"रित्यमरः।

निऋतिरिति नैरिकारस्य संयोगपूर्ववत् दृढ़ोच्चारणात् न छन्दोभङ्ग इति दिक् ॥३०॥

(य) इतीति। इतिहेति उपदेशपरम्परासूचकमव्ययं। अतीतार्थे स्मशब्दः। तां दर्पोक्तिं निन्दन्ति स्म। अथेति वाक्यान्तरारम्भे। इतरां तद्भिन्नां विनयशाला-

---

(१) नाप्यस्य प्रजा ईदृश्यो जायन्ते इति पाठान्तरं।

कामान् दुग्धे, विप्रकर्षत्यलक्ष्मीं
कीर्त्तिं सूते, दुष्कृतं या हिनस्ति।
ताञ्चाप्येतां मातरं मङ्गलानां
धेनुं धीराः सूनृतां वाचमाहुः॥ २१

मित्यर्थः वाचं अभिष्टुवन्ति स्म प्रशशंसुः मुनय इति शेषः। मुनयोऽदयोक्तिं निनिन्दुः विनयशालोक्तिञ्च प्रशशंसुरित्यस्माकं परम्परोपदेश इति सरलार्थः।

"पारम्पर्य्योपदेशेस्या दैतिह्यमितिहाव्यय"मित्यमरः।

प्रशंसाप्रकारमाह कामानिति। या सूनृता वाक् कामान् मनोरथान् दुग्ध परिपूरयति, येन हि सूनृतवाचा सन्तुष्टाः श्रोतारो वक्तुरभिलाषान् पूरयितुं यतन्ते इति भावः। अलक्ष्मीं अशुभाधिष्ठात्रीं देवीं विप्रकर्षति दूरीकरोति सकलकल्याणनिदानत्वादिति भावः। कीर्त्तिं यशः सूते समुत्पादयति, येन च तादृशं वाचं श्रुत्वाः सम्मोदमाना जना लोकेषु 'एष खल्वतीवसहृद'ति नाम प्रथयन्तीति भावः। दुष्कृतं सञ्चितपापं हिनस्ति विनाशयति च, श्रोतृविशेषाणां प्रीतिसम्पादनेन तेषामाशीर्वादादिना नूतनपुण्यजननादिति भावः। धीराः पण्डिताः, एतां मया निर्दिश्यमानां तां मङ्गलानां निखिलकुशलानां मातरं जनयित्रीं सूनृतां सत्यप्रियां वाचं धेनुं कामधेनुतुल्याञ्चापि आहुः वदन्ति मुनय इति शेषः। कामधेनुरिव सूनृता वाक् सकलकामनापूरयित्रीत्यर्थः।

अत्र प्रथमार्द्धे दुग्ध इत्याद्यनेकक्रियाणां या इत्येककर्तृकारकत्वात् दीपकमलङ्कारः, द्वितीयार्द्धे धेनुशब्दस्य धेनुसादृश्यार्थे पर्य्यवसानात् असम्भवद्वस्तुसम्बन्धा निदर्शना, अनयोः संसृष्टिः। अपिच शब्देन 'ऋषय उन्मत्तदृप्तयोर्वाचं राक्षसीमाहुः, सूनृतां वाचञ्चापि धेनुमाहु'रिति समुच्चयार्थद्योतनात् न अपुष्टार्थत्वदोषः।

"सूनृतं प्रिये। सत्ये"इत्यमरः।

शालिनी वृत्तं॥ २१॥

सुम। परिपूतस्वभावोऽयं कुमारः प्राचेतसान्तेवासी वदत्यभिसम्पन्नमार्षेण संस्कारेण। (र)(१)

लवः। यत्पुनश्चन्द्रकेतो! वदसि, किन्नु भवतस्तातप्रतापोत्कर्षेऽप्यमर्ष इति, तत् पृच्छामि, किंव्यवस्थितविषयाः चत्रधर्म्मा इति। (ल)

(र) सुमेति। प्राचेतसस्य वाल्मीकेः अन्तेवासी छात्रः, अतएव परिपूतस्वभावः पवित्रचरितः अयं कुमारो बालकः आर्षेण ऋषितुल्येन संस्कारेण अनुभवेन अभिसम्पन्नं संयुक्तं सर्वज्ञमुनितुल्यानुभवप्रयुक्तमित्यर्थः वचनमिति शेषः वदति। येन हि तादृशी युक्तिपरम्परा अस्य वचने प्रतिभाति, सुतरामसाधारणोऽयं बालक इति भावः।

"संस्कारः।......अनुभव"इति शब्दकल्पद्रुमः।

(ल) लव इति। नन्वस्मत्सैनिकानां शिचैवेदृशी, यत् सर्वत्र दृप्तामेव वाचं वदेदिति; तेन च परैर्वैरं स्यादिति चेदुच्यते तत्तु त्वया आरब्धमेव इत्याशङ्का 'किन्नु-भवत'इत्यादि चन्द्रकेतोर्वाक्यमेव खण्डयितुमुपक्रमते यत्पुनरित्यादि। पुनः किन्तु, हे चन्द्रकेतो! इति इत्यन्तं यत् त्वं वदसि, तत् पृच्छामि तव जिज्ञासे इत्यर्थः। चत्रधर्म्माः प्रतापशौर्य्यादयः चत्रियस्वभावाः किं व्यवस्थितः विधिना निर्दिष्टः विषय आश्रयपदार्थौ येषां ते तथोक्ताः। सर्वातिशायी प्रतापः लोकोत्तरञ्च शौर्य्यं किं रामचन्द्र एव विधिना निर्दिष्टं अपितु कथमपि नेत्यर्थः। प्रतापशौर्य्यादीनामदृष्टशिचासापेच-तया रामादन्येऽपि अदृष्टशिचावन्तः प्रतापशौर्य्यादिमन्तोभवितुमर्हन्तीति भावः। अहमपि महाप्रतापशाली महावीरश्चेति ध्वनिः। इतिशब्दस्य पृच्छामीत्यनेनान्वयः।

(१) परिपूतेत्यत्र 'अपरिप्लुत'इति पाठान्तरं। वदतीत्यतः परं 'अथं'इत्यधिकः' पाठः क्वापि।

सुम। नैव खलु जानासि तं देवमैक्ष्वाकं, यदेवं वदसि ; (१)
तद्विरम विरमातिप्रसङ्गात्। (व) (२)

सैनिकानां प्रमाथेन सत्यमोजायितं त्वया।
जामदग्न्यस्य दमने(३)नैवं निर्वक्तु(४)मर्हसि ॥ ३२ ॥

(व) सुमेति। वाक्यालङ्कारे खलुशब्दः। ऐक्ष्वाकं इक्ष्वाकुकुलीनपन्नं तं देवं रामचन्द्रं नैव जानासि लोकोत्तरवीरत्वेन नैव परिचिनोषि, यत् यस्मात्-परिचयाद्धेतोः एवं सदर्पं वदसि। यदि रामस्य यथार्थपरिचयस्तवासीत् तदा नैवं वक्तुं शक्नुया इति भावः। तत् तस्मात् अज्ञानविजृम्भितत्वाद्धेतोः अतिप्रसङ्गात् सम्भवातिरिक्तादोद्धत्यादित्यर्थः विरम विरमेत्यवधारणार्थे द्विरुक्तिः।

सैनिकानामिति। त्वया सैनिकानां अस्मत्सैन्यानां प्रमाथेन विमर्द्दनेन पराजयेनेति यावत् सत्यं यथार्थमेव ओजायितं ओजस्विवदाचरितं महावीरेणेव विक्रान्तमित्यर्थः। वालकत्वमिकाको सर्वानस्मत्सैन्यान् यत् पराजितवान् तदेव तव महाविक्रमनिदर्शनं तत्रास्माकं प्रतिवादो नास्तीति भावः। किन्तु जामदग्न्यस्य एकविंशतिवारसर्वक्षत्रान्तकारित्वेन सुप्रसिद्धमहावीरस्य जमदग्निपुत्रस्य परशुरामस्य दमने विजेतरि रामे रामविषय इत्यर्थः एवं इत्थं, रामसदृशा अपरेऽपि सन्ति वीरा इतिभावाभिव्यञ्जकं वाक्यमित्यर्थः निर्वक्तुं निश्चयेन भाषितुं नार्हसि। तथात्वे तव महती विपदापद्येतेति भावः।

अत्र क्यङ्प्रत्ययप्रतिपादितोपमाऽलङ्कारः।

ओजसेवाचरितमित्योजायितं क्यङि "ओजसोऽप्सरसो"वेति सलोपः।

"ओजःशब्दो वृत्तिविषये तद्वती"ति दीक्षितः। दमयतीति दमनः नन्द्यादित्युः ॥३२॥

---

(१) यदेवं वदसीति पाठो नास्ति क्वचित्। (२) विरम्यतामतिप्रसङ्गादिति पाठान्तरं। (३) रामेऽप्यस्मष्यमाणेन इति पाठभेदः। (४) नातिनिर्वक्तुं नहि निर्वन्धमिति विभिन्नौ पाठौ।

लव:। सहासं। जामदग्न्यस्यापि (१) दमन: स राजेति कोऽयमुच्चैर्वाद:। (ग्र)

सिद्धं ह्येतद्वाचि वीर्य्यं द्विजानां
बाह्वोर्वीर्य्यं यत्तु तत्क्षत्रियाणाम्।
शस्त्रग्राही ब्राह्मणो जामदग्न्य-
स्तस्मिन् दान्ते का स्तुति स्तस्य राज्ञ: ? ॥३३॥

---

(ग्र) लव इति। हासेन अयुक्तवाक्यश्रवणादुपहासेन सह वर्त्तमानमिति-सहासं। स राजा राम:। दमनो विजेता। इत्ययं क: उच्चैर्वाद: का नाम महती प्रशंसा अपितु कापि नेत्यर्थ:।

तत्र कारणमुपन्यस्यति सिद्धमिति। एतत् हि एतदेव सिद्धं प्रसिद्धं यत् द्विजानां ब्राह्मणानां वीर्य्यं बलं वाचि वाक्यएव वर्त्तत इति शेष:। ब्राह्मणास्तपसा दुर्बलदेहा: सिद्धवाचश्च सन्त: शापेन दमयितुमर्हन्ति नतु बाहुबलेन ते महावीरा इति भाव:। तु किन्तु बाह्वोर्भुजयो: यत् वीर्य्यं तत् क्षत्रियाणां नतु ब्राह्मणानामिति भाव:। स ब्राह्मणो जामदग्न्य: शस्त्रग्राही दुर्बलबाहुना अस्त्रधारी, अतएव तस्मिन् दुर्बलबाहुना शस्त्रचालना-समर्थे ब्राह्मणे दान्ते विजिते सति तस्य राज्ञो विजयिनो रामस्य का स्तुति: प्रशंसा, अपितु कापि नेत्यर्थ:। रामश्चेत् कञ्चिदन्यं महाबाहुं क्षत्रियं विजेतुमशक्ष्यत् तदैव भवत्कृतप्रशंसायोग्योऽभविष्यदिति भाव:।

अत्र बाह्वोर्वीर्य्यं क्षत्रियाणामित्यनेन 'नतु ब्राह्मणाना'मित्यर्थेनान्यव्यपोहात् आर्थी परिसंख्याऽलङ्कार:।

शालिनी वृत्तं॥ ३३॥

(१) कस्मिंश्चित्पुस्तके अपिशब्दो नास्ति।

चन्द्र। सोन्माथमिव। आर्य्ये! आर्य्ये! कृतमुत्तरोत्तरेण। (ष)
कोऽप्येष सम्प्रति नवः पुरुषावतारो
वीरो(१) न यस्य भगवान् भृगुनन्दनोऽपि।

(ष) चन्द्रेति। उन्माथेन मर्म्मवेदनया सह वर्त्तमानमिति सोन्माथं। आर्य्ये आर्य्येति क्रोधे द्विरुक्तिः। उत्तरं परं यदुत्तरं प्रतिवाक्यं तेन कृतं अलं इतः परमस्य प्रतिवचनं न देयमित्यर्थः। सर्वविदितवृत्तान्तानभिज्ञेन केवल-माहङ्कारोक्तिकारिणा अनेन बालकेन सह उक्तिप्रत्युक्तिकरणे स्वस्यैव लाघवं स्यादिति भावः।

केवलमाहङ्कारोक्तिकारित्वं सर्वविदितवृत्तान्तानभिज्ञत्वञ्च लवस्य प्रतिपादयति कोऽपीति। सम्प्रति कोऽपि अनिर्वचनीयः पदार्थः, नवः अपूर्वः एषः पुरुषावतारः नरः सन् अवतीर्णः। सोऽनुगुरुमेक्तिरियं। तत्कारणमाह वीर इति। यस्य समीपे भगवान् महामाहात्म्यशाली भृगुनन्दनोऽपि परशुरामोऽपि न वीरः, यः विसन्न-कृत्वा जगतीपतीनां हन्तारं जगत्स्वीकृतं महावीरं परशुराममपि वीरत्वेन न गणयतीत्यर्थः। योहि वाचा तं भावं व्यनक्ति ततोऽधिकोऽहङ्कारी कोनाम भवितुमर्हति, सुतरां महादाम्भिकोऽयमवज्ञेय एवेति भावः। यस्य पर्य्याप्ता यथेप्सिता सप्तभुवनस्य भूरादिसप्तलोकस्य अभयदक्षिणा सर्वेशवलवाहनस्य रावणस्य वधेन अभयदानं येषु तानि तथोक्तानि, पुण्यानि पवित्राणि तातस्य पितृपर्य्यायस्य रामस्य चरितानि कर्म्माणि न वेद जानाति। सुतरां सर्वविदितवृत्तान्तानभिज्ञोऽप्ययमिति भावः।

अत्र लवस्य महादाम्भिकत्वं अनभिज्ञत्वञ्च प्रतीयमानं भङ्गीविशेषेणाभिहितमिति पर्य्यायोक्तमलङ्कारः, तथा 'भग भुविति' 'पर्य्याप्तसप्त'ेति व्यञ्जनानामनेकधासकृत्साम्यात् छेकानुप्रासश्च, इत्यनयोः संसृष्टिः। यस्येति यच्छब्दस्य उत्तरवाक्यस्थत्वेन तच्छब्दा-नपेक्षणात् न विधेयाविमर्शदोषः।

---

(१) श्लाघ्य इति पाठान्तरं।

पर्य्याप्तसप्तभुवनाभयदक्षिणानि
पुण्यानि तातचरितानि च यो न वेद ॥३४॥

लवः। कोहि रघुपतेश्चरितं महिमानञ्च न जानाति, यदि नाम किञ्चिद्वक्तव्यमस्ति, अथवा शान्तम्। (स)

वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु, किं वर्ण्यते
सुन्दस्त्रीदमनेऽप्यखण्डयशसो(१)लोके महान्तो हिते।

"कामं प्रकामं पर्य्याप्तं निकामेष्टं यथेप्सित"मित्यमरः।

अवतार इति "दिहिलिहो"त्यादौ चकारात् णप्रत्ययः कर्त्तरि, ततस्तेन कर्म्मधारयः सप्तानां भुवनानां समाहार इति सप्तभुवनं भुवनशब्दस्य पात्रादित्वात् न ईप्रत्ययः। दानार्थे दक्षिणाशब्दो लाक्षणिकः।

वसन्ततिलका वृत्तं ॥ ३४ ॥

(स) लव इति। वक्तव्यं आलोचनीयं। शान्तं विरतं भवतु तदालोचनमित्यर्थः।

ननु कथं शान्तं, आलोच्यतामेव रामचरितमित्याह वृद्धा इति। वृद्धा वयोवृद्धास्ते रामा गौरवाद्बहुवचनं, अतएव विचारणीयानि समालोचनीयानि चरितानि कर्म्माणि येषां ते, न भवन्तीत्यर्थः, अथवा किं वर्ण्यते किं वर्णनीयमस्ति, रामस्य वीरचरित्रवर्णनारम्भे दोषाविष्कार एव स्यादिति भावः। तदेव दर्शयति सुन्देत्यादि। सुन्दस्य सुन्दनामकस्य जम्भपुत्रस्य स्त्री भार्य्या ताड़का, तस्या दमने वधे कृते सतीत्यर्थः अखण्डं परिपूर्णं यशो येषां ते अखण्डयशसः ते रामाः गौरवाद्बहुवचनं लोके जगति महान्तोहि महात्मान एव पूज्या एवेत्यर्थः। स्त्रीहत्यारूपं लोकशास्त्रगर्हितं कार्य्यं सम्पादितवतोऽपि रामस्य यशो न कलुषितं किन्तु जगति जनैः स परिपूज्यते इति सोल्लुण्ठनोक्तिः। खरस्य तदाख्यस्य महावीरराक्षसस्य आयोधने युद्धे यानि अपि त्रीणि अपराङ्मुखानि

(१) अकुण्ठयशस इति पाठभेदः।

यानि त्रीण्यपराङ्मुखान्यपि(१)पदान्यासन् खरायोधने
यद्वा कौशलमिन्द्रसूनुनिधने तत्राप्यभिज्ञो जनः ॥३५॥

अविमुखानि अदर्शितपृष्ठानीत्यर्थः यावत् पदानि पश्चाद्दिशि पदक्षेपा आसन् अभवन्, तथा यद्वा यच्च इन्द्रसूनोर्देवराजतनयस्य वालिनो निधने विनाशे कौशलं नैपुण्यं रामस्य आसीदिति शेषः, तत्रापि तेष्वपि रामस्य चरितेषु जनो लोकोऽभिज्ञः ज्ञानवान्। न केवलं रावणादिनिधनादिना चमत्कारीणि रामचरितानि जनो जानाति, अपितु स्त्रीहत्या, खरसमरे पलायनकल्पमपसरणं, मायया साहं युद्धव्यापृतस्य वालिनो विनाशश्च एतानि पापविशेषकलुषितान्यपि रामचरितानि जनो जानात्येवेति अपि-शब्दस्यार्थः। स्त्रीहत्यारूपवीभत्सकर्माचरणात् रामस्य चेतसोऽनौदार्यं खरसमरे पश्चादपसरणात् भीरुताप्रकाशः छलेन वालिनो निधनं भीतिद्योतकं नितान्तमन्याय्यञ्चेति रामचरितदोषा इति भावः।

अत्र विवक्षितस्य रामदोषस्य तिरस्कृत्य वर्णनेन निषेधाभासात् वक्ष्यमाणगत आक्षेपा-लङ्कारः पदार्थहेतुकेन काव्यलिङ्गेन सङ्कीर्यते।

तत्रेति तेष्विति बहुवचनान्तात् त्रप्रत्ययः।

स्त्रीहत्यायां पापमाह याज्ञवल्क्यवचनं तिथितत्त्वधृतवचनञ्च—

"शरणागतबालस्त्री-हिंसकान् संवसेन्न तु।
चीर्णव्रतानपि सदा कृतघ्नसहितानिमान्॥"
"अवध्याञ्च स्त्रियं प्राहुस्तिर्यग्योनिगतेष्वपि।"

खरयुद्धे रामस्य त्रिपदापसर्पणप्रमाणं यथा रामायणे—

"विकलः स कृतो बाणैः खरो रामेण संयुगे।
मत्तो रुधिरगन्धेन तमेवाभ्यद्रवद्द्रुतं।

(१) अकुतोभयान्यपीति पाठान्तरं।

चन्द्र। आः, तातापवादभिन्नमर्य्याद! अति हि नाम प्रगल्भसे। (ह)

तमापतन्तं संक्रुद्धं कृतास्त्रो रुधिराप्लुतं।
अपासर्पद्विविपदं किञ्चित्त्वरितविक्रमः।"

"बाणक्षेपावकाशो यथा न भवति तथोपर्य्यापतन्तं खरं दृष्टा अत्यासत्तौ धनुर्व्यापारो न स्यादिति स्वशरीरे तद्रुधिरपातभिया च द्वित्राणि पदानि त्वरितपदन्यासो वाणं सन्दधदेव पृष्ठतोऽपासर्प"दिति रामानुजः। लवस्तु 'आत्मरक्षार्थमेव द्वित्रिपदापसर्पण'मिति उक्तरामायणवचनार्थमवधार्य्य तच्च पलायनमिव मन्यमानः कटाक्षितवानित्यवधेयं। तत्र युद्धे क्षत्रियाणां पलायनं मनुना निषिद्धं—यथा—

"समोत्तमाधमै राजा त्वाहूतः पालयन् प्रजाः।
न निवर्त्तेत संग्रामात् क्षात्रं धर्म्ममनुस्मरन्॥"

सुग्रीवेण सह युध्यमानो बाली प्रच्छन्नवर्त्तिना रामेण निहतः। तदुक्तं रामायणे—

"हीयमानमथापश्यत् सुग्रीवं वानरेश्वरं।
प्रेक्षमाणं दिशश्चैव राघवः स मुहुर्मुहुः॥
ततो रामो महातेजा आर्त्तं दृष्ट्वा हरीश्वरम्।
स शरं वीक्षते वीरो बालिनो बधकाङ्क्षया॥"

* * *

"मुक्तस्तु वज्रनिर्घोषः प्रदीप्ताशनिसन्निभः।
राघवेण महाबाणो बालिवक्षसि पातितः॥"

ईदृशबधोऽपि मनुना निषिद्धः। तथाच हन्यादित्यधिकारे मनुः—

"नायुध्यमानं पश्यन्तं न परेण समागतं।"

शार्दूलविक्रीड़ितं वृत्तं॥ ३५॥

(ह) चन्द्रेति। आ इति क्रोधसूचकमव्ययं। तातस्य पितृपर्य्यायस्य रामस्य अपवादेन निन्दया भिन्ना क्षुण्णा नष्टेति यावत् मर्य्यादा न्याय्यपथस्थितिर्य्यस्य तत्सम्बोधनं। विनयावनतभाविनावस्थानयोग्यस्य सामान्यबालकस्य लवस्य जगत्स्वीकृतमहावीरराम-

लवः। अये! मय्येव(१)भ्रुकुटीधरः संवृत्तः। (च)

सुम। स्फुरितमनयोः क्रोधेन। तथाहि (क)

चूडामण्डलवन्धनं तरलयत्याकूतजो वेपथुः(२)

किञ्चित्कोकनदच्छदस्य सदृशे नेत्रे स्वयं रज्यतः।

निन्दया न्याय्यपथातिक्रमणमेव जातमिति भावः। अति हि अत्यन्तमेव प्रगल्भसे विकत्थसे रामनिन्दया दर्पं प्रकटयसीत्यर्थः। नामेत्यपि क्रोधसूचकं। अतएव तवैतद्दर्पशातनं मयाऽवश्यमेव विधेयमिति भावः।

"मर्य्यादा। न्याय्यपथस्थिति"रिति शब्दकल्पद्रुमः।

(च) लव इति। अये इति सावज्ञसम्बोधने। मय्येव प्रत्यक्षगोचरे युष्मत्-सर्वसैन्यविमर्द्दनकारिणि महावीरे एवेत्यर्थः भ्रुकुटीधरः क्रोधेन भ्रूभङ्गकारी संवृत्तो जातः। अतएव तवाप्यमुष्याः साहसिकताया समुचितशास्तिविधानं मया कर्त्तव्यमिति भावः।

(क) सुमेति। अनयोः कुमारयोः क्रोधेन स्फुरितं आविर्भूतं, स्फुरितमिति भावे क्तः। क्रोधः प्रकाशत इत्यर्थः। क्रोधप्रकाशं प्रतिपादयति तथाहीति।

चूड़ेति। आकूतजः परस्परप्रहाराभिप्रायजनितः कोपोत्पन्न इत्यर्थः वेपथुः कम्पः चूड़ामण्डलस्य केशपाशीसमूहस्य वन्धनं संयमनं वद्धं शिखासमूहमित्यर्थः तरलयति कम्पयति, तथा स्वयं आत्मना स्वभावत एवेत्यर्थः कोकनदच्छदस्य रक्तपद्मपत्रस्य किञ्चित्सदृशे ईषत्समाने रक्तोत्पलतुल्यस्वाभाविककिञ्चिल्लोहितवर्णे इत्यर्थः नेत्रे चक्षुषी रज्यतः क्रोधेन रक्तागमादधिकलोहितवर्णे भवतः। तथा वक्त्रं मुखं कर्त्तृ अकाण्डे अनवसरे सहसेत्यर्थः ताण्डवितयोः नृत्यन्त्योः कम्पमानयोरित्यर्थः भ्रुवोः भ्रूद्वयस्य भङ्गेन पृथग्भावेन भीषणभ्रुकुट्या इत्यर्थः, उत्कटं सुस्पष्टं लाञ्छनं कलङ्कं

(१) आः कथं मय्येवेति पाठान्तरं। (२) क्रोधेनोद्वतधूतकुन्तलभरः सर्व्वाङ्गजो वेपथुरिति पाठभेदः।

धत्ते कान्तिमकाण्डताण्डवितयोर्भङ्गेन वक्त्रं भ्रुवो-
श्चन्द्रस्योत्कटलाञ्छनस्य(१)कमलस्योद्भ्रान्तभृङ्गस्य च ॥३६॥

कुमारौ। तदितो विमर्द्दक्षमां भूमिमवतरावः। (ख)

इति निष्क्रान्ताः सर्वे।

यस्य तादृशस्य चन्द्रस्य, तथा उद्भ्रान्ता उपरि भ्रमन्तः भृङ्गा भ्रमरा यस्य तस्य उद्भ्रान्तभृङ्गस्य कमलस्य पद्मस्य च कान्तिं शोभां धत्ते वहति। अनयोर्वदनद्वयं चन्द्रपद्माभ्यां सदृशं नयनताराचतुष्टयञ्च चन्द्रकलङ्कभ्रमरैस्तुल्यमित्यर्थः। एभिर्लिङ्गैरनयोः कोपोऽनुमीयते, तेन च इदानीमेव समरारम्भोभवेदित्यवगम्यत इति भावः।

अत्र अन्यस्य कान्तिं कथमन्यो धत्त इति वस्तुसम्बन्धोऽसम्भवन् तत्सदृशकान्तिमिति बिम्बप्रतिबिम्बभावं बोधयतीति निदर्शनाऽलङ्कारः, तथा तत्कृतविच्छित्तिवशात् कम्परक्तनेत्रताभ्रूभङ्गरूपैर्हेतुभिः कोपरूपसाध्यस्य ज्ञानादनुमानालङ्कारश्च, अनयोरङ्गाङ्गिभावेन सङ्करः, काण्डताण्डेति व्यञ्जनानां सकृदनेकधासाम्याच्छेकानुप्रासश्चेति संसृष्टिः।

"आकूतं स्यादभिप्राय"इति हलायुधः। "शिखा चूड़ा केशपाशी जुटिका जुटिकेत्यपि। शिरोमध्यबद्धचूड़े"इति शब्दरत्नावली।

तरलयतीति तरलं करोतीति इन्। ताण्डवमनयोर्जातमिति इतच्।

शार्दूलविक्रीड़ितं वृत्तं ॥ ३६ ॥

(ख) कुमाराविति। तत्तस्मात् तातापवादिनः तर्जयितुश्च तव शास्तिविधानस्यावश्यकत्वादित्यर्थः। इतः स्थानात्, विमर्द्दक्षमां युद्धोपयोगिनीं भूमिं अवतरावो गच्छावः।

---

(१) उद्भटलाञ्छनस्येति पाठान्तरं।

## इति कुमारविक्रमोनाम पञ्चमोऽङ्कः । (ग)

(ग) इतीति। कुमारयोः लवचन्द्रकेत्वोर्विक्रमो यत्र सः, पञ्चमोऽङ्कः समाप्त इति शेषः।

इति श्रीहरिदाससिद्धान्तवागीशविरचितायामुत्तररामचरितटीकायां
सर्वार्थबोधिनीसमाख्यायां पञ्चमाङ्कविवरणं समाप्तम् ॥ ५ ॥





# अथ षष्ठोऽङ्कः।

—):०:(—

ततः प्रविशति विमानेनोज्ज्वलेन(१)विद्याधरमिथुनम्। (क)

विद्याधरः। अहो खल्वनयोर्विकर्त्तनकुलकुमारयोरकाण्ड-कलहप्रचण्डयोरुद्द्योतितचापलक्ष्मीकयो (२) रद्भुतोद्भ्रान्तदेवासुराणि विक्रान्तचरितानि। तथाहि प्रिये! पश्य पश्य। (ख)

---

(क) तत इति। विद्याधरः कामरूपी खेचरः देवयोनिविशेषः। विद्याधरी च विद्याधरश्चेति विद्याधरौ, तयोर्मिथुनं युग्मं विद्याधरदम्पती इत्यर्थः। उज्ज्वलेन उपकरणोत्कर्षात् दीप्यमानेन, विमानेन व्योमयानेन।

(ख) विद्याधर इति। अहो आश्चर्य्ये, खलु वाक्यालङ्कारे। अकाण्डे अनवसरे यः कलहः समरः तेन प्रचण्डयोरुग्रयोः, तथा उद्द्योतिता प्रकाशिता चापी लक्ष्मीः वीरत्वव्यञ्जिका चापश्री ययोः तयोः, अनयोर्दृश्यमानयोः, विकर्त्तनकुलकुमारयोः सूर्य्यवंशीयबालकयोः, चन्द्रकेतुलवयोः, अद्भुतेन विस्मयेन उद्भ्रान्ता अस्थिरान्तःकरणाः तारतम्यकरणासमर्था इत्यर्थः देवासुराः देवदानवा यैस्तानि, विक्रान्तचरितानि विक्रम-

(१) विमानोज्ज्वलमिति पाठान्तरं। (२) उद्योतितचापलक्ष्मीकानि इति पाठभेदः।

झणज्झणितकङ्कणक्वणितकिङ्किणीकं धनु-
र्ध्वनद्गुरुगुणाटनीकृतकरालकोलाहलम्।
वितत्य किरतोः शरानविरतस्फुरच्चूड़यो-
र्विचित्रमभिवर्द्धते भुवनभीममायोधनम्॥ १॥
विजृम्भितञ्च दिव्यास्त्रं(१)मङ्गलाय द्वयोरपि।
स्तनयित्नोरिवामन्द्रं दुन्दुभेर्दुन्दुमायितम्॥ २॥

प्रकाशकायुधप्रयोगव्यापाराः। अनयोः सुदारुणसमरव्यापारमवलोक्य सर्वे सुरासुराः तारतम्यकरणासमर्थाः सन्तो बलवद्विस्मयापन्ना इति भावः। तथाहि तमेव विस्मयकर-प्रकारं जानाहीत्यर्थः। पश्य पश्यति विस्मये द्विरुक्तिः।

झणज्झणितेति। झणज्झणितानि झणज्झणेत्यव्यक्तशब्दकारीणि यानि कङ्कणानि हस्ताभरणविशेषाः, तद्वत् क्वणिताः शब्दायमानाः किङ्किण्यः क्षुद्रघण्टा यस्य तत् तथोक्तं; तथा गुरुणा महता, गुणेन मौर्व्या, अटनीभ्यां धनुरग्राभ्याञ्च कृतः करालो भयङ्करः कोलाहलः अस्पष्टमहाशब्दो यस्य तत् तादृशं, ध्वनत् साकल्येन अतीवशब्दायमानं धनुः कोदण्डं वितत्य विस्फार्य्य शरान् वाणान् किरतोः विक्षिपतोः तथा अविरतं निरन्तरं स्फुरन्त्यः शरक्षेपेण देहस्पन्दनात् चलन्त्यः चुड़ाः शिखा ययोः तथोक्तयोरनयो-र्बालकयोः भुवनभीमं जगतां भयङ्करं विचित्रं विशेषविस्मयकरं आयोधनं युद्धं अभिवर्द्धते क्रमेण वृद्धिं प्राप्नोति।

अत्र प्रथमचरणे लुप्तोपमाऽलङ्कारः। तथा प्रथमे एकस्य मूर्द्धन्यणकारस्य, द्वितीये ककारस्य, तृतीये रेफस्य, चतुर्थे च चरणे भकारस्य असकृत्साम्यात् वृत्त्यनुप्रासः, अनयोः संसृष्टिः। किङ्किण्यो गुणः अटन्यौ च एते युगपदेव शब्दायन्ते, तेनैव समुदितं धनुः अतीव शब्दं करोतीति प्रतिपादनार्थं ध्वनत्पदमुपात्तं, तेन न अधिक-पदत्वदोषः।

(१) दिव्यस्त्रेति क्वचित् पाठः।

तत्प्रवर्त्त्यतामनयोः प्रवीरयोरनवरतमविरलललित(१) विकचकनककमलकमनीयसन्ततिः (२) अमरतरुतरुण (३) मणिमुकुलनिकरमकरन्दसुन्दरः पुष्पनिपातः । (ग)

---

"किङ्किणी क्षुद्र घण्टिका।" "कोटिरस्याटनी" इति चामरः ।

झणज्झणाः शब्दा एषां सञ्जात इति झणज्झणितानि तारकादित्वादितच् ।

पृथ्वी वृत्तम् "जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरु"रिति लक्षणात् ॥ १ ॥

विजृम्भितमिति । द्वयोरपि चन्द्रकेतुलवयोः दिव्यास्त्रं उत्कृष्टमायुधं विजृम्भितं व्याप्तं परस्परं प्रति परस्परप्रयुक्तैनास्त्रेण समरस्थलमाकीर्णमित्यर्थः।. तथा द्वयोरपि तयोर्मङ्गलाय उत्साहवर्द्धनरूपकल्याणाय स्तनयित्नोर्मेघस्येव मेघवद्गम्भीरनादिन इत्यर्थः दुन्दुभेः तदाख्यवाद्यविशेषस्य आमन्द्रं अतीवगम्भीरं दुन्दुमायितं दुम् दुम् इत्येवंशब्दश्च विजृम्भितं प्रादुर्भूतं । उभयोरपि समरोत्साहवर्द्धनाय देवाश्च दुन्दुभिं वादयन्तीत्यर्थः ।

अत्र एकया विजृम्भितक्रियया दिव्यास्त्रदुन्दुमायितयोः कर्त्तृत्वेनान्वयात् तुल्ययोगिताऽलङ्कारः, उपमया सङ्कीर्णः, दुन्दु दुन्दु इति छेकानुप्रासेन संसृज्यते ।

"मन्द्रस्तु गम्भीरे"। "भेरी स्त्री दुन्दुभिः पुमानिति"चामरः ।

दुन्दुमायितमिति "अव्यक्तानुकरणादित्यादिना दुम्दुम् शब्दात् डाच् "डाचि विवक्षिते द्वे बहुलमिति दुन्दुमा, ततः "डाज्लोहितादिभ्यष्यर्थे"इति क्यषिस्ततो भावे क्तः ॥ २ ॥

(ग) तदिति। तत्तस्मात् देवैरपि आनन्देन दुन्दुभिवादनादित्यर्थः प्रवीरयोः प्रकृष्टशूरयोः अनयोश्चन्द्रकेतुलवयोः उपरीति शेषः अविरलैरनल्पैः ललितैः सुन्दरैः, विकचैः विकसितैः कनककमलैः सुवर्णपद्मैः कमनीया मनोहरा सन्तति धारा यस्मिन् स तथोक्तः सुवर्णपद्मानामविच्छिन्नधारावाहीत्यर्थः। तथा अमरतरूणां देववृक्षाणां

---

(१) लुलितेति पाठान्तरं। (२) संहतिरिति पाठभेदः। मणिशब्दो नास्ति।

विद्याधरी। ता किन्ति उण अआण्डविप्फुरिदतडिच्छडाकडारं विअ अम्बरं झत्ति संवुत्तं। (घ)

विद्याधरः। तत् किन्नु खल्वद्य। (ङ)

त्वष्टृयन्त्र(१)भ्रमिभ्रान्तमार्त्तण्डज्योतिरुज्ज्वलः।
पुटभेदो ललाटस्थनीललोहितचक्षुषः॥ ३॥

(घ) तत् किमिति पुनरकाण्डविस्फुरिततडिच्छटाकडारमिव अम्बरं झटिति संवृत्तं।

पारिजातादीनां यः तरुणमणिमुकुलनिकरः नवोत्पन्नमणिमयकलिकासमूहः तस्य मकरन्दैः रसैर्मधुभिरिति यावत् सुन्दरः सौरभातिशयात् मनोहरः पुष्पनिपातः साधारणकुसुमवृष्टिः प्रवर्त्त्यतां आरभ्यतां। अविच्छिन्नस्वर्णपद्मधारासहिता पारिजातादिदैवतरुपुष्पनिर्य्याससुरभीकृता साधारणपुष्पवृष्टिः क्रियतामिति सरलार्थः। दैवैरपि दुन्दुभिवादनेनानन्दप्रकाशात् अस्माभिरपि पुष्पवृष्ट्या आनन्दः प्रकाशयितव्य इति भावः।

अत्र वृत्त्यनुप्रासच्छेकानुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करः।

अभिनयप्रतिकूलतया ईदृशदीर्घसमासविन्यासो भवभूतेर्महान् दोष इति समालोचयन्ति।

(घ) विद्ये ति। अन्यत्रं वात्रापि विद्येति नाम्न एकदेशमात्रोपन्यासे विद्याधरो विद्याधरी वेति संशयः स्यादिति विद्याधरी विद्याधरीति सम्पूर्णं नामोपन्यस्तं। प्रश्नार्थबोधकं तत्किमित्येकमव्ययं। अप्रथमे पुनःशब्दः। अकाण्डे अनवसरे मेघाभावान् असमये इत्यर्थः विस्फुरितानां प्रकाशितानां तडितां विद्युतां छटाभिः प्रभाभिः कडारं पिङ्गलवर्णं। अम्बरमाकाशं झटिति सहसा संवृत्तं जातमित्युत्प्रेक्षालङ्कारः।

(ङ) विद्येति। प्रश्नबोधकं तत्किन्नु इत्येकमव्ययं। खलु वाक्यालङ्कारे। अद्य अस्मिन्नहनि।

त्वष्ट्रिति। त्वष्टुर्विश्वकर्म्मणो यद्यन्त्रं शाणयन्त्रं, तस्य भ्रमिर्घर्षणं तया भ्रान्तः

(१) त्वाष्ट्रयन्त्रे ति पाठान्तरं।

विचिन्त्य। आं ज्ञातं, वत्सेन चन्द्रकेतुना(१) प्रयुक्तमस्त्रमाग्नेयं, यस्यायमग्निच्छटासम्पातः(२)। सम्प्रति हि (च)

अवदग्धकर्बुरितकेतुचामरै-
रपयातमेव हि विमानमण्डलैः।
दधति ध्वजांशुकपटाञ्चलेष्विमाः(३)
क्षणकुङ्कुमस्फुरणविभ्रमं शिखाः ॥ ४ ॥

---

घूर्णितो यो मार्त्तण्डः सूर्य्यः तस्य ज्योतिस्तेज इव उज्ज्वलो दीप्यमानः, ललाटस्थं भालस्थितं यत् नीललोहितस्य शिवस्य चक्षुर्नेत्रं तस्य पुटयोराच्छादनयोः भेदः अपसारणं तत्किन्नु जात इति शेषः। विश्वकर्मणा शाणयन्त्रेण क्रियमानस्य सूर्य्यस्य तेजोवत् दीप्यमानः जगत्संहारिणो रुद्रस्य तृतीयनयनप्रकाशः किमयमिति सरलार्थः। तन्नयनाभिभाविदारुणत्वादिति भावः।

अत्र उपमेये आग्नेयास्त्रे उपमानस्य तृतीयहरनयनतेजसः संशयात् शुद्धसन्देहाऽलङ्कारः, स च लुप्तोपमया सङ्कीर्य्यते।

पुरा किल भगवतोभास्करस्य सुदुःसहं तेज आसीत्, ततो ब्रह्मणो वाक्यानुसारेण रवेः[illegible] कर्म्मा स्वकीयशाणयन्त्रे रविमण्डलमारोप्य असकृत् परिभ्रामयन् किमपि [illegible]कमपि संछिद्य तस्य तेजोह्रासं विदधौ इति मार्कण्डेयपुराणवार्त्ताऽत्रानुसन्धेया॥ ३ ॥

(च) विचिन्त्येति। विचिन्त्य विशेषचिन्तया निर्णीय। आं इति स्मरणार्थमव्ययं। आग्नेयं अग्निदैवतं। प्रयुक्तं निक्षिप्तं। यस्य आग्नेयास्त्रस्य अयं दृश्यमानः अग्निच्छटासम्पातः वह्निप्रभाप्रसारः वर्त्तत इति शेषः। हि तथाहि अग्निर्देवता अस्येत्याग्नेयं "सर्वत्राग्निकलिभ्यां ठग्वक्तव्यः"।

अवदग्धेति। अवदग्धानि अंशतः प्लुष्टानि अतएव कर्बुरितानि विचित्रीकृतानि

---

(१) जातक्षोभेण चन्द्रकेतुना इति पाठान्तरं। (२) तस्यायमिति पाठभेदः। (३) ध्वजांशुक इति विभिन्नः पाठः।

आश्चर्य्यं, प्रवृत्त एवायमुच्चण्डवज्रखण्डावस्फोटपटुः (१) उत्सर्पिस्फुलिङ्गगुरुरुत्तालतुमुललेलिहानज्वालासम्भारभैरवोभगवानुषर्वुधः। प्रचण्डश्चास्य सर्वतः सन्तापः, तत् प्रियामङ्गेनाच्छाद्य दूरमपसरामि। तथा करोति। (छ)

केतुचामराणि ध्वजदण्डबालव्यजनानि येषां तैस्तथोक्तैः विमानमण्डलैः व्योमयानसमूहैः अपयातमेव दाहभयेन रणान्तरीचात् अपसृतमेव। तथा इमाः शिखाः अग्निज्वालाः ध्वजानां केतुदण्डानां अङ्कुशानां ध्वजदण्डाग्रे स्थितानां सृणीणां पटाञ्चलेषु वसनप्रान्तेषु पताकैकदेशेषु इत्यर्थः चणं व्याप्य यत् कुङ्कुमच्छुरणं कुङ्कुमरागरञ्जनं तस्य विभ्रमं कान्तिं दधति धारयन्ति, आग्नेयास्त्रवह्निशिखासंसर्गात् ध्वजाग्रस्थपताका कुङ्कुमरञ्जिता इव प्रतिभान्तीत्यर्थः। दारुणोऽयमस्त्रप्रभाव इति भावः।

अत्र अन्यस्य विभ्रमं कथमन्योवहेदिति वस्तुसम्बन्धोऽसम्भवन् कुङ्कुमच्छुरणविभ्रममिव विभ्रमं दधतीति विम्बप्रतिविम्बभावं बोधयतीति निदर्शनाऽलङ्कारः। तथा निष्प्रयोजनहिशब्दप्रयोगात् निरर्थकत्वदोषः, स च 'प्रपलायितं खलु विमानमण्डलैः'रिति पाठेन समाधेयः।

"चित्रं किर्म्मीर कल्माष शवलैताश्च कर्वुरे।" "अङ्कुशोऽस्त्री सृणिः स्त्रिया"मिति चामरः। "वस्त्रस्यान्तोमतोऽञ्चलः।" "लक्ष्मीश्रीकान्तिविभ्रमा"इति च हलायुधः।

कर्वुराणि कृतानीति कर्वुरितानि करोत्यर्थेनन्तात् कर्म्मणि क्तः।

मञ्जुभाषिणी वृत्तं "सजसा जगौ च यदि मञ्जुभाषिणी"ति लक्षणात्॥ ४॥

(छ) आश्चर्य्यमिति। उच्चण्डानां काठिन्येन भीषणानां वज्रखण्डानां अशनिखण्डानां अवस्फोटे दाहेन विदारणे पटुः समर्थः नितान्तकठिनवज्रखण्डानपि दग्धुं चम इत्यर्थः, तथा उत्सर्पिभिः ऊर्द्धं प्रसरद्भिः स्फुलिङ्गैः अग्निकणैः गुरुर्महान्, तथा उत्ताला विकरालाः, तुमुलं सङ्कुलं यथा स्यात्तथा लेलिहानाः अत्यर्थं ग्रसमानाः अनियत-

(१) वज्रखण्डावस्फोटपटूतरस्फुलिङ्गविकृतिरिति क्वचित् पाठः।

विद्याधरी। दिट्ठिआ एदेण विमलमोत्तिअफलसीदल (१) सिणिद्धमसिणमंसलेण(२)णाहदेहप्फंसेण आणन्दमन्दमुउलिदघुसन्तलोअणाए अन्दरिदो ज्जेव सन्दावो। (ञ)

विद्याधरः। अयि! किमत्र मयाकृतम्, अथवा। (झ)

(ञ) दिष्ट्या एतेन विमलमौक्तिकफलशीतलस्निग्धमसृणमांसलेन नाथदेहस्पर्शेन आनन्दमन्दमुकुलितघूर्णल्लोचनाया अन्तरित एव सन्तापः।

---

भावेनैतस्तत: प्रसरन्त्य इत्यर्थ: या ज्वाला अर्चिष: तासां सम्भारेण समूहेन भैरवो भयङ्कर: भगवान् महाप्रभाव: अयं उषर्बुध: अग्नि: प्रवृत्त एव उत्पन्न एव। स्वयोगव्यवस्थापने एवशब्द:। किञ्चेति चार्थ:। अस्य अग्र्: सन्ताप:, सर्वत: सर्वास्वेव दिक्षु प्रचण्ड: अनुराग:, तत्तस्मात् अनावृतदेहेन प्रियाया अपसरणासम्भवादित्यर्थ:, अङ्गेन स्वकीयवच:प्रभृत्यवयवेन।

"उत्ताल उत्कट: श्रेष्ठे विकराले प्लवङ्गमे"इति मेदिनी। "शोचिष्केश उषर्बुध" इति वह्निपर्य्याये अमर:।

(ञ) विद्याधरीति। दिष्ट्या भाग्येन। विमलं विशुद्धं यत् मौक्तिकफलं मुक्ताफलं तदिव शीतल:, स्निग्ध: अरुक्ष: मसृण: श्लक्ष्ण: (पालिश इति यस्य भाषा), मांसल: कठिनश्च तेन तथोक्तेन, नाथस्य अस्य मे पत्यु: देहस्य स्पर्शेन कर्त्रा आनन्देन स्पर्शसुखेन मन्दं अल्पं यथा स्यात्तथा मुकुलिते मुद्रिते, घूर्णती चञ्चले, लोचने चक्षुषी यस्या:, तथोक्ताया ममेत्यर्थ: सन्ताप: वह्निज्वालास्पर्शजन्या पीड़ा, अन्तरित: दूरीकृत:। वहिरावरणेन वह्निज्वालास्पर्शाभावात् सुखान्तरोदयाच्चेति भाव:। अन्तरित मुकुलितेति अन्तरमुकुलशब्दाभ्यां करोत्यर्थेनन्ताभ्यां कर्म्मणि क्तौ।

"बलवान् मांसलोंसल"इत्यमर:।

(झ) विद्याधर इति। अयीति सस्नेहसम्बोधने। अत्र तव सन्तापनिवारणविषये।

---

(१) विमलमोत्तिअसरशीदल इति पाठान्तरं। (२) सिणिद्धमणिसोवाणमंसलेन इति पाठभेद:।

अकिञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति ।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥ ५ ॥

विद्याधरी । कहमविरलविलोलघुम्मन्तविज्जुल्लदाविलाससमण्डिदेहिं मत्तमोरकण्ठसामलेहिं ओत्थरीअदि णहत्थलं जलहरेहिं । (ञ)

विद्याधरः । हन्त ! हन्त ! कुमारलवप्रयुक्तवारुणास्त्रप्रभावः खल्वयम् । कथमविरलप्रवृत्तवारिधारासहस्रसम्पातैः प्रशान्तं पावकास्त्रम् । (ट)

(ञ) कथमविरलविलोलघूर्णद्विद्युल्लताविलाससमण्डितैर्मत्तमयूरकण्ठश्यामलैरास्तीर्य्यते नभस्तलं जलधरैः ।

अकिञ्चिदिति । श्लोकोऽयं द्वितीयेऽङ्के रामेण पठितः, तत्र च व्याख्यातः ॥ ५ ॥

(ञ) विद्याधरीति । अविरलं निरन्तरं विलोलानां चञ्चलानां घूर्णन्तीनां भ्रमन्तीनां विद्युल्लतानां सौदामिनीदाम्नां विलासेन विभ्रमेण मण्डितैः भूषितैः, तथा मत्तमयूराणां कण्ठा इव श्यामलाः श्यामवर्णास्तैः, जलधरैर्मेघैः नभस्तलं आकाशदेशः कथं आस्तीर्य्यते आच्छाद्यते ।

(ट) विद्याधर इति । हन्तेति हर्षसूचकमव्ययं तदतिशये द्विरुक्तिः । कुमारेण लवेन प्रयुक्तं चन्द्रकेतोराग्नेयास्त्रनिवारणाय निक्षिप्तं यत् वारुणं वरुणदैवतमस्त्रं तस्य खलु तस्यैव वारुणास्त्रस्य प्रभावः सामर्थ्यं अयं जलधरप्रादुर्भावः । अविरलं निरन्तरं प्रवृत्तानि यानि वारिधारासहस्राणि वृष्टिधारासमूहाः तेषां सम्पातैः, पतनैः पावकास्त्रं चन्द्रकेतोराग्नेयास्त्रं प्रशान्तं निर्वापितं । कथमिति सम्भावयामीत्यर्थः ।

"हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयो"रित्यमरः । "कथं (अ)···सम्भावना" इति शब्दकल्पद्रुमः ।

विद्याधरी। **पिअं मे पिअं मे।** (ठ)(१)

विद्याधरः। **हन्त! हन्त! (२) सर्वमतिमात्रं दोषाय, यत् प्रबलवातावलिक्षोभगम्भीरगुणगुणायमानमेघमेदुरान्धकारनीरन्ध्रनिबद्धं(३) एकवारविश्वग्रसनविकच (४) विकरालकालकण्ठकण्ठ(५)कन्दरविवर्त्तमानमिव युगान्तयोगनिद्रानिरुद्धसर्वद्वार(६)नारायणोदरनिविष्टमिव भूतजातं प्रवेपते। (७)(ड)**

(ठ) प्रियं मे प्रियम्।

(ठ) विद्याधरीति। प्रियं दारुणाग्नियास्त्रप्रशमनमित्यर्थः पुनःसन्तापसम्भावनाऽभावादिति भावः। हर्षातिशये द्विरुक्तिः।

(ड) विद्याधर इति। अत्र हन्तशब्दोविषादसूचकः, भयसम्भ्रमे द्विरुक्तिः। मात्रां परिमाणमतिक्रान्तमित्यतिमात्रं। सर्वं जगत्यां सर्वं वस्तु अतिमात्रं अत्यर्थं सत् दोषाय सम्पद्यत इति शेषः। यद्यस्माद्धेतोः, प्रबलाया बलवत्याः, वातावल्याः वात्यायाः क्षोभेण सञ्चलनेन गम्भीरं मन्द्रं यथा स्यात्तथा गुणगुणायमानाः गुण गुण इत्येवमव्यक्तं शब्दं कुर्वन्तः ये मेघाः तैः मेदुरं स्निग्धं निविड़मित्यर्थः यदन्धकारं तमः तेन नीरन्ध्रं निरवकाशं गाढ़मिति यावत् यथा तथा निबद्धं धृतं आवृतमित्यर्थः भूतजातं प्राणिसमूहः, एकेनैव वारेण उद्योगेन विश्वस्य जगतः ग्रसनाय ग्रासाय विकचः व्यात्तः यः विकरालः भयानकः कालकण्ठस्य नीलकण्ठस्य संहारमूर्त्तेरुद्रस्येत्यर्थः कण्ठकन्दरः गलविवरं तत्र विवर्त्तमानमिव अवतिष्ठमानमिव सत् जगत्संहाराय व्यात्ताननस्य रुद्रस्य मुखपथेन कण्ठविवरं प्रविष्टमिव सदित्यर्थः, तथा युगान्ते प्रलयकाले यो योगः चित्त-

(१) क्वचित् पिअं मे इत्यस्य द्विरुक्तिर्नास्ति। (२) क्वचित् भो भोरित्यधिकः पाठः। (३) नीरन्ध्रनिरुद्धमिति पाठान्तरं। (४) विकट इति पाठभेदः। (५) मुख इति क्वापि पाठः। (६) युगान्तनिद्रा इति क्वचित् योगशब्दशून्यः पाठः। (७) विपद्यत इति विभिन्नः पाठः।

साधु वत्स चन्द्रकेतो! साधु, स्थाने वायव्यास्त्रमीरितम्। यतः (ढ)

---

वृत्तिनिरोधः स निद्रा इव तया, निरुद्धानि संवृतानि सर्वाणि द्वाराणि मुखनासिकादि-प्रवेशनिर्गमनमार्गा येन तस्य नारायणस्य उदरे जठरे निविष्टमवस्थितमिव च सत् प्रवेपते कम्पते। सम्प्रति प्राणिनो गाढ़ान्धकारावृताः सन्तः 'किमयमुपस्थितः प्रलयकालः, येन वयं जगत् ग्रसतो रुद्रस्य कण्ठविवरं प्रविष्टा इव नारायणोदरेऽवस्थिता इव च प्रबलान्धकारावृताः संवृत्ता' इत्यादि नानाविधमुत्प्रेक्षमाणा भयेन कम्पन्त इत्यर्थः। प्राणिनामयमुद्वेगस्तु लवप्रयुक्तवारुणास्त्रप्रभावेणैव, सुतरां सातिशयमस्त्रप्रयोगं दोषं विना किं ब्रूम इति भावः।

अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, स च क्रियोत्प्रेक्षाद्वयेन सङ्कीर्य्यते।

"सान्द्रस्निग्धस्तु मेदुरः" "युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिष्वि"ति चामरः।

गुणगुणेत्येवं शब्दं करोतीति गुणगुणायमानः "अव्यक्तानुकरणा"दित्यादिना डाच् "डाज्लोहितादिभ्यः ष्यष्"इत्यादिः तत आनश्।

प्रलयकाले रुद्रो जगत् संहरति। तथा च कूर्म्मपुराणं, ४२ अध्याये—

"एवं संहृत्य भूतानि तत्त्वानि च महेश्वरः।
नियोजयत्यथान्योन्यं प्रधानं पुरुषं परम्।"

प्रलयकाले नारायणशरीरे जगत्प्रवेश उक्तः शिशुपालवधेऽपि, १ सर्गे—

"युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकाशमासत।"

(ढ) साध्विति। साधु भद्रं कृतमिति शेषः हर्षे विरुक्तिः। वायव्यास्त्रं वायुदैवतमस्त्रं यत् ईरितं प्रेरितं निक्षिप्तमित्यर्थः तत् स्थाने युक्तं उचितमेवाभूदित्यर्थः, अन्यथा लवप्रयुक्तवारुणास्त्रप्रभावेण जाता प्राणिनां महती प्राणाशङ्का कथमपि न निवर्त्तेतेति भावः। साधुकरणकारणमाह यत इति।

"युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः।

विद्याकल्पेन मरुता मेघानां भूयसामपि।
ब्रह्मणीव विवर्त्तानां क्वापि विप्रलयः कृतः ॥६॥

वायव्यमिति "वाय्वृतुपित्रुषसो य"दिति यत् प्रत्ययः।

विद्येति। विद्याकल्पेन तत्त्वज्ञानतुल्येन तुल्यत्वञ्चास्य लयकरणांशे, मरुता चन्द्रकेतुप्रयुक्तवायव्यास्त्रप्रादुर्भूतवायुना भूयसामपि प्रचुराणामपि मेघानां लवनिक्षिप्तवारुणास्त्रप्रादुर्भूतजलधराणां विवर्त्तानां परमार्थतःसत्तारहितानां नामरूपादिभेदभिन्नानां घटपटादिजगत्प्रपञ्चानामित्यर्थः ब्रह्मणि अद्वितीये सच्चिदानन्दस्वरूपे परमात्मनि इव क्वापि कस्मिन्नपि अदृश्यस्थाने विप्रलयः तिरोधानं कृतः। यथा सद्गुरोरुपदेशश्रवणेन "तत्त्वमसि" "एकमेवाद्वितीयं ब्रह्म नेह नानाऽस्ति किञ्चने"त्यादिवाक्यानां सम्यक्तात्पर्य्यालोचनादिभिः समुत्पन्नेन तत्त्वज्ञानेन तात्त्विकरज्जुज्ञानेन सर्पभ्रम इव नामरूपादिविविधभेदभिन्नानां घटपटादिजगत्प्रपञ्चानां पृथक्सत्ताविषयको भ्रमो निरस्यते परञ्च केवलमद्वितीयब्रह्मैवावतिष्ठते, तथा अस्य वायव्यास्त्रस्य प्रभावेण मेघनिवहो निरस्तः, परञ्च केवलं निर्म्मलं नभ एवावतिष्ठते इति सरलार्थः। विद्यया अविद्यानाशे सतीव वायव्यास्त्रयोगेन वारुणास्त्रनाशे सति सम्प्रति लोको निरुपद्रवः संवृत्त इत्यतीवानन्दकारणमिति भावः।

अत्र प्रथमार्द्धे कल्पशब्दोपादानादार्थी उपमा, द्वितीयार्द्धे च इवशब्दोपादानात् श्रौती उपमा ; अनयोः परस्परसापेक्षत्वात् सङ्करः।

"वस्तुस्वरूपावधारणं विद्यामाहु" रिति शारीरकभाष्ये भगवान् शङ्कराचार्य्यः। "परमोत्तमपुरुषार्थसाधनीभूता विद्या ब्रह्मज्ञानरूपे"ति नागोजीभट्टः। ब्रह्मलक्षणमाह वेदान्तभाष्यधृता श्रुतिः, "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म।"

"जन्माद्यस्य यत" इति वेदान्तसूत्रञ्च। विवर्त्तमाह वेदान्तसारे—

"सतत्त्वतोऽन्यथाप्रथा विकार इत्युदाहृतः।
अतत्त्वतोऽन्यथाप्रथा विवर्त्त इत्युदीरितः।"

तत्त्वज्ञानेन विवर्त्तनिवृत्तिस्तु वेदान्तदर्शनादौ द्रष्टव्या ॥ ६ ॥

विद्याधरी। णाह! कीदाणिं एसो ससम्भमुक्खित्त करब्भमिदपट्टकञ्चलो(१)दूरदो ज्जेव महुरवअण(२)पड़िसिद्ध जुज्झवावारो एदाण' कुमाराण' अन्तरम्मि(३)विमाणवरं(४) ओदरावेदि। (ण)

विद्याधरः। दृष्ट्वा। एष शम्बुकवधात् प्रतिनिवृत्तो रघुपतिः।(त)

शब्दं महापुरुषसंविहितं निशम्य
तद्गौरवात् समुपसंहृत सम्प्रहारः।

---

(ण) नाथ! क इदानीमेष ससम्भ्रमोत्क्षिप्तकरभ्रमितपट्टकाञ्चलो दूरत एव मधुरवचनप्रतिषिद्धयुद्धव्यापार एतयोः कुमारयोः अन्तरे विमानवरमवतारयति।

---

(ण) विद्याधरीति। एष दूरे दृश्यमानः, ससम्भ्रमं सत्वरं उत्क्षिप्तेन उत्तोलितेन करेण हस्तेन भ्रमितो घूर्णितः पट्टकाञ्चलः वस्त्रविशेषप्रान्तभागो येन स तथोक्तः। दूरतो निवारणवचनश्रवणासम्भवशङ्कया कुमारयोर्दृष्टेराकर्षणार्थं वस्त्राञ्चलघूर्णनमिति बोध्यं। मधुरेण प्रीतिपूर्णेन वचनेन वाक्येन प्रतिषिद्धः निवारितः युद्धव्यापारः संग्रामकार्य्यं येन स तथोक्तः। यदि गुणुयातामिमाविति सम्भावनया युद्धनिवारणाय निषेधवाक्यमप्युक्तमिति ज्ञेयं। कुमारयोश्चन्द्रकेतुलवयोः अन्तरे मध्यस्थले विमानवरं श्रेष्ठयानश्रेष्ठं पुष्पकमित्यर्थः अवतारयति अवगाहयति।

(त) विद्याधर इति। रघुपतिः रामः, शम्बुकवधात् शम्बूकवधं कृत्वेत्यर्थः ल्यब्लोपे पञ्चमी।

शब्दमिति। महापुरुषेण प्रभावातिशयशालिना रामेण संविहितं कृतं उच्चारितमित्यर्थः शब्दं समरव्यापारात् निवर्त्तेथां युवामित्येवं वाक्यमित्यर्थः निशम्य श्रुत्वा

---

(१) करभमिदणीत्तरीआञ्चल इति पाठान्तरं। (२) महुरसिणिद्धवअण इति पाठभेदः। (३) मज्झ इति क्वापि पाठः। (४) विमाणमिति भिन्नः पाठः।

**शान्तो लवः, प्रणत एव च चन्द्रकेतुः,**
**कल्याणमस्तु सुतसङ्गमनेन राज्ञः ॥ ७ ॥**

इति निष्क्रान्तौ । (थ)

## विष्कम्भकः ॥०॥ (द)

तद्गौरवात् तस्य रामस्य महिमातिशयेन स्वतो गुरुत्वावगमात् गौरवितजनवचनातिक्रमस्य अनौचित्यादित्यर्थः समुपसंहृतः साकल्येन निवर्त्तितः सम्प्रहारः युद्धव्यापारो येन स तथोक्तः, लवः शान्तः क्रोधायुधनिक्षेपादिपरित्यागेन प्रकृतिमापन्नः, चन्द्रकेतुश्च प्रणत एव ज्येष्ठतातोऽयमिति मत्वा रामपादमूले पतित एवेत्यर्थः। इदानीं सुतेन लवेन सङ्गमनं सम्मेलनं तेन राज्ञो रामस्य कल्याणं मङ्गलमस्तु, मत्पुत्रोऽयमित्यविदितवृत्तान्तो राम इदानीं 'ममैवायं पुत्र' इति परिचिन्वानः तत्सम्मेलनरूपं मङ्गलं प्राप्नोतु इत्यर्थः ।

अत्र चन्द्रकेतुलवयोरुग्रताख्यभावस्य प्रशमः रामविषयकभक्तिभावस्याङ्गमिति समाहितनामाऽलङ्कारः ।

"धान्येन धनवानित्यादिवत्" सुतसङ्गमनेनेति अभेदे तृतीया, सुतसङ्गमनस्वरूपं कल्याणमित्यर्थः ।

वसन्ततिलकावृत्तम् ॥ ७ ॥

(थ) इतीति। विद्याधरदम्पती समरावलोकनार्थेन समागतौ, तन्निवृत्तौ तत्रावस्थानप्रयोजनाभावात् निष्क्रान्ताविति बोध्यं ।

(द) विष्केति। मध्यमाभ्यां विद्याधरदम्पतीभ्यां प्रयोजितत्वादयमपि शुद्धो विष्कम्भकः। अत्र वर्त्तमानानां युद्धघटनानां वर्त्तिष्यमाणानाञ्च चन्द्रकेतुलवाभ्यां सह रामस्यालापादीनां निदर्शनं द्रष्टव्यं। तेन विष्कम्भकलक्षणे "वृत्तवर्त्तिष्यमाणाना"मिति वृत्तपदस्य वर्त्तमानार्थोऽपि मन्तव्य इति भाव्यं ।

तत प्रविशति रामः, लवः प्रणतश्चन्द्रकेतुश्च ।

रामः । पुष्पकादवतरन् (न)

**दिनकरकुलचन्द्र ! चन्द्रकेतो !**
**सरभसमेहि दृढं परिष्वजस्व ।**
**तुहिनशकलशीतलैस्तवाङ्गैः**
**शममुपयातु ममापि चित्तदाहः ॥ ८ ॥**

चन्द्र । **अभिवादये ।** (प)(१)

(ध) तत इति । प्रणतः रामाभिवादनाय भूमौ पतितः । चन्द्रकेतुश्च प्रणत इत्यर्थः ।

(न) राम इति । पुष्पकात् तदाख्यव्योमयानात् अवतरन् भूमाववरोहन् ।

दिनकरेति । दिनकरकुलस्य सूर्य्यवंशस्य चन्द्र ! चन्द्रवदाह्लादक ! चन्द्रकेतो ! सरभसं सवेगं एहि ममान्तिकमागच्छ, दृढं निर्भरं परिष्वजस्व आलिङ्ग मामिति शेषः ननु किमर्थमालिङ्गनमित्याह तुहिनेति । तुहिनशकलानीव हिमखण्डानीव शीतलानि तैस्तथोक्तैः तव अङ्गैः वक्षःप्रभृतिभिरवयवैः मम चित्तदाहोऽपि सीताशोक-तदपत्याभाव-जनितो मनस्तापोऽपि शमं नाशं उपयातु प्राप्नोतु । भार्य्यायाः पुत्रप्रयोजनकतया "सर्वेषामेकजातानामेकश्चेत् पुत्रवान् भवेत् । सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवी"दिति स्मरणात् भ्रातुः पुत्रस्य पुत्रस्थानीयत्वात् तदुपपत्त्या सीताशोकतदपत्याभावजनितो मनस्तापो नश्यत्येवेति भावः ।

अत्र न केवलं गात्रदाहः अपितु मनस्तापः शममुपयातु इति अर्थान्तरापतनादर्थापत्तिरलङ्कारः लुप्तोपमाद्वयं, चन्द्रचन्द्रेति व्यञ्जनानामनेकधा सकृत्साम्यात् छेकानुप्रासश्च, इत्येतेषां मिथोनैरपेक्ष्यात् संसृष्टिः ।

"रभसो वेगहर्षयो"रिति विश्वः ।

पुष्पिताग्रावृत्तं ॥ ८ ॥

(प) चन्द्रेति । अभिवादये भवन्तमिति शेषः ।

---

(१) क्वचिदयं पाठो नास्ति ।

राम:। उत्थाप्य (१) सस्नेहास्रं परिष्वज्य। अपि नाम कुशलं तव दिव्यास्त्रधरदेहस्य ?। (फ)

चन्द्र। कुशलमत्यद्भुतक्रियस्य प्रियदर्शनस्य लवस्य लाभाभ्युदयेन, (२) तद्विज्ञापयामि, मामिव विशेषेण वा मत्त:, शिवेन(३)चक्षुषा पश्यत्वमुं महावीरप्रकाण्डं तात:। (ब)

राम:। लवं निरूप्य। दिष्ट्या अतिगम्भीरमधुरकल्याणाकृतिरयं (४) वयस्यो वत्सस्य। (भ)

---

(फ) राम इति। उत्थाप्य प्रणतं चन्द्रकेतुमुत्तोल्य। दिव्यास्त्रधर: उत्कृष्टायुधग्राही देहो यस्य तस्य तव अपि नाम कुशलं किमु मङ्गलं। अथवा तव दिव्यास्त्रधरो यो देहस्तस्य उत्कृष्टायुधशालिनो गात्रस्येत्यर्थ: कुशलं विपक्षनिक्षिप्तास्त्रप्रहारेण क्षतच्छेदादिकं न जातं किमु इत्यर्थ:। दिव्यास्त्रशालिनो देहक्षतासम्भवसम्भावनैव अधिकेति द्योतनार्थं दिव्यास्त्रधरपदमुपात्तं।

(ब) चन्द्रेति। अत्यद्भुता अतीवविस्मयावहा, क्रिया युद्धकार्य्यं यस्य तस्य प्रियं प्रीतिकरं दर्शनं अवलोकनं यस्य तस्य स्वभावसौम्यमूर्त्तेरित्यर्थ: लवस्य लाभ: प्राप्तिरेव अभ्युदय: समृद्धि: तेन कुशलं ईदृशो जनो येन मित्ररूपेण प्राप्त: तदेव कुशलमिति भाव:। तत्तस्मात् मम प्रियवयस्यत्वादित्यर्थ:। मत्त: मत् पञ्चम्यास्तस्, विशेषेण आधिक्यवता शिवेन शुभानुध्यानप्रातिविस्फारितेनेत्यर्थ:। महावीरप्रकाण्डं प्रशस्तं प्रधानशूरं अमुं सम्मुखस्थं बालकं। तात: पितृपर्य्यायो भवान्। ममेयं प्रार्थनेति भाव:।

"अस्त्री प्रकाण्डो विटपे तरुस्कन्धप्रशस्तयो"रिति रभस:।

महावीरश्चासौ प्रकाण्डश्चेति स: "प्रशंसावचनैश्च रूढैरित्यादिना नित्यसमास:।" वाक्यन्तु अर्थप्रदर्शनार्थमुक्तं।

(भ) राम इति। निरूप्य विशेषेणावलोक्य। अतिगम्भीरा अतीवधीरत्व-

(१) उत्थाय्येति पाठान्तरं। (२) लवस्य अभ्युदयेनेति पाठान्तरं। (३) मामिव अविशेषेण मत्त: शिवतरेण इति पाठभेद:। (४) अतिकल्याणाकृतिरयमेतावानेव पाठ: क्वापि।

त्रातुं लोकानिव परिणतः कायवानस्त्रवेदः,
क्षात्रो धर्म्मः श्रित इव तनुं ब्रह्मकोषस्य(१) गुप्त्यै ।
सामर्थ्यानामिव समुदयः, सञ्चयो वा गुणाना-
माविर्भूय स्थित इव जगत्पुण्यनिर्म्माणराशिः ॥ ८ ॥

शालिनो अप्रधृष्य इत्यर्थः, मधुरः प्रियदर्शनः, कल्याणी मङ्गलमूलकारणभूता आकृतिः मूर्त्तिर्यस्य सः । वत्सस्य तव चन्द्रकेतोः ।

अतिगम्भीरत्वादिकं समर्थयति त्रातु मित्यादि । लोकान् भुवनानि त्रातुं भयेभ्यो रक्षितुं कायवान् मूर्त्तिमान् परिणतः शरीरधारी सन्नित्यर्थः अस्त्रवेदः धनुर्वेद इव, तथा ब्रह्म वेद एव कोषः पिण्डीकृतहेमरौप्यं तस्य गुप्तौ रक्षणाय तनुं श्रितः शरीरमाश्रितः क्षात्रोधर्म्मः क्षत्रियजातेः पराक्रम इव, तथा सामर्थ्यानां विक्रमाणां समुदयो राशिरिव एतैरप्रधृष्यत्वमुक्तं ; तथा गुणानां सौन्दर्य्यविनयादीनां सञ्चयो वा पुञ्ज इव एतेन मधुरत्वमुक्तं । तथा जगतम् पुण्यनिर्म्माणानि अनुष्ठितानि पुण्यानि क्वदभिहितो भावो द्रव्यवत् प्रकाशते इति न्यायात्, तेषां राशिः पुञ्जः आविर्भूय मूर्त्तिमत्तया प्रकाश्य स्थित इव एतेन कल्याणत्वं प्रतिपादितं । अतएव असाधारणोऽयं बालक इति भावः ।

अत्र शब्दात्मको वेदोगुणः, अपरे च क्षात्रधर्म्मादयो गुणपदार्था इति तेषाञ्च परात्मना सम्भावनाकरणात् पञ्चानां भावाभिमानीनां वाच्यानां गुणोत्प्रेक्षाणां परस्परनैरपेक्ष्यात् संसृष्टिः, तथा ब्रह्मकोषस्येत्यत्र साधकबाधकप्रमाणाभावादुपमारूपकयोः सन्देहसङ्करः। तथा "वा स्याद्विकल्पोपमयोरेवार्थेच समुच्चये" इति विश्वप्रकाशेन वाशब्दस्य उपमाया एव वाचकत्वनिर्देशात् उत्प्रेक्षाद्योतकत्वाभावेन 'सञ्चयो वा गुणाना'मित्यत्र "एष मूर्त्तोयथाधर्म्मः क्षितिपो रक्षति क्षिति"मिति साहित्यदर्पणोदाहृतवत् अवाचकत्वदोषः, स च 'सद्गुणा-नामिवौघ"इति पाठेन समाधेयः ।

"स्यात् कोषश्च हिरण्यञ्च हेमरूप्ये कृताकृते"इत्यमरः ।

मन्दाक्रान्ता वृत्तं ॥ ८ ॥

(१) ब्रह्मघोषस्येति भिन्नः पाठः ।

लवः। अहो! पुण्यानुभावदर्शनोऽयं महापुरुषः। (म)

आश्वासस्नेहभक्तीना मेकमालम्बनं महत्। (१)

प्रकृष्टस्येव धर्मस्य प्रसादो मूर्त्तिसञ्चरः ॥ १० ॥

आश्चर्य्यम्। (य)

विरोधो विश्रान्तः, प्रसरति रसो निर्वृतिघन-

स्तदौद्धत्यं क्वापि व्रजति, विनयः प्रह्वयति माम्।

---

(म) लव इति। अहो आश्चर्य्यं। पुण्यं पवित्रं अनुभावदर्शने प्रभावरूपे यस्य सः। "अनुभावः प्रभावेऽपो"त्यमरः।

आश्वासेति। आश्वासो दुःखार्त्तानामभयदानपूर्वकसान्त्वजननं स्नेहः प्रणयः भक्तिः पूज्ये ष्वनुरागः तासां एकं मुख्यं महत् विशालं आलम्बनं आश्रयः। अस्मिन् महापुरुषे दृष्टे सति आश्वासः स्नेहः भक्तिश्च जायत इत्यर्थः। तथा प्रकृष्टस्य उत्कर्षं गतस्य अतिप्रचुरस्येत्यर्थः धर्म्मस्य पुण्यस्य मूर्त्या सञ्चरत इति मूर्त्तिसञ्चरः देहधारी प्रसादः निर्म्मलता इव। प्रचुरतरधर्म्माचरणेन जायमानश्चित्तप्रसादो मूर्त्तिमाश्रित्य आविर्भूत इवेत्यर्थः।

अत्र आश्वासादीनामनेकेषामेकरामगतत्वात् पर्य्यायनामाऽलङ्कारः भावाभिमानिनी वाच्या गुणोत्प्रेचा च अनयोः संसृष्टिः ॥ १० ॥

(य) आश्चर्य्यमिति। वच्यमाणं सर्वं विस्मयकरमित्यर्थः।

तदेवाह विरोध इति। अस्मिन् महापुरुषे दृष्टे अवलोकिते सति विरोधो विवादः झटिति तत्चणात् विश्रान्तः विरतः, निर्वृत्या आनन्देन, घनो निविड़ः रसो रागः प्रसरति उच्छलति, अमुं प्रति आनन्देन सान्द्रीकृतोऽनुरागो वर्द्धत इत्यर्थः, तत् युद्धकालीनं औद्धत्यं दर्पजनितचाञ्चल्यं क्वापि व्रजति कुत्रापि विलीयते अतीतसामीप्ये वर्त्तमाना, तथा विनयः अस्मादात्मनो न्यूनत्वज्ञानं मां प्रह्वयति अवनमयति भक्तिनम्रं करोतीत्यर्थः। तथा किमिव अनिर्वचनीय इत्यर्थः परवान् पराधीनः अस्मि, अमुं दृष्ट्वा नात्मनः प्रभवामीत्यर्थः। यदि वा अथवा हि यस्मात् तीर्थानां वाराणस्यादीनामिव

---

(१) एकमायतनं महदिति पाठान्तरं।

झटित्यस्मिन् दृष्टे किमिव (१) परवानस्मि, यदि वा
महार्घस्तीर्थानामिव हि महतां कोऽप्यतिशयः ॥११॥

रामः। तत् किमेकपद एव दुःखविश्रामं ददाति उपस्नेहयति च कुतोऽपि निमित्तादन्तरात्मानं, अथवा स्नेहस्य निमित्त-सव्यपेक्ष इति विप्रतिषिद्धमेतत्। (२)

व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते।

---

महतां महापुरुषाणां कोऽपि अनिर्वचनीय इत्यर्थः महार्घः महामूल्यः दुर्लभः अतिशयः प्रभावातिरेको वर्त्तत इति शेषः। तेनैव विरोधविश्रामादयो जाता इति भावः।

अत्र रामस्य प्रभावातिशयप्रतिपादनकार्य्यं प्रति विरोधविश्रामादीनामनेकेषां कारणानां निर्द्देशात् समुच्चयोऽलङ्कारः उपमा च, ताभ्यां सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः सङ्कीर्य्यते।

"प्रह्वो नम्र" इत्यादिकोषः। "गुणे रागे द्रवे रसः"। "परतन्त्रः पराधीनः परवान् नाथवानपि।" "मूल्ये पूजाविधावर्घः।" इति चामरः।

शिखरिणी वृत्तं॥ ११॥

(२) राम इति। तत्किमित्येकमव्ययं प्रश्नार्थे। एकपद एव रेकस्मिन् काले दुःखनाशः, सद्व्यवहारादिना बहुपरकाले च स्नेह इत्येवशब्दार्थः। दुःखविश्रामं सीताशोकतदपत्याभावजनितदुःखस्य नाशं। तथा कुतोऽपि निर्वक्तु-मशक्यादित्यर्थः निमित्तात् कारणात् अन्तरात्मानं अन्तःकरणं उपस्नेहयति स्नेहार्द्रं करोति एष बालक इति शेषः। ननु सति कारणे तत् निर्वक्तुं योग्यमेव स्यादिति कथं तत् निर्वक्तुमशक्यमित्याह अथवेति। चकारः समुच्चये अन्यपदार्थवत् स्नेहस्येत्यर्थः, व्यपेक्षया सह वर्त्तत इति सव्यपेक्षः निमित्तम मत्रो अ
मपेक्षते इति यत् लौकिकवाक्यं एतत् तत्

---

(१) किमपीति पाठान्तरं।

विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥ १२ ॥

लवः। चन्द्रकेतो! क एते?। (ल)

चन्द्र। प्रियवयस्य! ननु तातपादा एते। (व)(१)

लव। ममापि तर्हि धर्मतस्तथैव, यतः प्रियवयस्य इत्यात्थ, किन्तु चत्वारः खलु भवतामेव व्यपदेशभागिनस्तत्रभवन्तो रामायणकथापुरुषाः. तद्विशेषं ब्रूहि। (श)

---

वहिर्वर्त्तिनियतं कारणं विनाऽपि स्नेहो जायते, वर्त्तमानमेव तन्निदर्शनमिति भावः।

"तत्त्वर्णैकपदे तुल्ये सदाः सपदि च स्मृते" इति हलायुधः।

उक्तार्थमेव दृढ़ीकरोति व्यतिषजतीति। आन्तरः अन्तःकरणवर्त्ती कोऽपि निर्देष्टुमशक्यः हेतुः कारणं पदार्थान् वस्तूनि व्यतिषजति परस्परं सम्मेलयति, किन्तु प्रीतयः स्नेहाः वहिरुपाधीन् वाह्यविशेषणानि पुत्रत्वभ्रातृत्वादिसर्वविदितकारणानीत्यर्थः न खलु संश्रयन्ते न खलु उत्पादकत्वेनापेक्षन्ते। हि यस्मात् पुण्डरीकं पद्मं कर्त्तृ, पतङ्गस्य सूर्य्यस्य उदये सति विकसति स्फुटति, किञ्चेति चार्थः चन्द्रकान्तः स्वनामप्रसिद्धो मणिविशेषः हिमरश्मौ चन्द्रे उद्गते उदिते सति द्रवति निष्यन्दते जलजलं क्षरतीत्यर्थः। अतः कमपि सम्पर्कं विनैव अस्मिन् बालके मम स्नेहो भवितुमर्हत्येवेति भावः।

अत्र विशेषद्वयेन सामान्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः।

"उपाधिर्धर्म्मचिन्तायां कुटुम्बव्यापृते छले। विशेषणे पुंसो"ति मेदिनी।

मालिनी वृत्तं ॥ १२ ॥

(ल) लव इति। क एत इति गुरुत्वाद्बहुवचनं।

(व) चन्द्रेति। भक्तातिशयप्रकाशरूपप्रयोजनद्योतनाय पादशब्दस्य ताते लक्षणा, अतीवभक्तिभाजनरूपाः ताता इत्यर्थः।

(श) लव इति। तर्हि तव तातपादत्वे सति, ममापि न केवलं तव इत्यपेरर्थः,

चन्द्र। ननु ज्येष्ठतातपादा इत्यवेहि। (ष)

लवः। सोल्लासम्। कथं रघुनाथ एव, (१) दिष्ट्या सुप्रभातमद्य, यदयं देवो दृष्टः। सविनयकौतुकं निर्वर्ण्य। तात! प्राचेतसान्तेवासी लवोऽभिवादयते। (स)

रामः। सस्नेहम्। वत्स! एह्येहि। सस्नेहं परिष्वज्य। अयि वत्स! कृतं कृतमतिविनयेन, अनेकवारमपरिश्लथं परिष्वजस्व। (ह)

धर्मतः आचारात् लौकिकव्यवहारादित्यर्थः, तथैव तातपादा एव नत्वन्यविधसम्पर्कशालिन इत्येवशब्दार्थः। लोके हि वयस्यः स्वसमानपर्य्याय इति मन्यते ततश्च वयस्यस्य यो यादृशः सम्बन्धी स्वस्यापि स तादृश एव सम्बन्धीति व्यवहारोऽस्तीति भावः। आख्य ब्रवीषि। एवं व्यपदेशं तातपादेति संज्ञां भजन्त इति एवं व्यपदेशभागिनः तातपादपदवाच्या इत्यर्थः। रामायणमेव कथा उपाख्यानं तस्याः पुरुषाः पात्राणि प्राधान्येन वर्णनीया इत्यर्थः। तत्तस्मात् सामान्यत उक्त्या विशेषनिर्णयासम्भवादित्यर्थः, विशेषं तेषां चतुर्णां मध्ये कतमोऽयमिति इतरव्यावर्त्तकं नाम ब्रूहीत्यर्थः। "धर्माः पुण्य यम न्याय स्वभावाचारसोमपा"इत्यमरः।

(ष) चन्द्रेति। नन्विति सम्बोधने। अवेहि जानीहि।

(स) लव इति। सोल्लासं सानन्दं। कथमिति हर्षद्योतकमव्ययं शब्दकल्पद्रुमे द्रष्टव्यं। रघुनाथो राम एव, न खलु ततो न्यूनमहिम्नां भरतादीनां कश्चिदित्येवशब्दार्थः। अद्य सुप्रभातं शोभनं दिनमुखं। "सद्वृत्तसन्निकर्षो हि क्षणार्द्धमपि शस्यते"इति स्मरणादिति भावः। प्राचेतसान्तेवासी वाल्मीकिशिष्यः। अभिवादयते भवन्तं प्रणमति।

(ह) राम इति। एह्येहीति कृतं कृतमिति च आदरे द्विरुक्तिः। अयीति

(१) कथं रघुनाथः। कथं रघुनाथ एवः। इति पाठान्तरद्वयम्।

परिणतकठोरपुष्करगर्भच्छद . नमसृणसुकुमारः।
नन्दयति चन्द्रचन्दननिष्यन्दजड़स्तव स्पर्शः॥ १३॥

लवः। स्वगतम्। ईदृशो मां (१) प्रत्यमीषामकारणस्नेहः, मया पुनरेभ्य एवाभिद्रुग्धमज्ञेन, यदायुधपरिग्रहं यावदध्यारूढो दुर्य्योगः। प्रकाशम् मृष्यन्त्विदानीं लवस्य वालिशतां तातपादाः।(क)

स्नेहसम्बोधने। क्तमिति करणार्थमव्ययं। अतिविनयेन भूतलपतनरूपेण नितान्तविनयप्रकाशिन, वचसैव तव विनयप्राचुर्य्यप्रकाशादिति भावः। अपरिश्लथं अशिथिलं, गाढ़मित्यर्थः, परिष्वजस्व आलिङ्ग।

कथमयं परिष्वङ्गानुरोध इत्याह परिणतेति। परिणतं परिपक्कं सावशेषवृद्धिप्राप्तमित्यर्थः अतएव कठोरं पूर्णावयवं यत् पुष्करं पद्मं तस्य गर्भच्छदः अभ्यन्तरदलं तद्वत् पीनमसृणः अत्यन्तस्निग्धः, सुकुमारः कोमलश्चेति स तथोक्तः, तथा चन्द्रश्च चन्दननिष्यन्दश्च चन्द्रचन्दननिष्यन्दौ ताविव जड़ः शीतलः, चन्द्रवत् चन्दननिर्यासवच्च शीतल इत्यर्थः तव स्पर्शः त्वगिन्द्रियग्राह्यो गुणविशेषः मां नन्दयति सुखीकरोति। अतएवानेकवारपरिष्वङ्गानुरोध इति भावः।

अत्र लुप्तोपमाद्वयस्य मिथोनैरपेक्ष्यात् संसृष्टिः पराङ्गं वृत्त्यनुप्रासश्च।

"सुषीमः शिशिरो जड़"इत्यमरः। मसृणत्वे पुष्करगर्भच्छदसम्पूर्णसाम्यप्रयोजनप्रतिपादनाय पीनशब्दस्य अत्यन्तार्थे लक्षणा।

आर्य्या जातिः॥ १३॥

(क) लव इति। अमीषां रघुनाथादीनां। ईदृशः सातिशय इत्यर्थः। अकारणस्नेहः कञ्चिदपि सम्यक्रूपं हेतुं विनापि वात्सल्यमित्यर्थः। पुनः किन्तु अज्ञेन आत्मीयानात्मीयभेदज्ञानशून्येन मया। स्वयोगव्यवस्थापने एवशब्दः। अभिद्रुग्धं द्रोहः कृतः हिंसा समाचरितेत्यर्थः। यत् यस्माद्धेतोः दुर्योगो दुरभिसन्धिः हिंसेच्छया कलुषिता चित्तवृत्तिरित्यर्थः आयुधपरिग्रहं यावत् हननाय अस्त्रधारणपर्य्यन्तं

(१) अस्मादृशानिति पाठान्तरं।

रामः । किमपराद्धं वत्सेन ?। (ख)

चन्द्रः। अश्वानुयात्रिकेभ्यस्तातप्रतापाविष्करणमुपश्रुत्य वीरायितमनेन। (ग)

रामः। नन्वयमलङ्कारः क्षत्रस्य। (घ)

न तेजस्तेजस्वी प्रसृतमपरेषां प्रसहते (१)
स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः।

अध्यारूढ़ः समारूढ़ः अतीवक्षं हकारिणं चन्द्रकेतुमेव हन्तुं शस्त्रं धृतमित्यर्थः। वालिशतां मूर्खताप्रयुक्तसंग्रामकरणापराधं मृष्यन्तु स्वगुणेन क्षमन्ताम्। ईदृशदुष्कार्यकरणेन नितान्तलज्जितोऽस्मीति भावः।

अभिद्रुग्धमिति भावे क्तः। एभ्य इति तादर्थ्ये विवक्षया चतुर्थी।

(ख) राम इति। वत्सेन स्नेहभाजनेन त्वया, किमपराद्धं कोऽपराधः कृतः, यमहं मृष्यामीति भावः।

(ग) लज्जया वक्तुमसमर्थं लवमवलोक्य चन्द्रकेतुरेव रामोक्तेरुत्तरं ददाति चन्द्रेति। अश्वानुयात्रिकेभ्यः अस्माकमश्वमेधीयाश्वानुचरेभ्यः, तातस्य भवतः प्रतापाविष्करणं प्रभावप्रकाशं उपश्रुत्य निशम्य अनेन कुमारेण वीरायितं वीरवदाचरितं युद्धं कृतमित्यर्थः। कुमारोऽयं इममेवापराधं मन्यते इति भावः।

(घ) राम इति। अवधारणे ननुशब्दः। अयं वीरसमाचारः क्षत्रस्य क्षत्रियस्य अलङ्कारो ननु, भूषणमेवेत्यर्थः न तु दूषणमित्यभिप्रायः। मौर्वीमेखलादिदर्शनात् रामेण लवस्य क्षत्रियत्वमनुमितमिति बोध्यं।

वीरवदाचरणस्य भूषणत्वं प्रतिपादयति न तेज इति। तेजस्वी महाप्रभावशाली जनः, प्रसृतं विस्तीर्णं अपरेषां आत्मभिन्नानां तेजः प्रभावं न प्रसहते न क्षमते सः असहनमित्यर्थः प्रशंस्यमानलिङ्गत्वात् पुंस्त्वं, प्रकृतिनियतत्वात् स्वभावनियन्त्रितत्वात् अकृतकः अकृत्रिमः स्वोभावः स्वकीयो धर्मः। तथाच यदि देवो दिनकरः सूर्यः मयूखैः करैः अश्रान्तं

(१) विषहते इति पाठान्तरं।

मयूखैरश्रान्तं तपति यदि देवो दिनकरः
किमाग्नेयग्रावा निकृत इव तेजांसि वमति ॥ १४ ॥

सततं तपति सन्तप्तं करोति आग्नेयग्रावाणमित्यर्थात् तदा आग्नेयग्रावा अग्न्युत्पादकप्रस्तरविशेषः सूर्य्यकान्तमणिरिति यावत् निकृत इव अवमानित इव सन् किं कथं केन हेतुनेत्यर्थः तेजांसि अग्नीन् वमति उद्गिरति निःसारयतीत्यर्थः, रविकरसन्ताप एव तत्र हेतुरित्यर्थः। अत एवास्मत्प्रतापप्रकाशे लवस्य वीरत्वप्रकाशो वीरस्वभावसिद्धत्वात् महापुरुषकारप्रकाशकत्वाच्च अलङ्कार एव, सुतरामत्र अपराधाभावात् क्षमायाः प्रयोजनन्तु नास्त्येव प्रत्युत लवं प्रति सुमहान् सन्तोष एव मे जात इति भावः।

अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः निकृत इवेत्युत्प्रेक्षया सङ्कीर्णः तथा 'स तस्य स्वो भाव' इत्येतावन्मात्रोक्त्यैव निर्वाहे 'प्रकृतिनियतत्वादकृतक' इत्यंशोपादानात् "सहसा विदधीत न क्रिया" मित्यादिसाहित्यदर्पणोदाहृतवत् अर्थगतपुनरुक्ततादोषः, स च "जयति तदिदं सर्वविदित" मितिवत् केनापि पाठेन समाधेयः। अल्पमात्ररविकरस्पर्शे सूर्य्यकान्तमणेरग्न्युत्पत्तेरभावात् बहुतररविकरस्पर्श एव तस्मादग्नेरुत्पत्तिर्भवतीति प्रदर्शनार्थं अश्रान्तपदमुपात्तमिति भाव्यं। किन्त्वत्र वमतेर्गौणप्रयोगात् न ग्राम्यत्वदोषः अपितु गुण एव, तथा च काव्यादर्शे "निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम्। अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते।"

"पाषाणप्रस्तरग्रावोपलाश्मानः।" इत्यमरः।

एतदनुरूपो भावो यथा शाकुन्तले—

"शमप्रधानेषु तपोवनेषु गूढ़ं हि दाहात्मकमस्ति तेजः।
स्पर्शानुकूला इव सूर्य्यकान्ता स्तदन्यतेजोऽभिभवाद्वहन्ति॥"

भारवावपि "किमपेक्ष्य फलं पयोधरान् ध्वनतः प्रार्थयते मृगाधिपः।
प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यथा॥"

शिखरिणी वृत्तं॥ १४॥

चन्द्र। तात! अमर्षोऽप्यस्य शोभते वीरस्य, पश्यतु हि तातः, प्रियवयस्यविनियुक्त जृम्भकास्त्रनिष्कम्पस्तम्भितानि सर्वतः सैन्यानि। (ङ)

रामः। विलोक्य। वत्स! लव! संह्रियन्तामस्त्राणि, त्वमपि चन्द्रकेतो! निर्व्यापारविलक्षाणि (१) सान्त्वय बलानि। (च)

लवः। यथाज्ञापयति तातः। इति प्रणिधानं नाटयति। (छ)

चन्द्रः। यथादिष्टम्। इति निष्क्रान्तः (ज)

(ङ) चन्द्रेति। अमर्षः असहिष्णुता। शोभते युज्यते इत्यर्थः। न केवलं अस्य विनयसौजन्यादिगुणः शोभते अपितु असहिष्णोऽपि अमर्षः शोभते इत्यपेरर्थः। हि यस्मात्। प्रियवयस्येन लवेन विनियुक्तं निक्षिप्तं यत् जृम्भकास्त्रं तेन निष्कम्पं निःस्पन्दं यथा स्यात्तथा स्तम्भितानि जड़ीकृतानि सर्वतः सर्वासु दिक्षु सैन्यानि बलानि अतएव ईदृशमहाप्रभावशालिनो महावीरस्य परप्रभावासहिष्णुता यत् शोभते तत्र न कोऽपि प्रतिवादोऽस्तीति भावः।

(च) राम इति। विलोक्य सैन्यानीति शेषः। संह्रियन्तां उपसंह्रियन्तां संव्रियन्तामितियावत्। निर्व्यापारेण समरकार्य्ये सामर्थ्याभावा दुद्यमाभावेन विलक्षाणि 'एकेनैवामुना शिशुना सर्वे वयं योद्धारः स्पन्दनहीनीकृता' इत्येवमाश्चर्य्यान्वितानि बलानि अस्मत्सैन्यानि सान्त्वय प्रियवाक्येन समाश्वासय।

"विलक्षो विस्मयान्विते" इत्यमरः।

(छ) लव इति। यथा ज्ञापयति, तथा करवाणीति वाक्यशेषः अस्त्राण्युपसंहरामीत्यर्थः। प्रणिधानं अस्त्रोपसंहारार्थं समाधिं ध्यानमितियावत् नाटयति नयनमुद्रणादिना अभिनयति।

(ज) चन्द्रेति। यथादिष्टं भवतेति शेषः, तथा करवाणीत्यर्थः।

---

(१) विलक्षितानीति पाठान्तरं।

लवः । प्रशान्तमस्त्रम् (झ)

रामः । वत्स ! सरहस्यप्रयोगसंहरणान्यस्त्राण्याम्नायवन्ति ।(ञ)

ब्रह्मादयो ब्रह्महिताय तप्त्वा
परःसहस्राः शरदस्तपांसि ।
एतान्यपश्यन् गुरवः पुराणाः
स्वान्येव तेजांसि तपोमयानि ॥ १५ ॥

अथैतन्मन्त्रपारायणोपनिषदं भगवान् कृशाश्वः परःसहस्रपरिवत्सरान्तेवासिने कौशिकाय विश्वामित्राय प्रोवाच, स तु भगवान् मह्यमित्येष गुरुपूर्वानुक्रमः । (१) कुमारस्य तु कुतः (२) सम्प्रदाय इति पृच्छामि । (ट)

---

(झ) लव इति। अस्त्रं मदीयजृम्भकास्त्रं प्रशान्तं उपरतं निष्क्रियं जातमित्यर्थः ।

(ञ) राम इति। रहस्यं गोपनीयं मन्त्र इत्यर्थः। रहस्येन सह वर्त्तमाने सरहस्ये प्रयोगसंहरणे निक्षेपोपसंहारौ येषां तानि तथोक्तानि अस्त्राणि एतानि जृम्भकास्त्राणि आम्नायवन्ति गुरूपदेशसापेक्षाणीत्यर्थः ।

"रहस्यं । गोपनीयं ।" "आम्नायः ।···गुरुपरम्परोपदेश" इति च शब्दकल्पद्रुमः ।

आम्नायो विद्यते येषां तानि आम्नायवन्ति, तद्वत्त्वञ्च जन्यतासम्बन्धेनेति बोध्यं ।

गुरूपदेशसापेक्षत्वं प्रतिपादयति ब्रह्मादय इत्यादिना गद्यांशान्तेन। प्रथमाङ्के चित्रदर्शनवेलायामपि रामेणायं श्लोकः पठितः। तत्रैव व्याख्यातः ॥ १५ ॥

(ट) अथैतदिति। अथ ब्रह्मादीनां दर्शनानन्तरं कृशाश्व सदाख्यः कश्चित् मुनिः एतेषां जृम्भकास्त्राणां मन्त्राणां पारस्य शेषपर्य्यन्तस्य अयनं गमनं ज्ञानमिति यावत्,

---

(१) इत्येष क्रमः, इत्येष पूर्वानुक्रम इति पाठभेदौ। (२) क इति क्वापि पाठः ।

लवः। स्वतःप्रकाशान्यावयोरस्त्राणि। (ठ)

रामः। विचिन्त्य। किं न सम्भाव्यते (१) प्रकृष्टपुण्यपरिपाकोपादानः कोऽपि महिमा स्यात्, द्विवचनन्तु कथम्। (ड)

लवः। भ्रातरावावां यमजौ। (ढ)

रामः। स तर्हि द्वितीयः कः (२)। (ण)

---

तत् मन्त्रपारायणमेव उपनिषत् गूढ़विद्या तां। सहस्रात् परे इति परःसहस्राः सहस्राधिका इत्यर्थः ये परिवत्सराः संवत्सराः तान् व्याप्य अन्ते समीपे वसतीति तस्मै सहस्रवत्सरान् यावत् छात्रभावापन्नायेत्यर्थः कौशिकाय कुशिकवंश्याय। स तु भगवान् विश्वामित्रः मह्यं प्रोवाच इत्यन्वयः, गुरूणां उपदेष्टॄणां पूर्वः पूर्वकालवर्त्ती, अनुक्रमः उपदेशपरम्परा कुमारस्य तव कुतः कस्मात् आद्यगुरोः सकाशात् सम्प्रदायः उपदेशपरम्परा।

(ठ) लव इति। स्वतः स्वयमेव उपदेशं विनैवेत्यर्थः प्रकाश आविर्भावो येषां तानि। अस्त्राणि जृम्भकास्त्राणि।

(ड) राम इति। विचिन्त्य किञ्चिद्विचिन्त्येत्यर्थः। किं न सम्भाव्यते जगतीति शेषः। प्रकृष्टं अत्यन्तं यत् पुण्यं पूर्वजन्मार्जितो धर्म्मः, तस्य परिपाकः फलजननोन्मुखीभावः स एव उपादानं कारणं यस्य स तथोक्तः, महिमा माहात्म्यं स्यात् भवेत्, पूर्वजन्मार्जितात् कस्माच्चित् महापुण्यात् स्वयमेव जृम्भकास्त्राणामाविर्भावो भवेदित्यर्थः। तु किन्तु द्विवचनं आवयोरिति षष्ठीद्विवचनप्रयोगः कथं, एकस्मिन्नर्थे एकवचनस्यैवानुशासनादिति भावः।

(ढ) लव इति। यमजौ युगपदेकगर्भजातौ। अतएव द्वयोरर्थयोर्द्विवचनप्रयोगः कृत इति भावः।

(ण) राम इति। तर्हि युवयोर्द्वित्वे सतीत्यर्थः।

(१) क्वापि पाठोऽयं नास्ति। (२) क्व इति पाठान्तरं।

नेपथ्ये भाण्डायन! भाण्डायन! (त)
आयुष्मतः किल लवस्य नरेन्द्रसैन्यै-
रायोधनं ननु किमात्थ ःखे! तथेति।
अद्यास्तमेतु भुवनेष्वधिराजशब्दः
क्षत्रस्य शस्त्रशिखिनः शममद्य यान्तु॥ १६॥

रामः। अथ कोऽयमिन्द्रमणिमेचकच्छवि-
र्ध्वनिनैव दत्तपुलकं करोति माम्।

(त) नेपथ्य इति। भाण्डायनो नाम कश्चित् मुनिशिष्यः, सतु चतुर्थाङ्कविष्कम्भके परिचितः।

आयुष्मत इति। आयुष्मतः दीर्घायुःशालिनः लवस्य नरेन्द्रसैन्यैः राज्ञो रामस्य सैनिकैः सह आयोधनं युद्धं, प्रवृत्तमिति शेषः इति ननुकिं आत्थ ब्रवीषि? इति कुशस्य जिज्ञासा। सखे! बन्धो! कुश! तथा सत्यं, नरेन्द्रसैन्यैः सह लवस्य युद्धं प्रवृत्तमेवेत्यर्थः। इति भाण्डायनस्योत्तरं। तदा अद्य भुवनेषु अधिराजशब्दः प्रधानो राजा इति शब्दः अस्तं लोपं एतु प्राप्नोतु। अद्य मदीयसमरकर्म्मणा न केवलं अधिराजस्य रामस्य विनाशोभवेत्, अपि तु अधिराजशब्दस्यापि चिराय विलोपो भवेदिति भावः। तथा अद्य क्षत्रस्य क्षत्रियजातेः शस्त्राण्येव शिखिनो वह्नय स्ते शस्त्रशिखिनः शमं निर्वाणं यान्तु प्राप्नुवन्तु। अद्य क्षत्रियजातेरपि शस्त्राग्निनिर्वाणं मया विधेयमिति भावः। इति भाण्डायनमुखात् युद्धवार्त्तां सत्यामवगम्य कुशस्य सदर्पोक्तिरियम्।

अत्र शस्त्रशिखिन इति निरङ्गं केवलरूपकमलङ्कारः।

किलेति लोकवार्त्तायां, ननुकिमित्येकमव्ययं प्रश्ने।

वसन्ततिलका वृत्तं॥ १६॥

अथेति। अथेति प्रश्नबोधकं। इन्द्रमणि र्नीलकान्तमणिः तद्वेव मेचका श्यामा छविः कान्ति र्यस्य, स इन्द्रमणिमेचकच्छविः, कोऽयं बालकः ध्वनिना कण्ठ-स्वरेणैव नतु सन्निधानेन आलिङ्गनादिना इत्येवशब्दार्थः, दत्ताः पुलका रोमाञ्चा यस्य

नवनीलनीरधर धीरगर्जित-
क्षणबद्धकुड्मलकदम्बडम्बरम् ॥ १७ ॥

लवः। अयमसौ मम ज्यायानार्य्यः कुशो नाम भरताश्रमात् प्रतिनिवृत्तः। (थ)

रामः। सकौतुकं। वत्स इत एवाह्वयैनमप्यायुष्मन्तम्। (द)

लवः। एवम्। इति परिक्रामति। (ध)

ततः प्रविशति कुशः।

कुशः। साद्भुतहर्षधैर्य्यं धनुरास्फालयन्। (न)

---

तं दत्तपुलकं, आनन्दातिरेकादुत्पादितरोमाञ्चमित्यर्थः मां, नवस्य नवीनस्य मद्यः सम्भृतजलस्येत्यर्थः अतएव नीलस्य श्यामलस्य नीरधरस्य मेघस्य धीरगर्जितक्षणे गम्भीरगर्जनसमये वर्षाकाले इत्यर्थः बद्धानि धृतानि कुड्मलानि मुकुलानि येन तस्य कदम्बस्य नीपवृक्षस्य डम्बरः तुलना यत्र तं तथोक्तं करोति। मेघेन सह कुशस्य, तद्गर्जितेन सह कुशकण्ठस्वरस्य, कदम्बवृक्षेण सह रामस्य, कदम्बमुकुलैः सह च रामरोमाञ्चानां सादृश्यं बोध्यम्।

अत्र द्वयोरुपमयोर्मिथोनैरपेक्ष्यात् संसृष्टिः। परार्द्धे वृत्त्यनुप्रासच्छेकानुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करश्च।

"कालश्यामलमेचकाः।" "निर्व्यापारस्थितौ कालविशेषात् सवयोः क्षण" इति चामरः।

मञ्जुभाषिणी वृत्तम् ॥ १७ ॥

(थ) लव इति। अत्र तच्छब्दसमानार्थकोऽदःशब्दः, तेन अयं दृश्यमानः, असौ सः, पूर्वमावेदित इत्यर्थः। ज्यायान् ज्येष्ठः अग्रज इति यावत्।

(द) राम इति। इत एव अस्मिन्नेव स्थाने, ममान्तिक एवेत्यर्थः।

(ध) लव इति। एवमित्यङ्गीकारार्थमव्ययं। परिक्रामति कुशमाह्वातुं पादक्षेपं करोति।

(न) कुश इति। एकाकिना बालकेन लवेन निहतासंख्यसैन्यदर्शनादद्भुतं

दत्तेन्द्राभयदक्षिणैर्भगवतो वैवस्वतादामनो-
र्दृप्तानां दहनाय (१) दीपितनिजक्षत्रप्रतापाग्निभिः ।
आदित्यैर्यदि विग्रहो नृपतिभिर्धन्यं ममैतत्ततो
दीप्रास्त्र(२) स्फुरदुग्रदीधितिशिखानीराजितज्यं धनुः ॥१८॥

---

मयापीदानीं योद्धव्यमिति युद्धसम्भवात् वीरस्वभावसुलभो हर्षः, स्वाभाविकञ्च धैर्य्यं अव्यग्रता, तैः सहेति तथोक्तं । आस्फालयन् आन्दोलनपूर्वकमाकर्षन् ।

दत्तेन्द्राभयेति । भगवतो महाप्रभावान्वितात्, विवस्वतः सूर्यस्यापत्यमिति वैवस्वतः तस्मात् मनोः आ, वैवस्वतमनोरधिकारसमयमारभ्येत्यर्थः दत्ता इन्द्राय अभयदक्षिणा असुरसंहारेण अभयदानं यैः तथोक्तैः, तथा दृप्तानां दर्पोद्धतानां जनानां दहनाय प्लोषाय अवनतभावमनापन्नानां उन्मूलनायेत्यर्थः दीपितः सन्धुक्षितः निजः स्वकीयः क्षत्र-प्रतापः क्षत्रियप्रभाव एव अग्निर्यैः तथोक्तैः, आदित्यैः सूर्यवंशीयैः नृपतिभिः राजभिः सह इत्यर्थः यदि विग्रहो युद्धं भवेदित्यर्थः ततस्तर्हि, दीप्राणां उज्ज्वलानां अस्त्राणामायु-धानां स्फुरन्तीभिः समन्तात् प्रसरन्तीभिः, उग्राभिर्भयानकाभिः, दीधितिशिखाभिः रश्मिज्वालाभिः नीराजिता निर्मञ्छिता कृतारात्रिका इति यावत् ज्या गुणो यस्य तत्, दीपमालया नीराजनसमये यथा तदीयरश्मिज्वालाभिः देवताप्रतिमा समुज्ज्वला स्यात् तथा निशितानामस्त्राणां रश्मिज्वालाभिः यस्य धनुषो मौर्वी समुज्ज्वला, तदित्यर्थः, एतत् मम धनुः कार्म्मुकं धन्यं श्लाघार्हं । महाधनुरिदं महावीरेषु व्यापारितं सत् चरि-तार्थमेव भवेदिति महानेष ममानन्द इतिभावः ।

अत्र क्षत्रप्रतापाग्निभिरित्यत्र निरङ्गं केवलरूपकमलङ्कारः । तथा दीधितिशिखायां दीपमालात्वारोपः ज्यायां देवताप्रतिमात्वारोपश्च नीराजितपदप्रकाश्यो व्यङ्ग्य इति वस्तुना रूपकालङ्कारध्वनिः

नीराजनं आरात्रिकमिति साम्प्रदायिकाः ।

शार्दूलविक्रीडितं वृत्तं ॥ १८ ॥

(१) दुष्टानां दमनायेति पाठान्तरं । (२) दिव्यास्त्रेति पाठभेदः ।

विकटं परिक्रामति । (प)

रामः । कोऽप्यस्मिन् क्षत्रियपोतके पौरुषातिरेकः । (फ)

दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम् ।
कौमारकेऽपि गिरिवद्गुरुतां दधानो
वीरो रसः किमयमेत्युत दर्प एव ॥ १९ ॥

लवः । उपसृत्य । जयत्यार्य्यः ।

(प) विकटमिति । विकटं दर्पोद्धतं यथा स्यात्तथा परिक्रामति पादक्षेपं करोति ।

(फ) राम इति । अस्मिन् दृश्यमाने नवागते, क्षत्रियपोतके क्षत्रियबालके कोऽपि अनिर्वचनीयः, पौरुषस्य पुरुषकारस्य महावीरत्वस्येत्यर्थः अतिरेकः अतिशयः विद्यत इति शेषः ।

पौरुषातिरेकं प्रतिपादयति दृष्टिरिति । दृष्टिः अस्य कुमारस्य दृष्टिपातः तृणीकृतः तृणवदतितुच्छतया गणितः जगत्त्रयस्य त्रिभुवनस्य सत्त्वानां प्राणिनां सारो बलं यया सा तथोक्ता, असौ बालकः दृष्टिपातभङ्ग्या सर्वेषामेव त्रिभुवनवासिनां प्राणिनां बलं तुच्छमिव मन्यते इति प्रतीयत इत्यर्थः । धीरा सधैर्य्या अव्याकुलेति यावत् उद्धता सावष्टम्भा सदर्पेत्यर्थः गतिः अस्य पादक्षेपः धरित्रीं भूमिं नमयतीव प्रह्वीकरोतीव । कौमारके शैशवेऽपि वयसि गिरिवत् पर्वत इव गुरुतां गौरवं भारवत्त्वमित्यर्थः दधानो वहन् अयं बालकः किं किमुत वीरो रसः शरीरधारी वीररसस्य स्थायीभाव उत्साह इत्यर्थः, उत अथवा दर्प एव अन्तःसारजातो मूर्त्तिमानहङ्कार एव एति आगच्छति । असाधारणोऽयं बालक इति भावः ।

अत्र प्रथमे चरणे भावाभिमानिनी प्रतीयमाना क्रियोत्प्रेक्षा, द्वितीये भावाभिमानिनी वाच्या क्रियोत्प्रेक्षा, द्वितीयपादे तु उत्साहदर्पौ गुणपदार्थाविति गिरिवदित्युपमासङ्कीर्णं भावाभिमानि वाच्यं गुणोत्प्रेक्षाद्वयं, एतेषां मिथोनैरपेक्ष्यात् संसृष्टिः । किन्त्वत्र

कुशः। नन्वायुष्मन्! किमियं वार्त्ता युद्धं युद्धमिति (व) (१)

लवः। यत्किञ्चिदेतत्, दृप्तभाव (२) मुत्सृज्यार्य्योऽस्मिन् विनयेन वर्त्तताम्। (भ)

कुशः। किमर्थम्?।

लवः। एष (३) देवो रघुपतिस्तिष्ठति, स च स्निह्यत्यावयोरुत्कण्ठते च युष्मत्सन्निकर्षस्य। (म)

वीरौरस इत्युक्तावपि न रसस्य स्वशब्दोक्तिदोषः वक्तृजनेन रसतया आस्वाद्यमानस्यैव स्ववाचकपदेनोपस्थितौ तद्दोषाङ्गीकारात् अत्र तु रामेण वीरसत्वेनोत्प्रेक्षितो न तु समास्वादितः अन्यथा शृङ्गारादिशब्दोच्चारणमात्रेणैव तद्दोषाङ्गीकारे "शृङ्गार वीरकरुणाद्भुत हास्यभयानकाः" इत्यमरपरिगणनायामपि तद्दोषप्रसङ्ग इति विचक्षणैर्विवेचनीयं।

"सत्त्वं द्रव्ये स्वभावे च व्यवसायप्रभावयोः। पिशाचादौ गुणे प्राणवज्जन्तुषु चेतसी"त्यजयः। "सारो बले स्थिरांशे च न्याय्ये क्लीवे वरे त्रिष्वि"त्यमरः।

ऐतीति आङ्पूर्वस्य इण्धातोः प्रयोगः।

वसन्ततिलका वृत्तं॥ १९॥

(व) कुश इति। नन्विति सम्बोधने। युद्धं युद्धमितीयं वार्त्ता किंश्रुतेति शेषः। वीप्सायां युद्धं युद्धमिति द्विरुक्तिः।

(भ) लव इति। एतद् युद्धं यत्किञ्चित् अतीवतुच्छमित्यर्थः, न खल्वत्र तव किमप्युद्वेगकारणमस्तीति भावः। साहङ्कारोक्तिरियं। दृप्तभावं दर्पोद्धतभावं, उत्सृज्य विहाय, आर्य्योभवान् अस्मिन् महापुरुषे अस्मान्तिके इत्यर्थः विनयेन नम्रभावेन वर्त्ततां आचरतु।

(म) लव इति। रघुपतिः स्वयं रामचन्द्रः। स्निह्यति वात्सल्यं करोति।

---

(१) क्वापि युद्धं युद्धमिति द्विरुक्तिर्नास्ति। (२) उद्धृत्तभावमिति पाठान्तरम्। (३) अत्रेति क्वचित् पाठः।

कुशः । सतर्कम् । स रामायणकथानायको ब्रह्मकोषस्य (१) गोपायिता ? । (य)

लवः । अथकिम् ?

कुशः । आशंसनीयपुण्यदर्शनः स महात्मा, किन्तु कथमुपगन्तव्य इति न सम्प्रधारयामि । (र)

लवः । यथा गुरुस्तथोपचारेण । (ल)

कुशः । अयि ! (२) कथं नामैतत् ? । (व)

लवः । अत्युदात्तः सुजनश्चन्द्रकेतुरौर्म्मिलेयः प्रियवयस्य इति

---

युष्मत्सन्निकर्षस्य तव सन्निधानस्य उत्कण्ठते औत्सुक्येन स्मरति तव साक्षात्कारमिच्छतीत्यर्थः । युष्मत्सन्निकर्षस्येति "स्मृत्यर्थकर्म्मणो"ति षष्ठी ।

(य) कुश इति । तर्केण विवेचनेन सहेति सतर्कं विविच्येत्यर्थः । स प्रसिद्धः, रामायणमिव कथा उपाख्यानं तस्या नायकः प्रधानपुरुषः उपजीव्य इत्यर्थः, ब्रह्मकोषस्य वेदरूपधनस्य गोपायिता रक्षिता वेदविरोधिराक्षसादिविनाशेन वैदिकाचाराणां पालयितेत्यर्थः । काकुस्वरेण प्रश्नो व्यज्यते ।

(र) कुश इति । आशंसनीयं वाञ्छनीयं पुण्यं पावनं दर्शनं साक्षात्कारो यस्य सः । कथं केन प्रकारेण कीदृशेन भावेनेत्यर्थः उपगन्तव्यः उपस्थातव्यः साक्षात्कर्त्तव्य इत्यर्थः । सम्प्रधारयामि निश्चिनोमि ।

(ल) लव इति । गुरुर्गुरुजनो यथा, तथोपचारेण तादृशव्यवहारेण विनयनम्रभावेनेत्यर्थः । स उपगन्तव्य इत्यन्वयः ।

(व) कुश इति । अयीति सस्नेहसम्बोधने । एतत् गुरुवदुपचरणं कथं नाम, निःसम्पर्के रामे गुरुवत् व्यवहारः केन हेतुनेत्यर्थः ।

(श) लव इति । अत्युदात्तः अतीवोदारचेताः, सुजनः सौजन्यपूर्णः सत्स्वभा-

(१) ब्रह्मकोषस्येति पाठान्तरं । (२) अपीति क्वापि पाठः ।

सख्येन मामुपतिष्ठते, तेन तत्सम्बन्धेन च धर्म्मतात एवायं राजर्षिरिति। (अ)

कुशः। सम्प्रति करणीयो (१) राजन्येऽपि प्रश्रयः। (ब)

लवः। पश्यत्वेनमाकारानुभावगाम्भीर्य्यसम्भाव्यमानविविध-लोकोत्तरचरितातिशयमार्य्यो महापुरुषम्। (स)

कुशः। निर्वर्ण्य। अहो प्रासादिकं (१) रूप मनुभावश्च पावनः।

वान्वित इत्यर्थः और्म्मिलेयः ऊर्म्मिलायाः पुत्रः। प्रियवयस्य इति इत्यभिधायेत्यर्थः सख्येन सौहार्द्देन मां उपतिष्ठते मैत्रीकरणेन मामाराध्नोति सन्तोषयतीत्यर्थः "पथ्या-राधनयोश्चे"त्यात्मनेपदं। केन हेतुना, चकार एवार्थे, तत्सम्बन्धेन चन्द्रकेतुना सह सखित्वसम्पर्केणैवेत्यर्थः, अयं राजर्षिः रामः धर्म्मेण तातः सुहृदाचारानुसारेण पितृस्थानीय इत्यर्थः, इति हेतोः, गुरुवत् व्यवहारः कर्त्तव्य इति भावः।

(ब) कुश इति। सम्प्रति धर्म्मतातत्वसम्पर्के सतीत्यर्थः राजन्येऽपि क्षत्रिये रामेऽपि प्रश्रयः विनयः करणीयः कर्त्तुं योग्यः, अन्यथा उपनयनप्रकारादिदर्शनादवगतस्य क्षत्रियस्य मे अन्यक्षत्रियं प्रति विनयाचरणेन कापुरुषता स्यादिति भावः।

"विनयः प्रश्रयः समा" वित्यमरः।

(स) लव इति। आकारेण आकृत्या, अनुभावेन प्रभावेन देहसम्र तेजोविशेषेण इत्यर्थः गाम्भीर्य्येन दुरवगाहस्वभावेन च सम्भाव्यमानः अनुमीयमानः विविधानां नाना-प्रकाराणां लोकोत्तराणां अलौकिकानां चरितानां कृतकार्य्याणां अतिशयो बाहुल्यं यत्र स तथोक्तः आकृतिप्रभृतिदर्शनेनैव "यत्राकृति स्तत्र गुणा वसन्ती"ति न्यायात् अलौकिक-चरित इत्यनुमातुं शक्य इत्यर्थः। तमेनं महापुरुषं पश्यतु।

अहो इति। अहो आश्चर्य्यं, रूपं आकृतिः प्रासादिकं प्रसादशान्तं सर्व्वान् प्रत्येव अनुग्रहसत्त्वात् सौम्या मूर्त्तिरित्यर्थः, तथा अनुभावः देहप्रभावः पावनः पवित्रः,

(१) अवचनीय इति पाठभेदः। (२) प्रामोदिकमिति पाठान्तरं।

स्थाने रामायणकवि र्देवीं वाचं व्यवीवृतत् (१) ॥२०॥

उपसृत्य। तात! प्राचेतसान्तेवासो कुशाऽभिवादयते। (क)

रामः। एह्येहि आयुष्मन्! । (ख) (२)

अमृताध्मातजीमूतस्निग्धसंहननस्य ते ।
परिष्वङ्गाय(३)वात्सल्यादयमुत्कण्ठते जनः ॥२१॥

---

अतएव रामायणस्य कविः वर्णयिता प्रणेता भगवान् वाल्मीकिरित्यर्थः स्थाने युक्तमेव वाचं देवीं वाग्देवीं सरस्वतीं व्यवीवृतत् रामायणरूपेण विवर्त्तितवान् रामायणकाव्यरूपेण परिणमितवानित्यर्थः। ईदृशस्य महापुरुषस्य चरितमवलम्ब्य प्रणीतं रामायणमहाकाव्यं सर्वथैव सङ्गतमभूदित्यर्थः।

अत्र रामस्य महापुरुषत्वप्रतिपादनकार्य्यं प्रति रूपलक्षणे एकस्मिन् कारणे सत्यपि पावनानुभवरूपकारणान्तरोपन्यासात् समुच्चयोऽलङ्कारः, परार्द्धं प्रति पूर्वार्द्धं हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गञ्च अनयोरङ्गाङ्गिभावेन सङ्करः।

व्यवीवृतदिति विवर्त्तमानं प्रायुङ्क्तेति हेतिनि सति अद्यतन्यादिः ॥ २० ॥

(क) उपसृत्येति। उपसृत्य राममुपसमीपमुपेत्य। प्राचेतसान्तेवासी वाल्मीकिशिष्यः।

अमृतेति। अयं जनः अहमित्यर्थः वात्सल्यात् स्नेहात् अमृतेन जलेन आध्मातः स्फीतः पूर्ण इति यावत् यो जीमूतो मेघः स इव स्निग्धं अरूक्षं संहननं शरीरं यस्य तस्य तथोक्तस्य ते तव परिष्वङ्गाय आलिङ्गनाय उत्कण्ठते उत्सुको जायते।

अत्र समासगतोपमाऽलङ्कारः।

"अमृतं।···जलं"। "जीमूतः। मेघः।" "संहननं। शरीरं" इति च शब्दकल्पद्रुमः।

परिष्वङ्गायेति "तुमर्थाच्च भाववाचिनः" इति चतुर्थी ॥ २१ ॥

---

(१) व्यवीवृणदिति क्वापि पाठः। (२) क्वचित् एह्येहीति द्विरुक्तिर्नास्ति।
(३) परिष्वङ्गस्येति पाठभेदः।

परिष्वज्य स्वगतम् मपत्यमयं दारकः। (ग)

अङ्गादङ्गात् स्नुत इव* निजो देहजः स्नेहसारः (१)
प्रादुर्भूय स्थित इव वहिश्चेतनाधातुरेव।
सान्द्रानन्दक्षुभितहृदय(२)प्रस्रवेनेव सृष्टो
गात्र (३)स्रेषे यदमृतरसस्रोतसा सिञ्चतीव ॥२२॥

(ग) परिष्वज्येति। तत्किमित्यक्रमव्ययं प्रश्ने। अयं दारको बालकः तत्किं अपत्यं मम सन्तानः किमित्यर्थः।

नन्वयं दारकः अपत्यमिति कुतः संशय्यते इत्याह अङ्गा दति। यत् यस्मात् अङ्गात् अङ्गात् सर्वेभ्यो देहावयवेभ्य इत्यर्थः स्नुतो विगलितः, निजः स्वकीयः देहजः शरीर-जातः स्नेहस्य सार उत्कृष्टांश इव, तथा चेतनाधातुरेव चैतन्यपदार्थ एव प्रादुर्भूय मूर्त्तिमान् सन् आविर्भूय वहिः देहात् वहिर्देशे स्थित इव, तथा सान्द्रेण निविड़ेन आनन्देन आमोदेन क्षुभितं आलोड़ितं यद्हृदयं तस्य प्रस्रवेन रसेन निर्यासेनेति यावत् सृष्टो निर्म्मित इव, तथा स्रेषे आलिङ्गने आलिङ्गनसमय इत्यर्थः अमृतरसस्य पीयूषद्रवस्य स्रोतसा प्रवाहेन धारयेत्यर्थः गात्रं मम देहं सिञ्चतीव स्नपयतीव अयं दारक इति शेषः। पुत्रमन्तरेण ईदृशमभूतपूर्वमानन्दं न कोपि जनयति नवा प्रियतमो भवेत् अथ च सीतायाः प्रसवात् पूर्वमेवाभावात् कथं वा तत्सम्भव इति संशय एव जायत इति भावः।

अत्र प्रथमपादे भावाभिमानिनी गुणोत्प्रेक्षा, अपरेषु तु त्रिषु पादेषु भावाभिमानिन्यो वाच्या स्त्रिस्रः क्रियोत्प्रेक्षाः, आसां परस्परनिरपेक्षस्थितेः संसृष्टिः।

अत्र धातुशब्दः पदार्थार्थे कविना निवक्षितः। अङ्गादङ्गादिति वीप्सायां द्विरुक्तिः।

मन्दाक्रान्ता वृत्तम् ॥ २२ ॥

* च्युत इव, स्नुत इव, स्रुत इव इति पाठान्तराणि। (१) मूर्त्तजो देहसार इति पाठान्तरं। (२) प्रस्रवेनेति विभिन्नः पाठः। (३) गात्रस्रेषे गात्राश्लेषे इति भिन्नौ पाठौ।

लवः । तात ! ललाटन्तपो घर्म्मदीधितिः, तदत्र सालच्छाये मुहूर्त्तमासनपरिग्रहं करोतु तातः (घ)

रामः । यदभिरुचितं वत्साय । (ङ)

सर्वे परिक्रम्योपविशन्ति ।

रामः । स्वगतं । अहोप्रश्रययोगेऽपि गतिस्थित्यासनादयः ।
साम्राज्यशंसिनो भावाः कुशस्य च लवस्य च॥२३॥

---

(घ) लव इति । घर्म्मा उष्णा दीधितयः किरणा यस्य सः घर्म्मदीधितिः सूर्यः ललाटन्तपतीति ललाटन्तपः भालदेशसन्तापजनकः नितान्ततापजनक इत्यर्थः, तत्तस्मात् अनावृतस्थाने अवस्थानेन सर्वेषामेव रविकिरणतापानुभवात्, सालानां छायेति सालच्छायं तस्मिन् सर्जतरुतले, इत्यर्थः, मुहूर्त्तं कियन्तं कालमित्यर्थः आसनपरिग्रहं उपवेशनस्वीकारं ।

ललाटन्तप इति "ललाटे तपः"इति खश् । सालच्छाय इति "विभाषा सेनासुराच्छायाशालानिशाना"मिति पक्षे क्लीवत्वं ।

(ङ) राम इति । वत्साय यदभिरुचितं प्रीतिकरमित्यर्थः, तदेव करोमीति भावः । वत्सायेति "रुच्यर्थानां प्रीयमाणः"इति सम्प्रदाने चतुर्थी ।

अहो इति । अहो आश्चर्य्यं, प्रश्रयस्य विनयस्य योगे सत्यपि कुशस्य च लवस्य च उभयोरेवेत्यर्थः गतिः पादविक्षेपः स्थितिः दण्डायमानता, आसनं उपवेशनं तान्यादि येषां ते गतिस्थित्यासनादयो भावाः शारीरचेष्टाः साम्राज्यं भाविं सार्वभौमत्वं शंसन्ति सूचयन्तीति साम्राज्यशंसिनः इति मे मतिर्भवतीत्यर्थः ।

विनयप्रकाशकाले कृत्रिमशारीरचेष्टाप्रदर्शनसम्भावना नास्तीति प्रतिपादनाय प्रश्रययोगेऽपीत्युक्तं ।

"विनयः प्रश्रयः समा"वित्यमरः ।

साम्राज्यप्रातिचिह्नमुक्तं सामुद्रके—

"प्रसन्नमूर्त्तिः समुदारचेताः वंशाभिमानः सुखभाग्विलासः ।
अनीतिभीरुर्गुरुसाधुनम्रः साम्राज्यलक्ष्मीं लभते मनुष्यः ।"

वपुरविहितसिद्धा एव लक्ष्मीविलासाः
प्रतिजनकमनीयं कान्तिमत् केतयन्ति।
अमलिनमिव रत्नं रश्मयस्ते मनोज्ञा
विकसितमिव पद्मं(१)विन्दवो माकरन्दाः ॥२४॥

भूयिष्ठाञ्च रघुकुलकुमारच्छायामनयोः पश्यामि। (च)

"अकर्म्मकठिनौ हस्तौ पादावध्वनिकोमलौ।
यस्य पाणितलौ रक्तौ तस्य राज्यं विनिर्द्दिशेत्।" इत्यादि ॥२३॥

वपुरिति। ते प्रसिद्धाः, मनोज्ञाः सुन्दराः, रश्मयः किरणाः, अमलिनं निर्म्मलं स्वभावोज्ज्वलमित्यर्थः रत्नं मणिमिव, तथा मकरन्दानां पुष्परसानामिमे इति माकरन्दाः विन्दवः मधुकणाः विकसितं प्रस्फुटितं पद्ममिव अविहिताः अपि अरचिता अपि सिद्धाः स्वभावनिष्पन्ना एव नतु कृत्रिमा इत्यर्थः प्रतिजनकमनीयं सर्वलोकाह्लादकरं दर्शनमात्रेणैव सर्वेषां प्रीतिकरमित्यर्थः कान्तिमत् शोभान्वितं लावण्यमयमित्यर्थः वपुः शरीरं केतयन्ति आश्रयन्ति अनयोरिति शेषः। ईदृशशोभाविकासो भाविमहासौभाग्य-सूचक एवेति भावः।

अत्रोपमाद्वयस्य परस्परनैरपेक्षात् संसृष्टिरलङ्कारः।

जनो जन इति प्रतिजनं वीप्सार्थे अव्ययीभावः, प्रतिजनेन कमनीयमिति प्रतिजन-कमनीयं। केतयन्तीति चौरादिकामन्त्रणार्थककेतधातोः प्रयोगः धातूनामनेकार्थत्वा-दाश्रयार्थलाभः।

मालिनी वृत्तं ॥ २४ ॥

(च) भूयिष्ठामिति। अपि चेति चार्थः। अनयोः कुशलवयोः देहे इत्यर्थः भूयिष्ठां प्रभूतां रघुकुलकुमारस्य रघुवंशोत्पन्नबालकस्य छायां प्रतिबिम्बं सादृश्यमिति यावत्।

"छायासूर्य्यप्रिया कान्तिः प्रतिबिम्बमनातप"इत्यमरः।

---

(१) विकसितमरविन्दमिति पाठान्तरं।

कठोरपारावतकण्ठमेचकं
वपुर्वृषस्कन्धमवन्धुरांसकम्। (१)
प्रसन्नसिंहस्तिमितञ्च वोक्षितं
ध्वनिश्च माङ्गल्यमृदङ्गमांसलः॥ २५॥

सूक्ष्मं निरूप्य। अये! न केवलमस्मदङ्गसंवादिन्याकृतिः।(क)(२)

---

ननु कासौ रघुकुलकुमारच्छाया इत्याह कठोरेति। वपुः शरीरं कठोरस्य सावशेषां वृद्धिं प्राप्तस्य प्रौढ़वयस इत्यर्थः पारावतस्य गृहकपोतस्य कण्ठो गल इव मेचकं श्यामवर्णं, तथा वृषस्य स्कन्ध इव स्कन्धो यस्मिन् तत् उन्नतस्कन्धमित्यर्थः तथा अवन्धुरौ अनुन्नतावनतौ समानाविति यावत् अंसौ बाहुमूलद्वयं यस्मिन् तत्। तथा अनयोः वीक्षितञ्च दृष्टिपातश्च, प्रसन्नः क्रोधादिना अक्षुब्धः यः सिंहः सिंहस्य दृष्टिरित्यर्थः तद्वत् स्तिमितं स्थिरं, तथा ध्वनिः कण्ठस्वरश्च माङ्गल्यः शुभसूचकः मृदङ्गः मृदङ्गध्वनिरित्यर्थः स इव मांसलः स्थूलः गम्भीर इत्यर्थः। रघुकुले समुत्पन्नाः कुमाराः खल्वेवं प्राया भवन्ति, अनयोरपि तथैव दर्शनात् अपत्यतासंशयः पूर्वतोऽपि घनीभूत इति भावः।

अत्र चतसृणां समासगतलुप्तोपमानां मिथोनिरपेक्षत्वात् संसृष्टिः चतुर्थपादे एकमकारस्यासकृत्साम्यात् छेकानुप्रासश्च। रूढ़िप्रयोजनयोरभावेऽपि सिंहमृदङ्गशब्दयोस्तद्दृष्टितद्ध्वन्यर्थे लाक्षणिकत्वात् नेयार्थत्वदोषद्वयं, तच्च "प्रसन्नसिंहेक्षणनिर्यक्षितं ध्वनिश्च माङ्गल्यमृदङ्गनादव"दिति पाठेन निरसनीयं।

"वन्धुरसुन्नतानत"मित्यमरः। "मांसलः।...स्थूलः।" इति शब्दकल्पद्रुमः।

वंशस्थविलं वृत्तं "वदन्ति वंशस्थविलं जतौ जरौ" इति लक्षणात्॥ २५॥

(क) सूक्ष्ममिति। सूक्ष्मं निरूप्य विशेषणावलोक्य इत्यर्थः। अस्मदङ्गैः मदीयदेहावयवैः सह संवदति सम्मीलति सदृशी भवतीत्यङ्गसंवादिनी। अनयोराकृतिः न केवलं ममाकृतिसदृशीत्यर्थः।

(१) अवन्धुरांशकमिति पाठान्तरं। (२) अस्मत्संवादिनी इति पाठभेदः।

अपि जनकसुताया स्तच्च तच्चानुरूपं(१)
स्फुटमिह शिशुयुग्मे नैपुणोन्नेयमस्ति ।
ननु पुनरिव तन्मे गोचरीभूतमक्ष्णो-
रभिनवशतपत्रश्रीमदास्यं प्रियायाः ॥ २६ ॥

मुक्ताच्छदन्तच्छविसुन्दरीयं(२) सैवोष्ठमुद्रा स च कर्णपाशः ।
नेत्रे पुनर्यद्यपि रक्तनीले तथापि सौभाग्यगुणः स एव ॥ २७ ॥

किन्तर्हि इत्याह अपीति। इह शिशुयुग्मे अस्मिन् कुशलवात्मके बालकद्वये नैपुणेन निपुणभावेन उन्नेयं वितर्क्यं नत्वापातत एव बोध्यमित्यर्थः जनकसुतायाः सीताया अपि तच्च तच्च मया प्रत्यक्षीकृतं सर्वमित्यर्थः अनुरूपं रूपस्य योग्यत्वं सादृश्यमित्यर्थः स्फुटं स्पष्ट मस्ति वर्त्तते। यदि कश्चिदनयोः आकृतिं निपुणभावेनावलोकयेत् तदा निश्चितमेव सुस्पष्टं सीतासादृश्यं पश्येदिति सरलार्थः। नन्वित्यवधारणे। अभिनवं नूतनं नवविकसितमित्यर्थः यत् शतपत्रं पद्मं तदिव श्रीमत् कान्तिमत् प्रियायाः सीताया स्तदास्यं वदनं मे मम अक्ष्णोः चक्षुषोः पुनर्भूयोऽपि गोचरीभूतमिव विषयीभूतमिव अनयोराननमवलोक्य सीताया आननं स्मरामीत्यर्थः।

अत्र समासगतोपमासङ्कीर्णा वाच्या भावाभिमानिनी क्रियोत्प्रेक्षाऽलङ्कारः, तेन च स्मरणालङ्कारो व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः।

"प्रश्नावधारणानुज्ञाऽनुनयामन्त्रणे ननु"। इत्यमरः।

मालिनी वृत्तं ॥ २६ ॥

सीताया आकृतिसादृश्यं भूयोऽपि प्रतिपादयति मुक्तेति। मुक्ता मौक्तिकानीव अच्छा निर्म्मला ये दन्ता दशनाः तेषां छविभिः कान्तिभिः सुन्दरी मनोहरा इयं दृश्यमाना ओष्ठमुद्रा रदनच्छदयोर्मुद्रणं सैव सीतासम्बन्धिन्येव सीतासदृश्येव, तथा कर्णपाशः प्रशस्तं कर्णद्वयं स च स एव सीतासम्बन्धी एव सीतायाः कर्णयुगलसमान एव। पुनः किन्तु यद्यपि नेत्रे अनयोर्नयनद्वयं रक्तनीले प्रान्तभागे लोहितवर्ण

(१) आनुरूप्यमिति पाठभेदः। (२) छविदन्तुरेयं, छविसुन्दरेयं इति पाठान्तरद्वयं।

तदेतत् प्राचेतसाध्युषितमरण्यं यत्र किल देवी परित्यक्ता, इयञ्चानयोराकृतिर्वयोऽनुभावश्च(१) यदपि स्वतःप्रकाशान्यस्ता-णोति, तत्र विमृशामि, अपि खलु तच्चित्रदर्शनप्रासङ्गिकमस्ता-

ताराभागे च नीले, सीतायास्तु केवलनीलकुवलयसमाने नयने, तेन कुमारयोर्नयनयोः लौहित्यांशे सीताया नयनाभ्यां सह यद्यपि वैषम्यमित्यर्थः तथापि सौभाग्यगुणः सौन्दर्य्यरूपो गुणः स एव सीतासम्बन्धेव सीतासदृश एवेत्यर्थः, रक्तांशे वैषम्ये सत्यपि सौन्दर्य्यांशे सीतानयनाभ्यां सह अनयोर्नयनयोः सासादृश्यमस्त्येवेत्यर्थः । एतेन ततोऽपि अपत्यसंशयो दृढीभूत इति भावः ।

अत्र अन्यस्य ओष्ठमुद्रादयः कथमन्यस्य भवेयुरिति वस्तुसम्बन्धासम्भवेन सीताया ओष्ठ-मुद्रादय इव ओष्ठमुद्रादय इति सादृश्यबोधनपर्य्यवसानात् निदर्शनाऽलङ्कारः स च प्रथम-चरणस्थसमासगतोपमया सङ्कीर्य्यते, प्रथमचरणे छेकानुप्रासस्येति समुदाये संसृष्टिः ।

"पाशः, केशादिपूर्वः स्यात् तत्सङ्घे, कर्णपूर्वकः ।
सुकर्णे च खसामर्थ्यात् खगपच्यादिवन्धने ।" इति मेदिनी ।

इन्द्रवज्रोपेन्द्रवज्रयोर्मेलनादुपजाति वृत्तं ॥ २७ ॥

( ज ) इत्थमाकृतिसादृश्यरूपं संशयकारणमभिधाय कुशलवयोरपत्यतानिश्चये हेतूनुपन्यस्यति तदेतदिति । यत्र अरण्ये देवी सीता । एतदग्रतो दृश्यमानं तत् प्राचेतसेन वाल्मीकिना अध्युषितं अधिष्ठितं अरण्यं तपोवनं । अतएवात्र अनयोः कुमारयोः प्रसवः सीतायाः सम्भवत्येवेति भावः । अपिचेति चकारस्यार्थः । आकृतिः सीताया मम च शरीरानुरूपं शरीरमित्यर्थः, वयः द्वादशवत्सरपरिमितमिव वयो लक्ष्यत इत्यर्थः, अनुभावः प्रभावः तेजस्वितेति यावत् । अत्रायं भावः, मातापित्रोराकारानुरूप एवाकारः प्रायेणापत्यानां जायत इति सीतायाः मम च आकारसौसादृश्यादिमौ बालकौ अपत्यतया निर्द्धारयितुं शक्यौ, तथा सीतापरित्यागात् परं द्वादशवत्सरा अतीताः अनयोरपि द्वादशवत्सरपरिमितमिव वयो लक्ष्यते अतएव वयोवैषम्येणापि अपत्यत्वस्य

(१) आकृतिर्वत्सयोः आकृतिर्वपुश्चेति पाठभेदौ ।

**भ्यनुज्ञानमुद्भूतं (१) स्यात्, नह्यसाम्प्रदायिकान्यस्त्राणीति पूर्वेषामप्यनुशुश्रुम ; अयञ्च संप्लवमानमात्मानं सुखातिशयो हृदयस्य मे विस्रम्भयते, भूयिष्ठञ्च मया द्विधा प्रतिपन्नो देव्या गर्भभार आसीत्। (ज)**

असम्भवता न शङ्कनीया, तथा रघुवंशोचितस्वाभाविकप्रभावदर्शनात् भरतादिपुत्राणामत्रावस्थानासम्भवात् तेषां पूर्वपरिचितत्वाच्च बालकाविमौ ममैव पुत्राविति निश्चयो युज्यत एवेति। ननु तव पुत्रत्वे कथमनयोर्जृम्भकास्त्रलाभ इत्याह यदपीति। "स्वतः प्रकाशान्यावयोरस्त्राणी"ति लवेन यदप्युक्तमित्यर्थः,तत्र अस्त्रलाभविषये, विमृशामि विवेचनं करोमि। अपिशब्दः सम्भावनायां, खलुशब्दो वाक्यालङ्कारे। तत्पूर्वक्तं, चित्रदर्शनप्रासङ्गिकं प्रथमाङ्के चित्रदर्शनप्रसङ्गेनोत्थितं अस्त्राभ्यनुज्ञानं 'सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्ती"ति मम वाक्येन सीतापुत्रस्य जृम्भकास्त्रलाभानुमतिः, उद्भूतं उत्पन्नं, चित्रदर्शनवेलायां 'सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्ती'ति मया यदुक्तं तदनुसारादेव अनयो र्जृम्भकास्त्रलाभोऽभवदिति सम्भावयामीति सरलार्थः। ननु अन्यस्मादपि अनयो र्जृम्भकास्त्रलाभः कथं न सम्भाव्यत इत्याह नहीति। सम्प्रदायो गुरूपदेशपरम्परा अस्त्राणि जृम्भकास्त्राणि असाम्प्रदायिकाणि गुरूपदेशपरम्परामन्तरेणापि लब्धानि, ब्रह्मकृशाश्वकौशिकेतचितयात्मकगुरुशृङ्खलाया उपदेशं विनापि केनचित् प्राप्तानीत्यर्थः इति पूर्वेषां प्राचीनानामपि समीपे नहि अनुशुश्रुम न खलु श्रुतवन्तः वयमिति शेषः। ततश्च तस्मादस्मदभ्यनुज्ञानादेवानयोर्जृम्भकास्त्रलाभ इति मन्तव्यं, तेन च मम पुत्रावेव इमौ बालकाविति निर्द्धारितं स्यादिति भावः। अपिचेति चार्थः। अयं अनुभूयमानः हृदयस्य सुखातिशयः अनयोर्दर्शनालिङ्गनादिजनितानन्दबाहुल्यं मे मम संप्लवमानं इमौ पुत्रौ नवेति संशयसागरे सन्तरन्तमित्यर्थः आत्मानं अन्तःकरणं विस्रम्भयते "सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तय"इति न्यायात् इमौ ममैव पुत्राविति

(१) अपि न खलु तच्चित्रदर्शनप्रस्तावे अस्त्राभ्यनुज्ञानमुद्भूतं स्यादिति पाठान्तरं।

सास्रम्। पुरारूढ़े स्नेहे परिचयविकासादुपचिते
रहो विस्रब्धाया अपि सहजलज्जाजड़दृशः ।
मयैवादौ ज्ञातः करतलपरामर्शकलया
द्विधा गर्भग्रन्थिस्तदनु दिवसैः कैरपि तया ॥ २८ ॥

रुदित्वा। तत्किमेतौ पृच्छामि केनाप्युपायेन। (भ)

---

विश्वासयतीत्यर्थः। "भ्रातरावावां यमजा"विति लवोक्तं युक्त्या समर्थयन्नपि तयोः पुत्रत्वं निश्चिनोति भूयिष्ठश्चेति। अपिश्चेति चार्थः। देव्याः सीतायाः, गर्भभारः अतीववृद्धिं प्राप्तत्वात् भारवान् गर्भः भूयिष्ठं प्रचुरं अनेकवारमित्यर्थः, द्विधा द्विप्रकाराभ्यां भागद्वयेन विभक्त इत्यर्थः, प्रतिपन्नः ज्ञातः।

ननु कथं त्वया स गर्भो द्विधा ज्ञात इत्याह पुरेति। पुरा पूर्वं परिणयकाले इत्यर्थः रूढ़े उत्पन्ने स्नेहे प्रेमणि परिचयविकासात् अमक्रदेकत्रावस्थानादिजनितपरस्पर-प्रियत्वप्रकारकविशेषज्ञानोदयात् उपचिते वृद्धिं प्राप्ते सति रहो निर्जनस्थाने विस्रब्धायाः इमं निभृतस्थाने प्रियतमकरस्पर्शं न कोऽपि अपरः पश्येदिति विश्वस्ताया अपि सहजा स्वाभाविकी या लज्जा तया जड़े दर्शनाचमे मुद्रितप्राये इत्यर्थः दृशौ चक्षुषी यस्याः सा तथोक्ता, तस्याः गर्भग्रन्थिः गर्भकोषबन्धनं मयैव ननु तया इत्येवशब्दार्थः करतलस्य यः परामर्शः संवाहनं तस्य या कला अल्पांशः तया पाणितलस्य ईषत्संवाहनेनेत्यर्थः अधिकसंवाहने लज्जाशीला सीता पाणिमुत्सारयतीति प्रतिपादनाय कलाशब्दप्रयोगः, आदौ सीतायाः प्राक् द्विधा विभक्त इत्यर्थः ज्ञातः एकवृन्तगतफलद्वयवत् एककोषगतं भ्रूणद्वयमनुभूतमित्यर्थः, तदनु ततःपरं कैरपि दिवसैः कतिपयदिनैः तया सीतया च ज्ञात इत्यन्वयः। अतएव इमौ कुमारौ ममैव पुत्राविति निश्चय एव ज्यायानिति भावः।

अत्र ज्ञात इत्येकया क्रियया, मया तयेत्युभयोः कर्त्तृत्वेनाभिसम्बन्धात् तुल्ययोगिताऽलङ्कारः।

दिवसैरिति तृतीयाऽपवर्गे।

शिखरिणी वृत्तं ॥ २८ ॥

(भ) रुदित्वेति। पुत्रत्वेनानुमीयमानयोरपि असाधारणगुणशालिनोः कुश-

लवः। तत्किमेतत्।

वाष्पवर्षेण नीतं वो जगन्मङ्गलमाननम्।
अवश्यायावसिक्तस्य पुण्डरीकस्य चारुताम्॥ २८॥

कुशः। अयि वत्स!

विना सीतादेव्या किमिव हि न दुःखं रघुपतेः
प्रियानाशे कृत्स्नं किल जगदरण्यं हि भवति। (१)

---

लवयोः पुत्रवद्व्यवहारानर्हत्वात् शोकक्षोभेण रामस्य रोदनं बोद्धव्यं। तत्किमित्येकमव्ययं प्रश्नार्थे। उपायेन वाक्यच्छलेन एतौ कुशलवौ। ननु वितर्कोऽयं।

वाष्पेति। जगन्मङ्गलं प्रसादसौम्यतया द्रष्टृणामानन्दजनकमित्यर्थः वो युष्माकं आननं वदनं वाष्पवर्षेण अश्रुवर्षणेन, अवश्यायेन हिमेन अवसिक्तस्य आर्द्रीकृतस्य पुण्डरीकस्य श्वेतपद्मस्य चारुतां सौन्दर्यं तत् किं नीतं कथं प्रापितं, कथं रुद्यत इत्यर्थः।

अत्र अन्यस्य चारुतां कथमन्यत्र नीयतः इति वस्तुसम्बन्धोऽसम्भवन् पुण्डरीकस्य चारुतामिवचारुतामिति विम्बप्रतिविम्बभावं बोधयतीति असम्भवद्वस्तुसम्बन्धा निदर्शनाऽलङ्कारः।

विरहेण पाण्डुभूतं रामाननं श्वेतपद्मवत् सुन्दरमिति बोध्यं।

"अवश्यायस्तु नीहार स्तुषारस्तुहिनं हिमं।" "पुण्डरीकं सिताम्भोज"मिति चामरः।

व इति गुरुत्वाद्बहुवचनं॥ २८॥

विनेति। सीतादेव्या विना जानकीमन्तरेण रघुपतेः रामस्य किमिव किं वस्तु न दुःखं न दुखकारणं अपि तु आश्वासाभावात् सर्वमेव राजैश्वर्यादिकं दुःखकारणमित्यर्थः। ननु कथं दुःखकारणमित्याह प्रियेति। प्रियाया वल्लभाया भार्य्याया नाशे अभावे सति कृत्स्नं जगत् सकलं भुवनं अरण्यं गहनरूपं हि निश्चितं भवति सर्वलोकस्येति शेषः। किलेति लोकवार्त्तायां एवं लोका वदन्तीत्यर्थः। प्रियभार्य्याया

---

(१) जगदिदमरण्यं हि भवतीति पाठान्तरं।

स च स्नेहस्तावानयमपि वियोगो निरवधिः
किमित्येवं पृच्छस्यनधिगतरामायण इव ॥ ३० ॥

रामः । स्वगतम् । अये ! तटस्थित आलापः, कृतं प्रश्नेन, दग्ध-हृदय ! कोऽयमाकस्मिकस्ते स्नेहपरिप्लवो विकारः,(१) एवञ्च निर्भिन्नहृदयावेगः शिशुजनेनाऽप्यनुकम्पितोऽस्मि, भवतु ताव-

अभावे आनन्दकारणं वस्तुजातं वन्यश्वापदकुलमिव आश्वासाभावात् नितरां दुःखमुत्पादयतीत्यर्थः । अपिचेति चार्थः । तावान् तत्परिमितः अतिगाढः स पूर्वानुभूतः स्नेहः सीतां प्रति प्रणयः आसीत्, अयमपि इदानीमनुभूयमानश्च वियोगो विच्छेदः निरवधिः असीमः यावज्जीवं स्थायीत्यर्थः । सीताया जीवनकाले तादृशप्रेमालापादिजनितं निरतिशयं सुखमासीत् इदानीन्तु निरवधि विरहजन्यं दारुणदुःखं अतएव सुखानुभवानन्तरं दुःखानुभवस्य नितान्तदुःसहत्वात् एष रोदितीतिभावः । अत-एव अनधिगतं अविदितं रामायणं स्वनाम्ना प्रसिद्धं वाल्मीकिरचितं महाकाव्यं येन स तथोक्तः रामायणमजानन्निवेत्यर्थः किमिति कथं, एवं "तत्किमेतत्, बाष्पवर्षेण नातं व" इत्थं, पृच्छसि रामं जिज्ञाससे । सर्व्वमेव रामायणेतिहासमवगम्य पुष्कलमेव रामस्य रोदनकारणं जानतोऽपि तवायं प्रश्नो न सङ्गच्छत इति भावः ।

अत्र द्वितीयचरणसामान्येन प्रथमचरणगतविशेषसमर्थनादर्थान्तरन्यासः, किञ्च द्वितीयचरणे "मुखं तव कुरङ्गाक्षि ! सरोजमिति ना‌न्यथा" इत्यादिवत् समासाभावेऽपि निरङ्गं केवलरूपकं, अनयोरङ्गाङ्गिभावेन सङ्करः, तथा चतुर्थचरणे प्रयोजनं विनाऽपि हिशब्दप्रयोगात् निरर्थकत्वदोषः, स तु "किमिव नहि दुःखं रघुपते"रिति व्यत्ययपाठेन समाधेयः, तत्पाठे नञ्समानार्थो नहिशब्द इति बोध्यं ।

शिखरिणी वृत्तं ॥ ३० ॥

(अ) राम इति । आलापः कुशलवयोर्मिथोभाषणं तटस्थित उदासीनः सीताया मातृत्वसम्बन्धोल्लेखरहित इत्यर्थः । सीतारामौ स्वस्यावयोर्मातापितराविति

(१) आकस्मिकस्ते पारिप्लवो विकार इति पाठभेदः ।

दन्तरयामि । प्रकाशम् । वत्सौ ! रामायणमिति श्रूयते भगवतो वाल्मीकेः सरस्वतीनिष्यन्दः प्रशस्ति रादित्यवंशस्य, तत्र कौतूहलेन यत्किञ्चिच्छ्रोतुमिच्छामि । (ञ) (१)

कुशः । स कृत्स्न एव सन्दर्भोऽस्माभिरावृत्तः, स्मृत्युपस्थितौ तावदिमौ बालचरितस्यान्त्येऽध्याये श्लोकौ । (२) (ट)

---

चेदिमौ जानीयातां तदा निःसम्पर्कवत् 'सीतादेव्या' इति 'रघुपते'रिति च कथमपि कुशो न वदेत् किन्तु 'मातरं विना पितुः किमिव न दुःख'मित्येव वदेदिति भावः। अतएव प्रश्नेन 'सीता किं युवयोर्माता' इत्येवं मम जिज्ञासया कृतं अलं। अविदितसीतासम्बन्धतया वाञ्छितविषयं वक्तुं न शक्नुयात्, सुतरां तादृशो मम प्रश्नो निरर्थक इति विराम एव श्रेयानिति भावः। इमौ सीतायाः सुताविव प्राप्ताविव्याशायाः परिचयोपायाभावात् अपूर्णत्वेन समुत्पन्नसन्तापसन्तप्तत्वात् दग्धेति हृदयस्य विशेषणं। अकस्मादागत इत्याकस्मिकः इठादुपस्थितः विशेषकारणं विनाऽपि जनित इत्यर्थः, स्नेहेन वात्सल्येन परिप्लवश्चञ्चलः विकारः अन्यथाभावः। किञ्चेति चार्थः। एवं अनेन प्रकारेण अश्रुवर्षणेनेत्यर्थः निर्भिन्नः प्रकाशितः हृदयस्य आवेगः शोकक्षोभो यस्य स तथोक्तः। अनुकम्पितः दयापात्रीकृतः। अयमतीवलज्जाविषय इति भावः। अन्तरयामि गोपयामि हृदयावेगमित्यर्थः। रामायणमिति रामायणत्वेन प्रसिद्धः। सरस्वत्या वाचः निष्यन्दः अवस्रंसनं चरणमित्यर्थः एतेन तद्वाक्यस्य पीयूषतुल्यत्वं व्यज्यते। आदित्यवंशस्य सूर्य्यवंशस्य प्रशस्तिः प्रशंसा कीर्त्तिविस्तारहेतुरित्यर्थः, श्रूयते लोकपरम्परयेति शेषः। तत्र तद्विषये।

"चञ्चलं तरलं चैव पारिप्लव परिप्लवे" इत्यमरः।

तटे अलक्षितविषये स्थित इति तटस्थितः। अन्तरं अन्तर्हितं करोमीति अन्तरयामि करोत्यर्थे इन्।

(ट) कुश इति। कृत्स्नः सम्पूर्णः। सन्दर्भो ग्रन्थः, आवृत्तः असकृत्पाठेन अभ्यस्तः स्मृत्युपस्थितौ स्मरणविषयौ जातौ।

---

(१) किञ्चित् श्रोतुमिति पाठान्तरं। (२) द्वौ श्लोकौ इति क्वापि पाठः।

रामः। उदीरयतु वत्सः। (ठ)

कुशः। प्रकृत्यैव प्रिया सीता रामस्यासीन्महात्मनः।
प्रियभावः स तु तया स्वगुणैरेव वर्द्धितः॥ ३१॥
तथैव रामः सीतायाः प्राणेभ्योऽपि प्रियोऽभवत्।
हृदयं त्वेव जानाति प्रीतियोगं परस्परम्॥ ३२॥ इति।

(ठ) राम इति। उदीरयतु उच्चारयतु।

प्रकृत्यैवेति। सीता वैदेही प्रकृत्या स्वभावेनैव ननु केनचिदागन्तुकेन भावविन्यासादिनेत्येवशब्दार्थः, महात्मनः उदारचरितस्य रामस्य प्रिया वल्लभा आसीत्। ननु सर्वप्रणयिन उदारचित्तस्य रामस्य सर्व एव प्रिय इति सीतायाः का प्रशंसा इत्याह। सतु प्रियभावः प्रीतिः तया सीतया स्वगुणैरेव निजसत्यसरलताविनयादिभिरेव ननु रामस्यौदार्य्येणेत्येवशब्दार्थः वर्द्धितः उपचितः॥ ३१॥

तथैवेति। रामः तथैव सीता यथा रामस्य प्रिया आसीत् तद्वदेव सीतायाः प्राणेभ्योऽपि जीवनादपि प्रियः प्रेयान् अभवत्। तु किन्तु हृदयं परस्परस्य चित्तमेव कर्तृ परस्परं अन्योन्यगतं प्रीतियोगं प्रणयसम्बन्धं जानाति ननु ताभ्यामन्यजनस्य हृदयं कर्तृ तं प्रीतियोगं जानातीत्यर्थः।

अत्र आर्य्यौ परिसंख्याऽलङ्कारः।

इदानीन्तनवाल्मीकिरामायणपुस्तकेषु तु बालकाण्डस्य शेषेऽध्याये ईदृशौ श्लोकौ न दृश्येते, किन्तु निम्ननिवेश्यमानप्रकारौ विद्येते—

"प्रियातु सीता रामस्य दाराः पितृकृता इति।
गुणाद्रूपगुणाच्चापि प्रीतिर्भूयो विवर्द्धते॥
तस्याश्च भर्त्ता द्विगुणं हृदये परिवर्त्तते।
अन्तर्गतमपि व्यक्तमाख्याति हृदयं हृदा॥"

तन्मन्तव्यं, भवभूतिसमानकालवर्त्तिनि तद्वाचिणात्यदेशप्रचलितपुस्तकनिवहे भवभूतिलिखितप्रकाराविव स्थितौ, इदानीन्तनास्मद्देशीयपुस्तकेषु तु अन्यथाभावं गताविति॥३२॥

राम:। कष्टमतिदारुणो हृदयमर्म्मोपघातः (१) हा देवि! एवं किल तदासीत्। अहो! निरन्वय (२) विपर्य्यास-विरसवृत्तयो विप्रलम्भपर्य्यवसायिनस्तापयन्ति संसार-वृत्तान्ताः। (ङ)

क्व तावानानन्दो निरतिशयविस्रम्भवहुलः
क्व तेऽन्योन्यं यत्नाः, क्व च नु गहनाः कौतुकरसाः।

---

(ङ) राम इति। हृदयमर्म्मणि वक्षसोऽन्तर्वर्त्तीनि सन्धिवन्धे उपघातः आघातः शोकप्रहार इति यावत्। ईदृशयथावद्भावव्यञ्जकश्लोकश्रवणेन हृदये शोकस्य अतिनिष्ठुरः प्रहार इवानुभूयत इत्यर्थः। तदा तस्मिन् सीतासंयोगकाले, एवं वाल्मीकिवर्णितप्रकारः प्रीतियोग इत्यर्थः आसीत्। किल सम्भावनायां। निर्न विद्यते अन्वयः कारणं यस्य स निरन्वयः ऐहिकहेतुं विना उत्पन्न इत्यर्थः यो विपर्य्यासः अवस्थापरिवर्त्तनं तेन विरसा निष्ठुरा वृत्तिर्भावो येषां ते तथोक्ताः, विप्रलम्भे विच्छेदे पर्य्यवस्यन्ति परिणमन्तीति विप्रलम्भपर्य्यवसायिनः अवसाने वियोगे परिणता इत्यर्थः, संसारवृत्तान्ताः जगतां घटनाः। सीतया सम्मेलनकाले सुखस्य परां काष्ठामनुभवन्नहं इदानीं यथा तद्विच्छेदेन दुःखस्यापि परां काष्ठामनुभवामि जगतां प्रायेण सर्व्वैव तथैति भावः।

क्वेति। निर्न विद्यते अतिशयो यस्मात् तेन निरतिशयेन विस्रम्भेण परस्परस्य परस्परप्रियत्वप्रकारकविश्वासेन वहुलः गाढ़ इत्यर्थः, तावान् तत्परिमितः अतिगरीयान् इत्यर्थः आनन्दः सीतया सह प्रेमालापादिजन्यं सुखं क्व कुत्र गतमिति शेषः। अन्योन्यं परस्परं प्रति ते पूर्व्वानुभूता यत्नाः परस्परयोः सुखहृदये परस्परयो श्चेष्टाः क्व कुत्र गता इति शेषः। तथा गहनाः निविड़ाः कौतुकरसाः परस्परनर्म्मालापादिजनितानन्दाश्च क्व नु गताः, सुखे वा सुखानुभवे च दुःखे वा दुःखानुभवे च हृदययोः आवयोः

(१) हृदयमर्म्मोद्घातं इति पाठान्तरं। (२) निरत्यय इति पाठभेदः

सुखे वा दुःखे वा क्व नु खलु तदैक्यं हृदययो
स्तथाप्येष प्राणः स्फुरति, न तु पापो विरमति ॥ ३३ ॥

भोः ! कष्टम् । (ढ)

प्रियागुणसहस्राणामेकोन्मीलनपेशलः ।
य एव दुःसहः कालस्तमेव स्मारिता वयम् ॥ ३४ ॥

---

यनयोः तत् पूर्वस्थितं ऐक्यं एकरूपत्वं क्व नु गतं, परस्परयोः सुखे परस्परयोः सुखित्वं परस्परयो र्दुःखे परस्परयोर्दुःखित्वञ्च कुत्रेदानीं गतमित्यर्थः। ईदृशनिरतिशय-सुखान्यनुभूय अधुना तदनुरूपदारुणदुःखानुभवेन जीवनं भारभूतमिव जातमिति सत्यम् इति भावः। तथापि एष मदीयः पापः पापजनितदारुणदुःखानुभवी प्राणः हृन्मारुतः स्फुरति स्पन्दते श्वासप्रश्वासात्मिकां निर्गमप्रवेशक्रियां करोतीत्यर्थः, तु किन्तु न विरमति श्वासप्रश्वासकरणात् न विश्राम्यति देहमपहाय न गच्छतीत्यर्थः। इदानीं मर्त्तव्येव मरणमेव मे श्रेय इति भावः।

अत्र सुदारुणदुःखरूपे प्राणस्फुरणविरामस्य पुष्कलकारणे सत्यपि तदभावात् विशेषोक्तिरलङ्कारः।

"प्राणो हृन्मारुते बोले काव्यजीवेऽनिले बले" इति मेदिनी।

"असुप्राणशब्दाभ्यां बहुवचनान्ताभ्यां पञ्च प्राणादय उच्यन्ते न पुनरेकैकाभिधाने बहुवचनं, अतएव प्राणोऽपान इत्युक्तं, हृदि प्राणो गुदेऽपान इत्यादि च दृश्यते" इत्यमरटीकायां भरतः।

"निघ्नन् प्रियं प्राणमिवाभिमान"मिति किरातेऽपि।

शिखरिणी वृत्तं ॥ ३३ ॥

(ढ) भोरिति। आत्मसम्बोधने भोःशब्दः।

किन्तत् कष्टमित्याह प्रियेति। प्रियायाः सीतायाः गुणानां रूप-विनय-तारुण्य-पातिव्रात्यादीनां सहस्राणि तेषां, एकं मुख्यं सम्पूर्णमितार्थः यदुन्मीलनं प्रकाशः स्मृत्युपस्थितिरिति यावत् तत्र पेशलः दक्षः समर्थ इति यावत् सीताया रूपविनयाद्य-संख्यगुणानां सम्पूर्णभावेन स्मृतिकारक इत्यर्थः य एव कालः प्रेमालापादिसम्भोगसमयः

तदा किञ्चित् किञ्चित् कृतपदमहोभिः कतिपयै
स्तदीषद्विस्तारि स्तनयुगल (१) मासीन्मृगदृशः ।
वयः स्नेहाकूतव्यतिकरघनो यत्र मदनः
प्रगल्भव्यापारः स्फुरति हृदि मुग्धश्च वपुषि ॥ ३५ ॥

---

दुःस्मरः स्मर्तुमशक्यः यस्य स्मरणमतीवदुःखकरमित्यर्थः वयं तमेव कालं स्मारिताः तत् कालस्य स्मृतिं प्रापिताः अनेन कुमारेणेति शेषः । एतदेव कष्टमिति भावः ।

"चारौ दक्षे च पेशल" इत्यमरः ॥ ३४ ॥

तत्कालस्य दुःस्मरत्वं प्रतिपादयति तदेति । तदा तस्मिन् समये किञ्चित् किञ्चित् अल्पमल्पं यथास्यात्तथा कृतपदं लब्धस्थानं आविर्भूतं मृगदृशः हरिणवच्चञ्चल-लोचनायाः सीतायाः तत् स्मृतिपथारूढं स्तनयुगलं कतिपयैरहोभिः कियद्भिरेव दिनैः ईषद्विस्तारि अल्पविस्तृतं नतु अतिपीवरतया परस्परसंघृष्टमित्यर्थः आसीत् अभवत् । यत्र यस्मिन् काले वयसो यौवनस्य, स्नेहस्य अनुरागस्य, आकूतस्य सम्भोगाभिप्रायस्य च व्यतिकरेण सम्मेलनेन घनो निविड़ः दुर्द्दम इत्यर्थः मदनो मन्मथः हृदि मनसि प्रगल्भोविशालः व्यापारः क्रिया यस्य स प्रगल्भव्यापारः उद्दामाडम्बरः सन् इत्यर्थः स्फुरति प्रकाशते,वपुषि शरीरे च मुग्धः लज्जया सर्वदावहिर्व्यापारासम्भवात् मूढ़ः प्रतिहत-क्रियः सन् इत्यर्थः स्फुरति जनानामिति शेषः मन्मथप्रभावो हृदये सर्वदैव यथा यूनां जायते, लज्जावशात् शरीरिकालिङ्गनादौ सर्वदा तथा प्रकाशितुं नार्हति, किन्तु यौवनोदयात् मन्मथभावावेशाच्च देहे किमपि सुन्दरं लावण्यमुत्पद्यत इति भावः ।

अत्र एकस्य मदनस्य हृदयदेहयो र्गोचरत्वात् पर्य्यायनामाऽलङ्कारः । तथा यच्छब्द-संवलितवाक्यस्य परत्र पाठात् वाक्यगतो विधेयाविमर्शदोषः, स च पराद्धस्य प्राक्पाठेन समाधेयः ।

"आकूतं स्यादभिप्राय" इति हेमः । "मुग्धः सुन्दरमूढ़यो"रिति विश्वः ।

शिखरिणी वृत्तं ॥ ३५ ॥

(१) स्तनमुकुलमिति पाठान्तरं ।

कुशः। अयञ्च मन्दाकिनीचित्रकूटवनविहारे सीतादेवी-मुद्दिश्य रघुपतेः श्लोकः। (ग)

त्वदर्थमिव विन्यस्तः शिलापट्टो (१) यमग्रतः।
यस्यायमभितः पुष्पैः प्रवृष्ट इव केसरः॥ ३६॥

रामः। सलज्जास्मितस्नेहकरुणं। अतिनामायं मुग्धः शिशुजनो-

(ग) कुश इति। अयं मया उच्यमानः। प्रक्रम्य"व प्रिया सीता इत्याद्युक्तः समुच्चयार्थे चकारः। मन्दाकिनी चित्रकूटाचलसमीपवाहिनी काचन नदी, तथाच रघुवंशे "मन्दाकिनी भाति नगोपकण्ठे मुक्तावली कण्ठगतेव भूमेः।" चित्रकूटः कश्चन पर्वतः तयोर्वनेषु विहारे क्रीड़ाकाले। सीतादेवीमुद्दिश्य क्रियमाणस्येत्य-ध्याहारान्न एककर्तृकत्वहानिः।

त्वदर्थमिति। अयं अग्रवर्त्ती, शिलापट्टः विशालः प्रस्तरखण्डः, त्वदर्थमिव तव शयनार्थमिवेत्यर्थः, अग्रतः पुरोभागे विन्यस्तः केनचित् स्थापितः। यस्य शिलापट्टस्य अभितः उभयोः पार्श्वयोः अयं केसरः वकुलतरुः पुष्पैः प्रवृष्ट इव वर्षतीव। अतस्त्व-मत्रेदानीं शयितुमर्हसीति भावः।

अत्र प्रथमा गुणोत्प्रेक्षा द्वितीयाच क्रियोत्प्रेक्षा, उभयोः सापेक्षत्वात् सङ्करः। मुखस्वैरविहारस्थानमिदमिति तदर्थमुपस्थाप्यतामिति व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः।

"अथ केसरः। वकुल" इत्यमरः।

यस्येति "तसोभयाभिपरिसर्वे" रित्यनेन द्वितीयाप्राप्तावपि आर्षत्वात् सम्बन्ध-विवक्षया षष्ठी। प्रवृष्ट इत्यकर्म्मकत्वविवक्षया कर्त्तरिक्तः, पुष्पैरिति करणे तृतीया।

इदानीन्तनैतद्देशीयरामायणे अस्य श्लोकस्यादर्शनात् भवभूतिसमकालीने दाक्षिणात्य-पुस्तकनिवहे त्वासीदित्यवापि मन्तव्यं॥ ३६॥

(त) राम इति। कुशेन सम्भोगशृङ्गारस्य प्रकाशनात् लज्जा, तस्य नितान्त-मुग्धतादर्शनात् स्मितं ईषत् हास्यं, पवलबोधात् स्नेहो वात्सल्यं, सीतायाः स्मरणात् करुणं शोकः तैः सह वर्त्तमानमिति तथोक्तं। अयं शिशुजनः कुशः अतिनाम

(१) शिलापाद इति पाठान्तरं।

विशेषतस्त्वरण्यचरः। हा देवि! स्मरसि वा तस्य प्रदेशस्य तत्समयविस्रम्भातिशयप्रसङ्गसाक्षिणः?। कष्टं भोः कष्टम् (त)

अमाम्बुशिशिरीभवत्प्रसृतमन्दमन्दाकिनी-
मरुत्तरलितालकाकुलललाटचन्द्रद्युति।

---

अतीव मुग्धः मूढ़ः सम्भोगवृत्तान्तानभिज्ञ इत्यर्थः। स्वतः प्राचीनस्य समाप्तिके सम्भोग-शृङ्गारद्योतकस्य त्वदर्थमिवेत्यादिश्लोकस्य असङ्कोचेनैवाभिधानादितिभावः। अरण्यचरो वनवासी। सुतरां ग्राम्यबालकस्येव सार्थसमालोचनयापि गृहस्थयुवतियुवकानां वृत्तान्ताभिज्ञत्वमस्य न सम्भाव्यते, अत एव सर्वथैव सम्भोगादिलोकवृत्तान्तानभिज्ञोऽयं कुमार इति भावः। तस्मिन् समये विहारकाले विस्रम्भातिशयेन विश्वासबाहुल्येन अधुना निर्जनोऽयंप्रदेशः नवा केनचित् सत्वरमत्रागन्तव्यं सुतरां निःसङ्कोचविहारस्थान-मिदमिति विश्वासातिरेकेणेत्यर्थः यः प्रसङ्गः विहारप्राप्तिः तस्य साक्षी द्रष्टा तस्य, प्रदेशस्य मन्दाकिनीचित्रकूटवनभूभागस्य।

तस्य प्रदेशस्ये ति "स्मृत्यर्थकर्मणी" ति षष्ठी।

श्रमेति। श्रमोरतिखेदः तेनोत्पादितं यदम्बु घर्म्मजलं तेन शिशिरीभवत् शीतलतां भजमानं सुखविशेषमेतत्। तथा प्रसृताः प्रवहन्तः मन्दा अल्पानाः ये मन्दाकिनीमरुतः मन्दाकिनीनद्या वायवः तैं तरलिताः चञ्चलीकृता इतस्ततो विक्षिप्ता इति यावत् ये अलका चूर्णकुन्तलाः स्खलितकेशा इत्यर्थः तैः आकुला व्याप्ता आवृतेत्यर्थः ललाटरूपस्य चन्द्रस्य द्युतिः शोभा यस्मिन् तत् तथोक्तं। तथानकुङ्कुमेन कलङ्कितौ चिह्नितौ इत्यकुङ्कुमकलङ्कितौ तथापि उज्ज्वलौ शोभमानौ कुङ्कुमसम्पर्काभावेपि स्वतएव रक्ताभौ इत्यर्थः कपोलौ गण्डौ यस्मिन् तत् तथोक्तं। तथा निर्गं विद्यन्ते आभरणानि अलङ्कारा ययो स्तौ निराभरणौ तथापि सुन्दरौ यौ श्रवणपाशौ प्रशस्तकर्ण-युगलं ताभ्यां सौम्यं सुन्दरं मुखं तव वदनं उत्प्रेक्ष्यते सङ्कल्पवशात् चक्षुषोः समीप-मानीय आलोक्यत इवेत्यर्थः ययेति शेषः। सङ्कल्पवशादुत्प्रेक्ष्यते नतु साक्षात् द्रष्टुं शक्यते इतीव दारुणं कष्टमिति भावः।

अकुङ्कुमकलङ्कितोज्ज्वलकपोलमुत्प्रेक्ष्यते
निराभरणसुन्दरश्रवणपाशसौम्यं (१) मुखम् ॥ ३७ ॥

स्तम्भित इव स्थित्वा सकरुणं । अहो नु खलु भोः । ! (घ)

चिरं ध्यात्वा ध्यात्वा निहित इव निर्म्माय पुरतः
प्रवासेऽप्याश्वासं न खलु न करोति प्रियजनः ।

अत्र प्रक्रान्तस्य तादृशस्मरणस्य दर्शनात्मना सम्भावनाकरणात् भावाभिमानिनी क्रियोत्प्रेक्षा, सा च इवादिवाचकाभावात् प्रतीयमाना. ललाटचन्द्रेति निरङ्गं केवलं रूपकं, कुङ्कुमसम्पर्करूपहेतुं विनापि कपोलयोरुज्ज्वलत्वं तथा आभरणरूपकारणाभावेऽपि कर्णयोः सौन्दर्य्यमिति विभावना चालङ्कारः, इत्थं तेषामङ्गाङ्गिभावेन सङ्करः । छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टिश्चानुसन्धेया । सीतायाः कपोलयुगलमीदृशं स्वभावलोहितं यत् तत्र कुङ्कुमरागो न शोभां जनयति अपितु दुष्टचिह्नमेव करोतीति कलङ्कशब्देन सूचितो वस्तुध्वनिः ।

"कलङ्कोऽङ्कापवादयो"रित्यमरः । "पाशः केशादिपूर्वः स्यात् तत्सङ्घे कर्णपूर्वकः । सुकर्णे च स्वसामर्थ्यात् मृगपक्ष्यादिबन्धने" ॥ इति मेदिनी ।

तरलाः कृता इति तरलिताः करोत्यर्थे नन्तात् कर्म्मणि क्तः । प्रशस्ते श्रवणे इति श्रवणपाशौ "प्रशंसावचनै"श्चेत्यादिना समासः ।

पृथ्वी वृत्तम् ॥ ३७ ॥

(घ) स्तम्भित इति । स्तम्भितः शोकेन जड़ीकृतः । अहोनुखलुभोरित्येकमव्ययं महाविषादसूचकं । तथा च कालापाः पठन्ति ।

"इयन्त इति संख्यानं निपातानां न विद्यते ।
प्रयोजनवशादेते निपात्यन्ते पदे पदे ॥"

चिरमिति । चिरं दीर्घकालं ध्यात्वा ध्यात्वा वारं वारं चिन्तयित्वा निर्म्माय कल्पनया विरचय्य, पुरतः अग्रतः, निहितः स्थापित इव प्रियजनः प्रणयी लोकः प्रवासे

(१) श्रवणपाशमुग्धमिति पाठान्तरं ।

जगज्जीर्णारण्यं भवति हि विकल्पव्युपरमे (१)
कुकूलानां राशौ तदनु हृदयं पच्यत इव ॥ ३८ ॥

नेपथ्ये । वशिष्ठो वाल्मीकिर्दशरथमहिष्योऽथ जनकः
सहैवारुन्धत्या शिशुकलहमाकर्ण्य सभयाः ।

विच्छेदेऽपि विच्छेदकालेऽपीत्यर्थः आश्वासं वियोगकातरस्य परिसान्त्वनं न करोति इति न खलु, अपितु करोत्येवेत्यर्थः । विकल्पस्य तादृशकल्पनाशक्तेः व्युपरमे कुतश्चित् कारणात् निवृत्तौ सति जगत्भुवनं जीर्णारण्यं पुरातनतया विरलशुष्कपादपप्रायं काननं हि भवति तादृशवनरूपमेव जायते इत्यर्थः, तादृशकल्पनाया अभावेन कल्पनीयतादृशमूर्त्तेरप्यभावादिति भावः, तदनु तदनन्तरं हृदयं कुकूलानां राशौ तुषानलानां निवहे पच्यत इव तदीयशोकेन क्वथ्यत इव । तीव्रवह्निना दाहे सहसैव दाह्यस्य विध्वंसात् चिराय यातनाऽनुभवो न जायते, मृदुवह्निना दाहे तु सहसा विध्वंसाभावात् क्रमिकदाहेन गरीयसी यातना अनुभूयते इति तद्वदत्रापि तादृशावस्थायां सद्योजातशोकेनैव मोहो न भवति किन्तु वहुक्षणं यावत् मनस्तापो जायत इत्येतत्प्रतिपादनार्थं सामान्यतो वह्निषु इत्यनुक्त्वा कुकूलानां राशावित्युक्तं ।

अत्र भावाभिमानि वाच्यं क्रियोत्प्रेक्षाद्वयं, जगज्जीर्णारण्यमिति समासाभावेऽपि निरङ्गं केवलरूपकञ्च, एतेषां मिथोनैरपेक्ष्यात् संसृष्टिः । अरण्यपदान्वितस्य अवधारणार्थकहिशब्दस्य भवतीत्यनन्तरपाठात् अस्थानस्थपदतादोषः, स च 'जगज्जीर्णारण्यं खलु भवति सङ्कल्पविरतौ' इति पाठेन समाधेयः ।

"कुकूलं शङ्कुभिः कीर्णे श्वभ्रे ना तु तुषानले" इत्यमरः ।

ननु प्रियजन आश्वासं करोतीत्यनेनैव निर्वाहे नञ्द्वयोपादानात् "विलोक्य वितते व्योम्नि विधुं मुञ्च रुषं प्रिये" इत्यादिवदपुष्टार्थत्वदोष इति चेन्न "सम्भाव्यमाननिषेधनिवर्त्तने नञ्द्वय"मिति वामनाभिधानात् तेन च अवधारणार्थप्रतिपादनात् ।

शिखरिणी वृत्तं ॥ ३८ ॥

वशिष्ठ इति । शिश्वोः चन्द्रकेतुलवयोः कलहं समरं आकर्ण्य लोकपरम्परया

(१) कलववुग्परमे, कलेवरव्युपरते इति विभिन्नौ पाठौ ।

जराग्रस्तैर्गात्रैरथ खलु विदूराश्रमतया
चिरेणागच्छन्ति त्वरितमनसोऽपि श्रमजड़ाः (१)॥३९

रामः। कथं भगवन्तावरुन्धतीवशिष्ठौ, अम्बा जनकश्चात्रैव. कष्टं, कथं खल्वेते द्रष्टव्याः। सकरुणं विलोक्य। अहह ! तात

---

श्रुत्वा वशिष्ठः वाल्मीकिः दशरथस्य महिष्यः कौशल्याप्रभृतयः, अथानन्तरं जनकः अरुन्धत्या वशिष्ठभार्य्यया सहैव सभयाः परमस्नेहपात्रस्य पूर्व्वदृष्टस्य लवस्य चन्द्रकेतोश्च युद्धेन गुरुतरामङ्गलसम्भवात् भीतिमन्तः सन्तः विदूरे अतीवविप्रकृष्टदेशे आश्रमा येषां ते विदूराश्रमाः तेषां भावः सा, तया, तेषां पक्षे आश्रमाणामतीव दूरवर्त्तित्वादित्यर्थः श्रमेण विपुलपथागमनखेदेन जड़ाः नितान्तश्रान्ततया गमनासमर्थप्रायाः, अतएव त्वरितानि शीघ्रगमनाय त्वरान्वितानि मनांसि येषां ते तथोक्ता अपि जराग्रस्तैः वार्द्धकविशिष्टैः जराजीर्णैरित्यर्थः गात्रैः रवयवैरुपलक्षिताः चिरेण कालविलम्बेन आगच्छन्ति समराङ्गनमायान्ति। युद्धनिवारणार्थमिति भावः। उदासीनानां केषाञ्चिन्मुनीनां चन्द्रकेतु-लवयो र्युद्धमवलोक्य तयोरनिष्टाशङ्कया नितरामुद्विग्नानां समाश्वासनात् कस्यचिन्मुने-रुक्तिरियमिति मन्तव्यं।

भविष्यदनिष्टत्वप्रकारकं ज्ञानं भयं तच्च गुणपदार्थः, तेनात तादृशभयेन सह वशिष्ठादीनां सम्बन्धात् तुल्ययोगिताऽलङ्कारः, चिरेणागमनं प्रति जराग्रस्तावयवत्वं श्रम-जड़त्वञ्च हेतुरिति पदार्थहेतुकं काव्यलिङ्गञ्च, इत्यनयोः परस्परनिरपेक्षत्वात् संसृष्टिः प्रयोजनाभावेऽपि नियमार्थकस्य एवशब्दस्य प्रयोगात् अनियमे नियमाख्यदोषः "सहैव ऽरुन्धत्या" इति पाठे तत् समाधानं।

द्वितीयाथशब्दो विदूरेत्यादिवाचकहेत्वन्तरारम्भे, खलुशब्दो वाक्यालङ्कारे।

शिखरिणी वृत्तं ॥ ३९ ॥

(८) राम इति। सम्भवनायां प्रथमः कथं शब्दः। अत्रैव वाल्मीकितपोवन एव उपस्थिता आसन् इति शेषः, नतु पूर्बस्थाने स्थिता इत्येवशब्दार्थः। कथं केन

(१) त्वरितगतयो विस्रस्तजटा इति पाठान्तरं।

जनकोऽप्यत्रैवायातीति (१) वज्रेणैव ताड़ितोऽस्मि (२) मन्दभाग्यः। (इ)

सम्बन्धस्पृहणीयताप्रमुदितैर्जुष्टे वशिष्ठादिभि-
र्दृष्ट्वाऽपत्यविवाहमङ्गलमहे (३) तत्तातयोः सङ्गतम्।

---

प्रकारेण द्रष्टव्या मयेति शेषः। अकारणसीतानिर्वासनेन नितान्तापराद्धोऽहं सुखमेभ्यो दर्शयितुं लज्जितोऽस्मीति भावः। अहहेति विषादे। न केवलं वशिष्ठादिः तातजनकोऽपीत्यशब्दार्थः, अत्रैव समरप्राङ्गन एव नतु आश्रमे स्थित इत्येवशब्दार्थः, वज्रेणैव ताड़ितोऽस्मि वज्रताड़ित इव दारुणपीड़ामनुभवामीत्यर्थः। अत्र असम्भवद्वस्तुसम्बन्धा निदर्शनाऽलङ्कारः। सीताया अभावे तज्जनकस्य यथा गरीयान् शोको मां प्रति कोपश्च न तथा वशिष्ठादीनां, सुतरां जनकसाक्षात्कार एव मम यथा सन्तोद्वेगपीड़योः कारणं न तथा वशिष्ठादीनामिति भावः।

जनकदर्शनेन स्वकीयशोकस्य तीव्रत्वमाह सम्बन्धेति। सम्बन्धस्य विवाहेन रघूणां जनकानाञ्च परस्परसम्पर्कस्य स्पृहणीयतया श्लाघत्वेन वाञ्छनीयतया हेतुना प्रमुदितैः सन्तुष्टैः वशिष्ठादिभिः मुनिभिर्जुष्टे सेविते उपस्थित्या परिपूरिते इत्यर्थः अपत्यानां पुत्रकन्यानां यत् विवाहमङ्गलं विवाहरूपं शुभं कर्म तस्य महे तज्जनिते उत्सवे तातयोः तातस्य पितुर्दशरथस्य तातस्य श्वशुरत्वेन पितृस्थानीयस्य जनकस्य च तत् महानन्दपूर्णं सङ्गतं सम्मेलनं दृष्ट्वा इदानीं ईदृशे एवं विधे महावैशसे निर्वासनेन सीताया हत्यारूपे नृशंसकर्म्मणि वृत्ते जाते सङ्घटिते सति ईदृशं दारुणशोकेन नितान्तकातरं पितृसखं तातस्य दशरथस्य मित्रं जनकं पश्यन् अवलोकयन् अहं किं कथं सहस्रधा सहस्रखण्डप्रकारेण न दीर्य्ये न विदीर्णो भवामि। अथवा रामेण

---

(१) तातजनकस्तु दैवादत्रैवायात इति पाठभेदः।

(२) क्वचित् एवशब्दो नास्ति। (३) जुष्टं वशिष्ठादिभि र्दृष्ट्वाऽपत्यविवाहमङ्गलमहो इति क्वापि पाठः।

पश्यन्नीदृशमीदृशे पितृसखं वृत्ते महावैशसे
दीर्य्ये किं न सहस्रधाऽहमथवा रामेण किं दुष्करम् ॥४०॥

नेपथ्ये। कष्टं भोः! कष्टम्। (ध)(१)

अनुभावमात्रसमवस्थितश्रियं (२)
सहसैव वीच्य रघुनाथमीदृशम्।

---

किं कार्य्यं दुष्करं कर्त्तुमशक्यमस्ति अपितु किमपि नेत्यर्थः। यः खलु सर्वथा निरपराधां महासतीं सीतां निर्वासयितुमर्हति स, स रामः कर्त्तुं न शक्नुयात् ईदृशं निष्ठुरं कार्य्यं जगत्यां नास्त्येव, सुतरामधुना जनकसाक्षात्कारो रामस्य सुकर एवेति भावः।

अत्र रामस्य सर्वकार्य्यकरणयोग्यतारूपकारणेन दारुणशोकसह्यताकारणरूपकार्य्यस्य समर्थनादर्थान्तरन्यासोऽलङ्कारः, स च अर्थापत्त्या सङ्कीर्णः।

"मह उद्धव उत्सव" इत्यमरः।

दीर्य्ये इति कर्म्मकर्त्तरि प्रयोगः।

शार्दूलविक्रीडितं वृत्तं ॥ ४० ॥

(ध) नेपथ्ये इति। कष्टमित्यादिकमपि पथिमध्यवर्त्तिनः कस्यचिन्म,नर्त्तिः।

किं कष्टमित्याह अनुभावेति। मातरः कौशल्यादयः अनुभावमात्रेण केवलेन प्रभावेण केवलेन स्वाभाविकशारीरिकतेजोविशेषेणेत्यर्थः देहपीनत्वव्यावर्त्तनार्थं मात्रपदं समवस्थिता विद्यमाना श्रीः कान्तिर्यस्य तं तथोक्तं, ईदृशं महाशोकक्लशशरीरं रघुनाथं रामं सहसा अतर्कितभावेन वीक्ष्य अवलोक्य विधुराः शोककातराः सत्यः प्रथमं पूर्वं प्रमूढस्य मूर्च्छितस्य जनकस्य प्रबोधनात् संज्ञालाभात् परमित्यर्थः प्रमोहं

(१) क्वापि भोरिति शब्दो नास्ति। (२) समुपस्थितश्रियमिति पाठान्तरं।

प्रथमप्रमूढ़जनकप्रबोधनात्
विधुराः प्रमोहमुपयान्ति मातरः ॥ ४१ ॥

रामः। हा तात ! हा मातरः ! हा जनक ! । (न)

जनकानां रघूणाञ्च यत् कृत्स्नं गोत्रमङ्गलम् ।
तस्मिन्नकरुणे पापे वृथा वः करुणा मयि ॥ ४२ ॥

---

मूर्च्छां उपयान्ति प्राप्नुवन्ति । जनकः प्रथमं दूरतो राममवलोक्य परिचित्य च मूर्च्छितः परञ्च कैश्चित् प्रबोधितः, ईदृशसमये कौशल्यादयोऽपि तथाविधं तं दृष्ट्वा मुह्यन्तीत्यर्थः । दीर्घकालानन्तरं रामावलोकनेन शोकसागरोद्वेलनादिति भावः ।

अत्र अनुभावमात्रसमवस्थितत्रयमिति भङ्ग्या शोकातुरत्वस्य प्रतीयमानत्वात् पर्य्यायोक्तमलङ्कारः ।

मञ्जुभाषिणी वृत्तं ॥ ४१ ॥

(न) राम इति । तातेति श्वशुरत्वेन पितृस्थानीयस्य जनकराजर्षेः सम्बोधनं । एकान्ताकुलतया पितृशोकस्याप्युदयात् जनकेति दशरथस्य सम्बोधनं ।

जनकानामिति । जनकानां जनकवंशीयानां रघूणां रघुवंशीयानाञ्च कृत्स्नं सकलं यत् गोत्रयोरुभयवंशयो र्मङ्गलं दृश्यमानोन्नतिरूपकुशलैकनिदानं सीतायां खलु जातायां जनकानां महानभ्युदय आसीत्, सम्पन्ने च सीतारामयोः परिणये रघुकुलस्यापि कापि समुन्नतिरभवदिति च रामायणे द्रष्टव्यं । तस्मिन् कल्याणैकनिदाने सीतारूपे वस्तुनि अकरुणे निर्दये नितान्तनिष्ठुरतया सीताया निर्वासनेन हत्याकारिणीत्यर्थः अतएव पापे ब्रह्महत्पापशालिनि मयि वो युष्माकं करुणा दया दयया अभिसम्पातादिना शास्तिविधानाभाव इत्यर्थः वृथा निष्फलः कृपया रचितेन मया तद्दुःखनिवारणासम्भवात् युष्माकं मयि करुणाकरणमनर्थकमेवेत्यर्थः । मम तत्पापस्य योग्यशास्तिविधानमेव युष्माकमुचितमिति भावः ।

अत्र पापं प्रति अकरुणत्वं हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ।

अपतितभार्य्यादिपरित्यागी पातित्यजनकब्रह्महत्पापमाह प्रायश्चित्तविवेके गौतमः

यावत् सम्भावयामि (१)। इत्युत्तिष्ठति। (प)

कुशलवौ। इत इतस्तातः। (फ)

सकरुणं परिक्रम्य निष्क्रान्ताः सर्वे।

—:०:—

# इति कुमारप्रत्यभिज्ञानो नाम षष्ठोऽङ्कः। (ब)

"पतिताऽत्याग्यपतितत्यागिनश्च पतिता" इति ॥ ४२ ॥

(प) यावदिति। वाक्यालङ्कारे यावच्छब्दः। सम्भावयामि स्वयं गत्वा अभ्यर्थयामि, अथवा आश्वासयामि, मातृप्रभृतीनिति शेषः।

(फ) कुशेति। तातः पितृस्थानीयो भवान् राम इत्यर्थः, इत इतः अनेन अनेन पथेत्यर्थः आगच्छतु इति शेषः। इत इति तृतीयान्तात् तस्प्रत्ययः।

(ब) इतीति। कुमारयोः कुशलवयोः प्रत्यभिज्ञानं स्वकीयपुत्रत्वेन परिज्ञानं यत्र सः। नाम कुमारप्रत्यभिज्ञाननाम्ना प्रसिद्धः, षष्ठोऽङ्कः समाप्त इति शेषः।

इति श्रीहरिदाससिद्धान्तवागीशविरचितायामुत्तररामचरितटीकायां
सर्वार्थबोधिनीसमाख्यायां षष्ठोऽङ्कविवरणं समाप्तम् ॥ ० ॥



(१) यावत् सम्भावयामीति पाठः क्वापि नास्ति।



# सप्तमोऽङ्कः ।

—:०:—

ततः प्रविशति लक्ष्मणः ।

लक्ष्मणः । भो भोः ! अद्य खलु (१) भगवता वाल्मीकिना सब्रह्मक्षत्रपौरजानपदाः प्रजाः सहास्माभिराहूय कृत्स्न एव सदेवासुरतिर्य्यगुरगनायकनिकायो जङ्गमः स्थावरश्च भूतग्रामः स्वप्रभावेण सन्निधापितः; आदिष्टश्चाहमार्य्येण, वत्स ! लक्ष्मण ! भगवता वाल्मीकिना स्वकृतिमप्सरोभिः प्रयुज्यमानां द्रष्टु

(क) लक्ष्मण इति । भो भोरिति सहचराणां सम्बोधनं । ब्रह्मभिः ब्राह्मणैः क्षत्रैः क्षत्रियैः, गोवृषन्यायात्, अन्यमानवजातिभ्यो ब्रह्मक्षत्रयोः प्राधान्यज्ञापनार्थं पृथगुपादानं पौरैः पुरवासिभिः जानपदैः प्रदेशवासिभिश्च सह वर्त्तमाना इति तथोक्ताः, प्रजाः जनान्, अस्माभिः राज्ञा राजपरिवारवर्गैश्च सह, आहूय आमन्त्र्य, कृत्स्न एव समग्र एव, देवाश्च असुराश्च तिरश्चां पशुपक्षिणां उरगाणां सर्पाणाञ्च नायकाः श्रेष्ठाश्च ते तथोक्ताः, तेषां निकायेन समूहेन सह वर्त्तमान इति स तथोक्तः, जङ्गमो गतिशीलः कीटादिः, स्थावरः स्थितिशीलः पर्वताद्यधिष्ठातृदेवतादिश्च भूतग्रामः प्राणिसमूहः उक्तदेवासुराद्यात्मक इत्यर्थः, स्वप्रभावेण स्वकीयतपोमाहात्म्येन सन्निधापित उपस्थापितः । जगतः सर्वेषां सर्वविधप्राणिनामेकत्र समावेशस्य असम्भवता न केनचिदाशङ्कनीया उग्रतपसः सर्वत्रैवाचिन्तनीयप्रभावदर्शनादिति भावः । अपिचेति चार्थः । आर्य्येण माननीयेन रामचन्द्रेणेत्यर्थः । स्वकृतिं आत्मना विरचितं किमपि दृश्य-

(१) अद्य खल्विति पाठः क्वापि नास्ति ।

मुपनिमन्त्रिताः स्मः, तद्गङ्गातीरमातोद्यस्थानमुपगम्य (१) क्रियतां समाजसन्निवेश इति। कृतञ्च मर्त्त्यामर्त्त्यस्य भूतग्रामस्य समुचितस्थानेषु समुपवेशनं(२)मया। अयन्तु (क)

काव्यमित्यर्थः अप्सरोभिः उर्वशीप्रभृतिदेववाराङ्गनाभिः प्रयुज्यमानां अभिनीयमानां द्रष्टुं उपनिमन्त्रिता आहूताः वयमित्यर्थः। तत्तस्मात् बहुकोटिप्राणिनामवस्थाने महा विपुलायतनस्थानस्यावश्यकत्वादित्यर्थः, आतोद्यस्थानं वीणादिवाद्यस्थानं रङ्गभूमिमित्यर्थः उपगम्य गत्वा समाजसन्निवेशः सभास्थापनं सर्व्वेषां यथायोग्यस्थानोपवेशनमित्यर्थः क्रियतां, इति इत्यनेन आदिष्ट इत्यन्वयः। मयापि तत्रौदासीन्यं न कृतमित्याह कृतञ्चेति। आदेशसमुच्चये चकारः। समुचितस्थानेषु सर्व्वथा योग्यासनेषु, मर्त्त्यो मरणधर्म्मा मनुष्यादिः अमर्त्त्यो मरणहीनो देवगणः तस्य मर्त्त्यामर्त्त्यस्य विनश्वराविनश्वरात्मकस्येत्यर्थः भूतग्रामस्य प्राणिसमूहस्य समुपवेशनं आसनग्राहणं। तेन मत्सहचरा भवन्तोऽप्युपविशन्त्विति भावः।

"ब्रह्म तत्त्वतपोवेदे न द्वयोः पुंसि वेधसि। ऋत्विग्योगभिदोर्विप्रे" इति मेदिनी।

"नायको नेतरि श्रेष्ठे हारमध्यमणावपी"ति वैजयन्ती।

"संघातेऽपि ग्रामो भूतेन्द्रियशब्दविषयकरणाना"मिति हलायुधः।

"निकायस्तु पुमान् लक्ष्ये सधर्म्मिप्राणिसंहतौ। समुच्चये संहतानां निलये परमात्मनी"ति मेदिनी। "ततं वीणादिकं वाद्यमानद्धं मुरजादिकं। वंशादिकन्तु सुषिरं कांस्यतालादिकं घनं। चतुर्विधमिदं वाद्यं वादित्रातोद्यनामक"मित्यमरः।

स्वकृतिमिति "भावविहितः क्तप्रत्ययो द्रव्यवत् प्रकाशते" इति न्यायात् स्वरचितदृश्यकाव्यं। कर्म्मणि क्तिप्रत्ययो वा।

तपसः फलमाह तिथितत्त्वधृतं वचनं—

"तपोभिः प्राप्यतेऽभीष्टं नासाध्यं हि तपस्वतः।

दुर्भगत्वं वृथा लोको वहते सति साधने॥"

---

(१) तद्भागीरथीतीरमनोज्ञस्थानमुपगम्य इति पाठान्तरं।

(२) समुचितस्थानेषु समुपवेशसङ्गः, समुचितस्थानसन्निवेश इति पाठभेदो।

राज्याश्रमनिवासेऽपि प्राप्तकष्टमुनिव्रतः।
वाल्मीकिगौरवादार्य्य इत एवाभिवर्त्तते ॥ १ ॥

ततः प्रविशति रामः।

रामः। वत्स लक्ष्मण! अपि स्थिता रङ्गप्रेक्षकाः। (ख)

लक्ष्म। अथ किम्। (ग)

रामः। इमौ पुनर्वत्सौ कुशलवौ; चन्द्रकेतुसदृशीं स्थानप्रतिपत्तिं लम्भयितव्यौ। (घ)

लक्ष्म। प्रभुस्नेहप्रत्ययात्तथैव कृतम्। इदन्त्वास्तीर्णं राजासनं, उपविशत्वार्य्यः। (ङ)

---

राज्येति। राज्यं राजत्वमेव आश्रमः राजत्वकरणालम्बनीभूतवृहद्गृहस्थाश्रम इत्यर्थः तस्मिन् निवासेऽपि अवस्थानेऽपि सति प्राप्तं स्वीकृतं कष्टं दुःखकरं मुनिव्रतं ब्रह्मचर्य्यादिको मुनिनियमो येन स तथोक्तः, आहारविहारादिविविधभोगसाधनसामग्रीसत्त्वेऽपि ततो निवृत्त इत्यर्थः। आर्य्यो रामः वाल्मीकेः गौरवात् गौरवप्रसूतभक्तिवशादित्यर्थः, इतएव अत्रैव स्थाने न तु रङ्गदर्शनेन मनःस्फूर्त्तिविधानार्थमिति भावः।

अत्र नियतिवशेन समाधानात् विरोधाभासोऽलङ्कारः ॥ १ ॥

(ख) राम इति। अपि प्रश्ने। रज्यतेऽस्मिन्निति रङ्गः अभिनयस्थानं तस्य प्रेक्षकाः दर्शकाः अभिनयदर्शनोत्सुका इत्यर्थः स्थिताः यथास्थाने उपविष्टाः किमित्यर्थः।

(ग) लक्ष्मेति। अथ किमित्येकं स्वीकारार्थमव्ययमित्यसकृदुक्तं।

"अथ किम्। स्वीकारे" इति शब्दकल्पद्रुमः।

(घ) राम इति। अप्रथमे पुनःशब्दः। चन्द्रकेतोः सदृशी तुल्या तां स्थानप्रतिपत्तिं उपवेशनस्थानलाभं लम्भयितव्यौ ग्राहणीयौ। यादृशासने चन्द्रकेतुरुपविष्टः तादृश एव राजकुमारयोग्यासने कुशलवावप्युपवेशयेत्यर्थः।

(ङ) लक्ष्मेति। प्रभोरधीश्वरस्य भवतः स्नेहप्रत्ययात् कुशलवौ प्रति वात्सल्य

राम उपविशति। सर्वे चोपविशन्ति। (च)

लव। प्रस्तूयतां भोः! । (छ)

प्रविश्य सूत्रधारः। भो भोः! भगवान् भूतार्थवादी प्राचेतसः सजङ्गमस्थावरं जगदाज्ञापयति, यदिदमस्माभिरार्षेण चक्षुषा समुद्वीक्ष्य पावनं करुणाद्भुतरसञ्च (१) किञ्चिदुपनिबद्धं, तत्र कार्य्यगौरवा (२) दवधातव्यमिति। (ज)

मस्तीति विश्वासात् तथैव चन्द्रकेतुसदृशस्थानमेव कृतं कुशलवयोरुपवेशनेत्यर्थः कल्पितं। तु किन्तु इदमग्रतो दृश्यमानं राजासनं राजोचितं उच्चैः बहुमूल्यञ्चासनमित्यर्थः आस्तीर्णं विस्तीर्णं कल्पितमित्यर्थः। आर्य्यो भवान् उपविशतु तत्रासन इति शेषः।

(च) राम इति। राज्ञः प्राक् प्रजानामुपवेशनस्यान्याय्यत्वात् रामोपवेशनानन्तरं सर्वे चोपविशन्तीत्युक्तं। सर्वे सभ्याः।

(छ) लव इति। भोरिति नटानां सम्बोधनं। प्रस्तूयतां आरभ्यतां विज्ञापितनाटकाभिनय इति शेषः। पुस्तकान्तरे रामोक्तिरियं।

(ज) गर्भाङ्कमवतारयति प्रविश्येति। भोभोरिति उपस्थितसामाजिकानां सम्बोधनं। भूतं सत्यं अर्थं वदितुं शीलमस्येति भूतार्थवादी सर्व्वदा यथार्थवादी प्राचेतसो वाल्मीकिः सजङ्गमस्थावरं सचराचरं। आज्ञापयति आदिशति महर्षीणां सर्वमाननीयतया सर्व्वेष्वेव आदेशसम्भवादिति भावः। आर्षेण ऋषियोग्येन त्रिकालदर्शिना ज्ञानमयेनेत्यर्थः, समुद्वीक्ष्य यथायथतया विज्ञाय, पावनं पवित्रं, करुणः शोकोद्दीपकः अद्भुतो विस्मयकरश्च रसो यत्र तत्, किञ्चिद्दृश्यकाव्यं उपनिबद्धं रचितं। तत्र दृश्यकाव्ये तदभिनय इत्यर्थः कार्य्यगौरवात् अभिनेयवस्तुनो गुरुत्वेन अनवद्येयत्वात् अवधातव्यं मनःसंयोगः कर्त्तव्यः सर्व्वैर्भवद्भिरिति शेषः। इति इत्यन्तं आज्ञापयतीत्यन्वयः।

"युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिष्वित्य"मरः।

---

(१) पावनकरुणाद्भुतरसमिति पाठान्तरं।

(२) काव्यगौरवादिति पाठभेदः।

राम:। एतदुक्तं भवति। साक्षात्कृतधर्म्माणो महर्षयः, तेषामृतम्भराणि भगवतां परोरजांसि प्रज्ञानानि न क्वचिद्व्याहन्यन्त इत्यनभिशङ्कनीयानीति। (भ)

नेपथ्ये। हा अज्जउत्त! हा कुमार लक्खण! एआइणीं मन्दभाइणीं असरणं अरखे आसण्णप्पसववेअणं हदासं सावदा मं अहिलसन्ति, साहं दाणिं मन्दभाइणो भाइरहीए अत्ताणं निक्खिवेमि। (१) (ञ)

(ञ)। हा आर्य्यपुत्र लक्ष्मण! एकाकिनीं मन्दभागिनीमशरणां अरण्ये आसन्नप्रसववेदनां हताशां श्वापदा मामभिलषन्ति, साहमिदानीं मन्दभागिनीभागीरथ्यामात्मानं निक्षिपामि।

(भ) राम इति। एतत् "यदिदमस्माभि" रित्यादिवाल्मीकिवचनस्य तात्पर्य्यमित्यर्थः उक्तं विवृतं भवति मयेति शेषः। अस्य वाल्मीकेरादेशस्य तात्पर्य्यमहं विवृणोमीति सरलार्थः। किन्तत् विवरणमित्याह साक्षादिति। साक्षात्कृतधर्म्माणः प्रत्यक्षीकृतधर्म्मसूक्तयः। ऋतं मुक्तिरिव सारः स्थिरांश उत्कृष्टभागो येषां तानि, निर्वाणपर्य्यवसितानीत्यर्थः रजसो रजोगुणात् पराणीति परोरजांसि केवलसत्त्वमयानीत्यर्थः प्रज्ञानानि प्रकृष्टतत्त्वज्ञानानि क्वचित् भूते भविष्यति वर्त्तमाने वा काले, दूरे व्यवधाने वा देशे न व्याहन्यन्ते व्याहतानि रुद्धानि भवन्ति, सर्व्वत्रैव यथायथं वस्तु उपस्थापयन्तीत्यर्थः, इति हेतोः अनभिशङ्कनीयानि यथायथभावेन वस्तूपस्थापकत्वे संशयितव्यानि। अतो वाल्मीकिना यदुपनिबद्धं तस्य सत्यत्वे न केनापि संशयितव्यमिति भावः।

परोरजांसीति राजदन्तादित्वात् परनिपातः, "अपस्करादयश्चे"ति सुट्।

"ज्ञानान्मुक्ति"रिति सांख्यसूत्रं।

(ञ) नेपथ्य इति। न विद्यते शरणं रक्षिता यस्यास्तां अशरणां। आसन्नप्रसववेदनां उपस्थितप्रसवव्यथां, हताशां जीवनाशारहितां मां, श्वापदाः व्याघ्रादयो

(१) णिक्खिविस्समिति पाठान्तरं।

लक्ष्म। आत्मगतं। कष्टं वतान्यदेव किमपि। (ट)

सूत्र। विश्वम्भरात्मजा देवी राज्ञा त्यक्ता महावने।
प्राप्तप्रसवमात्मानं गङ्गादेव्यां विमुञ्चति ॥ २ ॥

इति निष्क्रान्तः। (ठ)

हिंस्रजन्तवः, अभिलषन्ति खादितुमिच्छन्ति। भागीरथ्यां गङ्गाजले, आत्मानं देहं निक्षिपामि विसृजामि। जीवनरक्षायामुपायाभावात् हिंस्रजन्तुकर्त्तृकभक्षणापेक्षया गङ्गाया आश्रयः श्रेयानिति भावः। रामचन्द्रादेशात् अरण्ये परित्यज्य लक्ष्मणे प्रस्थिते सति सीताया उक्तिरियं।

"आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म चे"त्यमरः।

(ट) लक्ष्मेति। वतेति खेदसूचकमव्ययं। अन्यदेव चिन्तितविषयात् भिन्नमेव, किमपि अनिर्वचनीयं इदमभिनेतुमारभ्यते इति शेषः। कोऽपि प्राचीनो विस्मयकरविषयोऽभिनेतव्य इति पूर्वमस्माभिश्चिन्तित इति भावः। लक्ष्मणनामकस्य अन्यस्यापि सम्बोधनसम्भवात् नेपथ्यात् कस्योक्तिरियमिति निर्णयाभावात् कस्य विषयस्याभिनयो भविष्यतीति इदानीमपि रामलक्ष्मणादयो निर्णेतुं न शक्ता इति प्रत्येतव्यं।

विश्वेति। राज्ञा रामेण महावने गहनारण्ये त्यक्ता विश्वम्भरात्मजा पृथिवीकन्या देवी सीता प्राप्तप्रसवं उपस्थितगर्भमोचनकालं आत्मानं देहं गङ्गादेव्यां गङ्गाजले विमुञ्चति निक्षिपति। अत एव नेपथ्यात् हा अज्जउत्त इत्यादि सीताया उक्तिरिति भावः।

गङ्गादेव्यामित्यनेन नेयं सीताया आत्महत्या अपि तु आत्मरक्षार्थमेव गङ्गायाः शरणापन्नता इति ध्वन्यते, तेनात्र शब्दशक्तिमूलो वस्तुध्वनिः॥ २ ॥

(ठ) इतीति। निष्क्रान्तः सूत्रधार इति शेषः। एतदन्ता गर्भाङ्कस्य प्रस्तावना।

सूत्रधारेण वाल्मीकिप्रणीतप्रबन्धस्य विश्वसनीयत्वप्रयोगे प्रयुज्यमाने नेपथ्यात् सीताविलापमाकर्ण्य तस्या गङ्गायामात्मनिक्षेपरूपप्रयोगान्तरस्य प्रयुक्तत्वात् तेन च पृथ्वीगङ्गासीतानां प्रवेशादियमपि प्रस्तावना प्रयोगातिशयरूपा। प्रवर्त्तकरूपेति केचित्। वस्तुतस्तु ईदृशलक्षणाव्यापनार्थं लक्षणान्तरकरणमुचितमासीदालङ्कारिकाणाम्।

रामः। देवि! क्षणमपेक्षस्व। (ड)(१)

लक्ष्म। आर्य्ये! नाटकमिदं नाटकमिदम्। (ढ)(२)

रामः। हा देवि! दण्डकारण्यप्रवासप्रियसखि! एष ते रामाद्दैवदुर्विपाकः। (ण)

लक्ष्म। आर्य्य! दृश्यतां तावत् प्रबन्धार्थः। (३)

रामः। एष सज्जोऽस्मि वज्रमयः। (थ)

ततः प्रविशतुत्सङ्गितैकैकदारकाभ्यां पृथ्वीगङ्गाभ्यामवलम्बिता सीता। (द)

---

(ड) राम इति। अपेक्षस्व विलम्बस्व। अहमपि तवानुवर्त्ती भवामीति वाक्यशेषः। इदानीन्तु विश्वम्भरेत्यादिना सूत्रधारेण सीताया निर्देशात् रामस्यायं विलाप इति बोध्यं।

(ढ) लक्ष्मे ति। नाटकमिदं अभिनयः खल्वेष इत्यर्थः। नतु वस्तुत एव सीता गङ्गायामात्मानं विमुञ्चतीति तदर्थविलापो नोचित इति भावः। अवधारणे द्विरुक्तिः।

(ण) राम इति। एष गङ्गायामात्मनिक्षेपः। दैवदुर्विपाकः भाग्यस्य अशुभं फलं। महारण्ये साहाय्याय सहचरीभूताया एव तवायं दुर्विपाको मयैव विहित इति मत्तो जगत्यां कोऽपि कृतघ्नो नास्तीति भावः।

(त) लक्ष्मे ति। प्रबन्धार्थः दृश्यकाव्यविषय इति यावत्। मन्ये, परतः शुभमेव भविष्यतीति भावः।

(थ) राम इति। वज्रमयः वज्रवत्कठिनहृदयः कथमन्यथा विदीर्णहृदयो न भवामीति भावः। सज्जः अभिनयदर्शनार्थं दत्तावधानः।

(द) तत इति। उत्सङ्गितः क्रोड़े कृतः एकैको दारको बालको याभ्यां

---

(१) हा देवि! हा देवि! लक्ष्मण! अवेक्षस्व इति पाठभेदः।

(२) क्वचित् द्विरुक्ति र्नास्ति।

रामः। वत्स लक्ष्मण! असंविज्ञातमनिबन्धनं तम इव प्रविशामि, धारय माम्। (ध)

गङ्गा (१)। समाश्वसिहि कल्याणि! दिष्ट्या वैदेहि! वर्द्धसे।
अन्तर्जलं प्रसूतासि रघुवंशधरौ सुतौ॥ ३॥

सीता। समाश्वस्य। दिट्टिआ दारए पसूदह्मि, हा अज्जउत्त!।
इति मूर्च्छति। (न)

(न) दिष्ट्या दारकौ प्रसूतास्मि, हा आर्य्यपुत्र!।

ताभ्यां। अवलम्बिता धृता। उत्सङ्ग उत्सङ्गसम्बन्धः क्रोडे समारोप इत्यर्थः जातोऽस्येति उत्सङ्गितः तारकादित्यादितच्।

(ध) राम इति। असंविज्ञातं अज्ञातपूर्वं, अनिबन्धनं अहेतुकं अतर्कित-मुपस्थितमित्यर्थः तमोऽन्धकारं। मोह आगत इत्यर्थः। सीताभिनवदर्शनेन शतधा शोकोद्वेलनादिति भावः।

समेति। हे कल्याणि! मङ्गलभूते, वैदेहि! सीते, समाश्वसिहि आश्वस्ता भव वर्द्धसे भाग्येन पुत्रसम्पन्नासि, रघुवंशधरौ रघुकुलरचकौ सुतौ पुत्रद्वयं अन्तर्जलं जलमध्ये प्रसूतासि उत्पादितवती।

अत्र आश्वासं प्रति पुत्रप्रसवो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः।

जलस्यान्त इति अन्तर्जलमित्यव्ययीभावः। प्रसूतेति आदिकर्म्मविवक्षया कर्त्तरि क्तः॥३

(न) सीतेति। पुत्रप्रसवमाकर्ण्य सीतायाः चेतसि एवमभूत् गर्भोत्पत्ति-मात्र महानन्दित आर्य्यपुत्र श्चेदद्य सन्निहितो भवेत् तदा तस्य कियानानन्दो भवेत् ततश्च रामस्मरणेन शोकसागरोद्वेलनात् आर्य्यपुत्रेति सम्बोधनं मूर्च्छा चेतिबोध्यं

---

(२) देव्यौ इति क्वापि पाठः।

लव । पादयो र्निपत्य । आर्य्ये ! आर्य्ये ! दिष्ट्या वर्द्धामहे, कल्याणप्ररोहो रघुवंशः । विलोक्य । हा ! हा ! कथं क्षुभितवाष्पोत्पीड़निर्भरः प्रमुग्ध एवार्य्यः । इति वीजयति । (प)

पृथ्वी । वत्से ! समाश्वसिहि समाश्वसिहि ।

सीता । आश्वस्य । भअवदि ! का तुमं इअं अ । (फ)

पृथ्वी । इयन्ते श्वशुरकुलदेवता भागीरथी । (ब)

सीता । भअवदि ! णमोदे णमोदे । (भ)

भागी । चारित्रोपचितां कल्याणसम्पदमधिगच्छ । (म)

लव । अनुगृहीताः स्मः । (य)

---

(फ) भगवति । का त्वमियञ्च ।

(भ) भगवति ! नमस्ते नमस्ते ।

---

(प) लक्ष्मेति । आर्य्ये आर्य्येति हर्षे द्विरुक्तिः । कल्याणः मङ्गलकरः प्ररोहः अङ्कुरः शरीरञ्च यस्य सः, रघुवंशः रघुकुलं वेणुदण्डञ्च । अत्र श्लिष्टपरम्परित रूपकमलङ्कारः । विलोक्य राममिति शेषः । क्षुभित उद्वेलितो यो वाष्पोत्पीड़ः अश्रुराशिः तेन निर्भरः परिपूर्णः, प्रमुग्ध एव मूर्च्छित एव । स्वयोगव्यवस्थापने एवशब्दः । पूर्वमभिनयदर्शनाय एकाग्रचित्तो लक्ष्मणो रामस्य मोहं नावगतः, परञ्च तमवगम्य लक्ष्मणस्य हा हेत्याद्युक्तिरिति बोध्यं ।

वीजयति व्यजनेन वायुं सञ्चालयति । वीजधातुश्चुरादिरदन्तः ।

(ब) पृथ्वीति । श्वशुरकुलदेवता सगरवंशोपास्या उपासनया सगरवंशं प्रत्यनुग्रहकारिणीत्यर्थः ।

(म) भागीति । चारित्रेण पातिव्रात्यरूपेण सदाचारेण उपचितां वर्द्धितां कल्याणसम्पदं सर्वविधमङ्गलसम्पत्तिं अधिगच्छ लभस्व ।

चरित्रमेव चारित्रं प्रज्ञादित्वात् स्वार्थे अण् ।

(य) लक्ष्मेति । अनुगृहीताः दयापात्रीकृताः । गाङ्गकृताशीःफलस्यावश्यम्भावित्वात् सीताकल्याणास्मत्कल्याणयोश्चाभिन्नत्वादिति भावः ।

भागी। इयन्तु ते जननो वसुन्धरा। (र) (१)

सीता। हा अम्ब! ईदिसो अहं तुए दिट्ठा। (ल)

पृथ्वी। एहि वत्से! एहि पुत्त्रि!। इति सीतामालिङ्ग्य मूर्च्छति। (व)

लक्ष्म। सहर्षम्। दिष्ट्या पृथ्वीभागीरथीभ्यामभ्युपपन्नार्य्या। (श) (२)

रामः। अवलोक्य। करुणतरं खल्वेतद्वर्त्तते। (ष)

भागी। विश्वम्भराऽपि नाम व्यथत इति जितमपत्यस्नेहेन, यद्वा सर्वसाधारणो ह्येष मोहग्रन्थिरन्तश्चरश्चेतनावतामनुपप्लवः संसारतन्तुः। वत्से वैदेहि! देवि भूतधात्रि! समाश्वसिहि समाश्वसिहि। (स)

(ल) हा अम्ब! ईदृशी अहं त्वया दृष्टा।

(र) भागीति। तुशब्दो भागीरथीभेदप्रतिपादनार्थः। "तु स्याद्भेदेऽवधारणे" इत्यमरः।

(ल) सीतेति। ईदृशी चरित्रदोषापवादेन निर्वासितेत्यर्थः। चरित्रापवादेन परिभूताया जनन्यादिदर्शनं अतीवलज्जाविषादकरमिति भावः।

(व) पृथ्वीति। वत्से पुत्रीति विविधसम्बोधनं स्नेहातिशयकृतं। सीतादुःखेन तादृशदुःखितत्वात् मूर्च्छेति बोध्यं।

(श) लक्ष्मेति। अभ्युपपन्ना प्राप्ता आर्य्या सीता। अशरणस्य शरणप्राप्तिरतीवसुखायेति भावः।

(ष) राम इति। अवलोक्य पृथ्वीभागीरथीभ्यां सीताप्राप्तिमिति शेषः। एतत् पृथ्वीगङ्गाभ्यां सीताया आश्रयदानं करुणतरं ममातीवशोकोद्दीपकमित्यर्थः। सर्वाश्रयस्य सम्राजो मम भार्य्याया अपरेणाश्रयदानादिति भावः।

(स) भागीति। विश्वं सर्वं बिभर्त्तीति विश्वम्भरा साऽपि विश्वधारणव्यापारेण सर्वक्लेशसहापीत्यर्थः व्यथते आत्मजायाः सीताया दुःखेन दुःखमनुभवति, इति हेतोः, अपत्यस्नेहेन सन्तानवात्सल्येन जितं सर्वोत्कर्षेण वृत्तं। सर्वसहाया अपि

(१) क्वचित् तुशब्दो नास्ति। (२) पृथ्वीगङ्गाभ्यामिति पाठान्तरं।

पृथिवी। देवि! सीतां प्रसूय कथमाश्वसिमि। (ह)
एकश्चिरं राक्षसमध्यवासः
साङ्गो, द्वितीयश्च सुदुःश्रवोऽस्याः। (१)
भागी। को नाम पाकाभिमुखस्य जन्तु- (२)
द्वाराणि दैवस्य पिधातुमीष्टे ॥ ४ ॥

पृथिव्याः सुतायाः सीताया दुःखेन दुःखानुभवदर्शनात् अपत्यस्नेह एव सर्वान्तःकरणवृत्तिभ्यः श्रेयानिति प्रतीयत इति सरलार्थः। उक्तमर्थं समर्थयति यद्वेति। हि तथाहि, एष अपत्यस्नेहरूपो मोहग्रन्थिः ममतावन्धनं सर्वसाधारणः सर्वेषां देवासुरादिप्राणिनां समानः अविशेषेण वर्त्तमान इति यावत् चेतनावतां प्राणिनां, अन्तश्चरः मनोवर्त्ती, अनुपप्लवः दुश्छेदः संसारस्य तन्तुः योजकसूत्रं। एतदभावे मात्रादीनां वालापत्यादिरक्षणाभावेन क्षणेनैव सर्वं नश्यतीति भावः। भूतधात्रि प्राणिनां धारणकर्त्रि।

अत्रापत्यस्नेहे तन्तुत्वारोपस्य प्रकृतापत्यस्नेहप्राधान्योपयोगितया परिणामालङ्कारः।

(ह) पृथिवीति। प्रसूय उत्पाद्य। सीतादुःखेनैव सर्वदा दुःखानुभवात् कदापि समाश्वासो नास्त्रे वेति भावः।

सीताया दुःखं विवरीतुमाह एक इति। अस्याः सीतायाः, एकस्तावत् चिरं वहुकालं व्याप्य राक्षसानां मध्ये रावणेनापहरणानन्तरं लङ्कायामशोकवने इत्यर्थः वासः अवस्थानं वासजनितं भीषणदुःखमित्यर्थः, अङ्गैः शेषाङ्गैः अलीकरामलक्ष्मणनिधनवार्त्ताश्रवणादिजनितसन्तापैः सह वर्त्तमान इति साङ्गः परिसमाप्त इत्यर्थः, द्वितीयो रामकर्त्तृकः परित्यागश्च सुदुःश्रवः चरित्रदोषापवादेन विहितात् कुत्सया साधुजनेन श्रोतुमप्यशक्यः। इदन्तु पूर्वस्मादपि घोरतरं दुःखमिति भावः।

नाम सम्भावनायां। को जन्तुः प्राणी पाकाभिमुखस्य परिणामोन्मुखस्य फलोत्पादनप्रवृत्तस्य इत्यर्थः दैवस्य नियतेः द्वाराणि प्रसरणमार्गान् पिधातुं आच्छादयितुं अवरोद्धुमिति यावत् ईष्टे प्रभवति शक्नोति अपितु कोऽपि नेति तात्पर्य्यं। सीताया ईदृशी दुःखपरम्परा नियतिविहितेति न तदर्थमनुतापः करणीय इति भावः।

(१) त्यागो द्वितीयश्च सुदुःसहोऽस्या इति पाठान्तरं। (२) जन्तोरिति पाठभेदः।

पृथिवी । भागीरथि ! सदृशमुक्तम् । युक्तमेतद्वा रामभद्रस्य (क)

न प्रमाणीकृतः पाणि र्बाल्ये बालेन पीड़ितः ।
नाहं न जनको नाग्नि र्नानुवृत्ति र्न सन्ततिः ॥ ५ ॥

---

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, स च अर्थापत्त्या सङ्कीर्य्यते।

फलोत्पादनप्रवृत्तेः पूर्वमवगतस्य दुर्दैवस्य स्वस्त्ययनादिना शान्तिरपि विधातुं शक्यते फलोत्पादनप्रवृत्तस्य तु कथमपि नेति प्रतिपादनार्थं पाकाभिमुखस्येत्युक्तं। पिधातुमिति "धाञ्नहयोरपेरुपसर्गस्यादि"रिति अपिशब्दस्य अकारलोपः।

इन्द्रवज्रावृत्तं ॥ ४ ॥

(क) पृथिवीति। सदृशं योग्यमुक्तं त्वयेति शेषः। दैवस्य बलवत्तया सीताया इयं दुर्गतिरिति स्वीकरोमीति भावः। एवार्थे वाशब्दः "वास्याद्विकल्पोपमयोरेवार्थे च समुच्चये" इति विश्वप्रकाशदर्शनात्। रामभद्रस्य एतत् अकारणं सीताया निर्वासनं युक्तं मुचितमेवाभूत् विपरीतलक्षणयाऽयमर्थोऽपि यथा "उपकृतं बहु तत्र किमुच्यते" इति साहित्यदर्पणे। उपकृतं अपकृत मिति तत्रार्थः।

सीतानिर्वासनस्यायुक्तत्वं प्रतिपादयति नेति। बाल्ये शैशवे नवयौवने इति तात्पर्य्यं बालेन शिशुना नवयुवकेनेत्यर्थः रामेण पीड़ितः गृहीतः पाणिः न प्रमाणीकृतः नापेक्षितः। यथाशास्त्रं परिणीतायाः सच्चरित्रायाः भार्य्यायाः परित्यागो लोकशास्त्रगर्हितत्वात् नितान्तमनुचित इति भावः। अहं पृथिवी न प्रमाणीकृता न विश्वास्यत्वेन स्वीकृता। गणिकात्मजाया इव पृथिवीसुतायाः कथं चरित्रदोषः स्यात् इत्यनविचार्य्यैव परित्यागात् मां प्रत्यपि अविश्वासो निहित इति भावः। जनको राजर्षिरपि न प्रमाणीकृतः विशुद्धत्वेन स्वीकृतः, विशुद्धस्य पितुः कन्या न खलु चरित्रदोषमर्हति चरित्रदोषस्य आकरदृष्टान्ताऽनुसारित्वादित्यगणयित्वा निर्वासनात् जनकोऽप्यवमानित इति तदपि महानुचितमिति भावः। अग्निरपि न प्रमाणीकृतः न सत्यवादित्वेन अङ्गीकृतः, लङ्कायां मग्निपरीक्षाकाले भगवानग्निदेवः सीता परमसच्चरित्रेति सर्वसमक्षमभिहितवान् किन्तु तच्चरित्रदोषेणैव निर्वासनात् अग्नेरपि मिथ्यावादित्वं सूचितमिति तदपि महदयुक्त मिति भावः। अनुवृत्तिः। विवाहसमयात् प्रभृति आनुगत्यमपि न प्रमाणीकृता

सीता। हा अज्जउत्त सुमराविदह्मि। (ख)

पृथिवी। आः कस्तवार्य्यपुत्रः ? । (ग)

सीता। सलज्जास्रम्। जहा वा अम्वा भणादि। (घ)

रामः। अम्ब ! पृथ्वि ! ईदृशोऽस्मि। (ङ)

---

(ख) हा आर्य्यपुत्र स्मारितास्मि।

(घ) यथा वा अम्बा भणति।

---

निर्दोषितायाः कारणत्वेन न स्वीकृता। दुश्चरिता ईदृशमानुगत्यं कर्त्तुं कथमपि नार्हतीत्यविचार्य्यैव कृतं निर्वासनमैकान्तमसङ्गतमिति भावः। सन्ततिरपि न प्रमाणीकृता अपत्यमपि नापेक्षितं। गर्भवत्या निर्वासिताया मरणावश्यम्भावेन तत् सन्ताननाशावश्यम्भावात् वंशलोपकारणं निर्वासनं स्वयमेव कृतमित्यतो जगत्यां किमनुचितमस्तीति भावः।

अत्र एकया प्रमाणीकृतक्रियया पाण्यादीनामनेकेषां कर्म्मतयाऽभिसम्बन्धात् तुल्ययोगिताऽलङ्कारः, सीतानिर्वासनस्यानुचितत्वं प्रति बहुकारणनिर्देशात् समुच्चयश्चेत्यनयो रङ्गाङ्गिभावेन सङ्करः ॥ ५ ॥

(ख) सीतेति। स्मारिता रामभद्रस्येतुच्चारयन्त्या जनन्या पृथिव्येति शेषः।

(ग) पृथिवीति। आ इति कोपसूचकमव्ययं। तव आर्य्यपुत्रः कः अपितु कोऽपि नेत्यर्थः। रामो यदि तवार्य्यपुत्रोऽभविष्यत् तदा कथमपि न निरपराधां त्वां निरवासयिष्यदिति भावः।

(घ) सीतेति। वा अथवा। अम्बा माता यथा भणति ब्रवीति, तथैव भणतु इति तात्पर्य्यं। नियतेरेवात्र कारणत्वात् नखलु स्वयमहमार्य्यपुत्रं निन्दामीति भावः।

(ङ) राम इति। ईदृशः सीताया आर्य्यपुत्रपदायोग्यः। नितान्तनृशंसकार्य्यकरणादितिभावः।

भागी। प्रसीद (१) भगवति ! वसुन्धरे ! शरीरमसि संसारस्य तत्किमसंविदानेव जामात्रे कुप्यसि। (च)

घोरं लोके विततमयशो, या च वह्नौ विशुद्धि-
र्लङ्काद्वीपे कथमिव जन स्तामिह श्रद्दधातु।

(च) भागीति। प्रसीद रामं प्रतीति शेषः। संसारस्य जगतः शरीरं देहरूपा, स्वकीयवृत्तान्तं स्वकीया तनुरिव सर्वेषां सकलवृत्तान्तं त्वमवगच्छसीत्यर्थः। तत्तस्मात् किं कथं असंविदानेव अजानतीव जामात्रे, रामाय कुप्यसि। नैतदुचितमिति भावः।

असंविदानेति अकर्म्मकत्वात् "समोगमृच्छी"त्यादिना आत्मनेपदं। जामात्र इति "यं प्रति च कोप" इति सम्प्रदानत्वाच्चतुर्थी।

पृथिव्याः सर्ववृत्तान्ताभिज्ञत्वमुक्तं—

"आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्म्मश्च जानाति नरस्य वृत्तम्॥"

ननु रामेणापि कथमिदमतीवायुक्तमनुष्ठितमित्याह घोरमिति। लोके भुवने घोरं दुःसहत्वात् दारुणं अयशो यशोविरोधिनी निन्देत्यर्थः विततं विस्तीर्णं। अथ अग्निपरीक्षया प्रतीतायामपि चरित्रशुद्धौ कथं निन्देत्याह लङ्केत्यादि। लङ्काद्वीपे सर्व्वतः समुद्रवेष्टितायां लङ्कायां वह्नौ या च विशुद्धिः निर्दोषत्वपरीक्षा आसीदिति शेषः, इह भारतवर्षे जनो लोकः कथमिव तां विशुद्धिं श्रद्दधातु विश्वसितु। प्रत्यक्षगोचरमप्यङ्गवृत्तान्तं लोकः सन्दिग्धे, दूरवर्त्तिनन्तु कथमपि न विश्वसित्येवेतिभावः। ननु अलीकलोकनिन्दया किमायाति याति वा, ततः कथमीदृशमनुष्ठितमित्याह इक्ष्वाकूणामिति। यत् कृत्स्नो लोकः सर्वाः प्रजाः समाराधनीयः अनुकूलव्यवहारादिना सम्यक्तोषणीयः, तत् प्रजानां विरागापसारणेन सन्तोषोत्पादनमतिगहनं नितान्तदुष्करं कर्म्म एकस्य व्यवहारेण सर्वेषां सन्तोषोत्पत्तेः प्रायेणासम्भवात् इति भावः।

---

(१) प्रसीदेति पाठः क्वापि नास्ति।

इक्ष्वाकूणां कुलधनमिदं यत् समाराधनीय:
कृत्स्नो लोक स्तदतिगहनं(१)किं स वत्स: करोतु ॥६॥

लक्ष्म। अव्याहतान्त:प्रकाशा हि देवता भूतेषु विशेषेण गङ्गा, तदेष ते प्रणामाञ्जलि:। (२) (छ)

राम:। अम्ब! अनुकूलस्त्वया भगीरथगृहे प्रसाद:। (ज)

---

इदं इक्ष्वाकूनां इक्ष्वाकुवंशोद्भवानां जनानां सन्तोषोत्पादनरूपं दुष्कारं कर्म्म कुलधनं धनमिव सर्वथा रक्षणीयमिति कौलिकं व्रतमित्यर्थ:। ननु तथात्वेऽपि सीतापरित्यागस्य किं प्रयोजन मित्याह किमिति स वत्स: स्नेहपात्रीभूतोराम: किं करोतु सीतापरित्यागं विना किं कार्य्यं कुर्य्यात्। यामाश्रित्य समुत्पन्नया निन्दया जनानां विरागेन जात: तदपसारणे-नैव निन्दापगमात् विरागापगमेन सन्तोष: स्यादित्यभिप्रेत्यैव सीता निर्वासितेति भाव:।

अत्र सीतानिर्वासनकार्य्यस्य एकस्मिन् लोकनिन्दारूपे कारणे सत्यपि लोकसन्तोष-करणीयतारूपकारणान्तरोपन्यासात् समुच्चयोलङ्कार:।

मन्दाक्रान्ता वृत्तं ॥ ७ ॥

(छ) लक्ष्मेति। हि यस्मात् देवता: देवजातय: भूतेषु प्राणिषु विषयेषु अव्याहत: केनचिदपि अनिवारित:, अन्त:प्रकाश: अन्त:करणवृत्ते: प्रसार: अन्तर्य्यामित्वमिति यावत् यासां ता:, देवा हि अन्तर्य्यामितया सर्वेषामेव प्राणिनां सर्वं वृत्तान्तजातं जानन्तीत्यर्थ:। विशेषेण आधिक्येन, गङ्गा अव्याहतान्त:प्रकाशेत्यर्थ: सर्वदेवताभ्य: प्रकृष्टैश्वर्य्यशालित्वादिति भाव:। तत्तस्मात् अस्मदादिभ्यो मानुषेभ्यो देवानां प्राधान्या-दित्यर्थ: ते तुभ्यं एष मया क्रियमाण:, प्रणामाय नमस्काराय अञ्जलि: हस्तयो: संयोग:। भक्त्यातिशयात् त्वां प्रणमामीत्यर्थ:।

(ज) राम इति। अम्ब! मात:! त्वया भगीरथगृहे भगीरथवंशं प्रतीत्यर्थ: प्रसाद: अनुग्रह:, अनुवृत्त: अधिकृत:, भगीरथात् प्रभृति मां यावत् अविच्छिन्नभावेन कृत इत्यर्थ:। अन्यथा अस्माकं पराचे मां प्रति रोषकलुषितां पृथिवीं कथं प्रसादये रिति भाव:।

---

(१) तदतिविषममिति पाठान्तरं। (२) तदेष ते प्रणामाञ्जरिति पाठभेद:।

पृथ्वी। देवि! नित्यं प्रसन्नास्मि वः, किन्त्वापातदुःसहः शोकावेगोऽपत्यस्य तेनैवं (१)ब्रवीमि, न पुन र्न जानामि सीतास्नेहं रामभद्रस्य। (भ)

दह्यमानेन मनसा दैवाद्वत्सां विहाय सः।
लोकोत्तरेण सत्त्वेन (२) प्रजापुण्यैश्च जीवति ॥ ७ ॥

रामः। सकरुणा हि गुरवो गर्भरूपेषु। (ञ)

---

(भ) पृथ्वीति। वो युष्माकं सम्बन्धे युष्मत्पक्षीयान् रामादीन् प्रतीत्यर्थः। तर्हि कथं "आः कस्तवापत्यपुत्र" इत्थं ब्रवीषीत्याह किन्त्विति। अपत्यस्य सन्तानस्य शोकावेगः आपातदुःसहः, परन्तु कार्य्यकारणादिविवेचनेन स्वयमेव सान्त्वनोदयात् सहनीयः स्यादिति भावः। पुनः किन्तु रामभद्रस्य सीतास्नेहं सीतां प्रति प्रणयं न जानामि इति न अपि तु जानाम्येवेत्यर्थः।

कीदृग् जानासीत्याह दह्यमानेनेति। दैवात् नियतिवशात् वत्सां सीतां विहाय निर्वास्य दह्यमानेन तदीयवियोगदुःखैः सन्तप्यमानेन मनसा उपलक्षितः स रामः लोकोत्तरेण सर्वलोकश्रेष्ठेन सत्त्वेन व्यवसायेन धैर्य्येणेति यावत् प्रजापुण्यैः सर्वगुणसम्पन्ननरपतिलाभहेतुभूतैः प्राक्तनैः प्रजानां धर्म्मैश्च जीवति प्राणान् धारयति। अन्यथा दारुणसीताशोकेन तस्य प्राणधारणमसम्भवमेव स्यादित्येवं जानामीति भावः। अत्र कारणभूतानि पुण्यानि प्रजासु, तत्कार्य्यभूतं जीवनञ्च रामे, इत्थं कार्य्यकारणयोर्भिन्नदेशवृत्तित्वात् असङ्गतिरलङ्कारः ॥ ७ ॥

(ञ) राम इति। गुरवः श्वश्रुश्वशुरादयो गुरुजनाः गर्भरूपेषु सन्तानभूतेषु जामातादिषु सकरुणा हि अपराधे सत्यपि सदया एव। अन्यथा आत्मजायाः सीताया निर्वासनेन पृथिवी देवी शापादिना मम कञ्चिदपि अनर्थमकार्षीत् इति भावः।

---

(१) किन्त्वापातदुःसहस्नेहावेगेनैवमिति क्वापि पाठः।

(२) धैर्य्येणेति पाठभेदः।

सीता। रुदती कृताञ्जलिः। णेदु मं अत्तणो अङ्गेसुं विलअं अम्बा। (ट)

रामः। किमन्यद् ब्रवीतु। (ठ)

भागी। शान्तम्, अविलीना वत्सरसहस्राणि भूयाः। (ड)

पृथ्वी। वत्से! अवेक्षणीयौ (१) ते पुत्रकौ। (ढ)

सीता अणाधाह्मि। (२) (ण)

रामः। हृदय! वज्रमयमसि। (त)

---

(ट) नयतु मामात्मनोऽङ्गेषु विलयमम्बा।

(ण) अनाथास्मि।

---

(ट) सीतेति। आत्मनोऽङ्गेषु स्वप्रयस्वकीयदेहावयवेषु विलयं नयतु लोपं प्रापयतु।

(ठ) राम इति। अन्यत् उक्तवचनं विना। गभीरविषादे निस्तारोपायाभावे सर्वेषां मरणेच्छाया एव बलवत्त्वात् युक्तमेवोक्तमिति भावः।

(ड) भागीति। शान्तमिति वारणार्थमव्ययमिति शब्दकल्पद्रुमः। उक्तप्रकारं न वाच्यमित्यर्थः। बहूनि वत्सराणां सहस्राणि व्याप्य अविलीना अविलुप्ता जीवितेत्यर्थः।

(ढ) पृथ्वीति। अवेक्षणीयौ स्तन्यदानतत्त्वावधानादिना पर्य्यवेक्षणेन रक्षणीयावित्यर्थः। अनयो र्जीवनार्थमेव तव जीवनमावश्यकमिति भावः।

(ण) सीतेति। अनाथा अशरणा। रक्षकहीनया मया कथं पुत्रौ रक्षितुं शक्येते इति भावः।

(त) राम इति। वज्रमयं वज्रवत् कठिनमित्यर्थः। येन सार्वभौमस्य ममैव महिष्याः रक्षकहीनतावचनश्रवणेनापि त्वं न विदीर्णमिति भावः।

(१) अपि रक्षणीयौ इति पाठान्तरं।

(२) किं एदेहिं इति क्वापि अधिकः पाठः।

भागी। कथं त्वं सनाथाप्यनाथा। (थ)

सीता। कीदिसं मम अभव्वाए सणाधत्तणं। (१) (द)

देव्यौ। जगन्मङ्गलमात्मानं कथं त्वमवमन्यसे।

आवयोरपि यत्सङ्गात् पवित्रत्वं प्रकृष्यते ॥ ८ ॥

लक्ष्म। आर्य्ये! श्रूयताम्। (२) (ध)

---

(द) कीदृशं ममाभव्यायाः सनाथत्वम्।

(थ) भागीति। नाथेन पत्या सह वर्त्तमाना जीवत्पतिकेत्यर्थः तथापि कथं अनाथा रक्षकहीना। पतिस्ते जीवति, स एव च त्वां रक्षिष्यतीति भावः।

(द) सीतेति। अभव्यायाः अशुभास्पदीभूतायाः, भीषणकलङ्केन तन्मूलकनिर्वासनेन च दुर्गतेः परां काष्ठां प्राप्ताया इत्यर्थः। सनाथत्वं रक्षकसमेतत्वं। रक्षकेण पत्यैवाहं परित्यक्ता, सुतरां कुतो मे रक्षक इति भावः।

जगदिति। हे सीते! त्वं जगन्मङ्गलं जगतां कल्याणकारणीभूतं आत्मानं स्वां कथं केन हेतुना अवमन्यसे अमङ्गलास्पदत्वेन अपवित्रत्वात् "अनाथास्मि" "अभव्याया मम" इत्यादिना परिभवसि निन्दसीत्यर्थः। यस्मात्तव सङ्गात् संसर्गात् आवयोरपि अन्यत्र का कथा पावनत्वेन प्रसिद्धयोः पृथिवीगङ्गयोरपि पवित्रत्वं पावनत्वं प्रकृष्यते उत्कर्षं प्राप्नोति। सुतरां पातिव्रात्येन जगति त्वं सर्वप्रधानपवित्रासीति नात्माऽवमाननीय इति भावः।

अत्र पृथिवीगङ्गयोः पवित्रत्वप्रकर्षासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः।

पतिव्रतायाः पवित्रत्वमुक्तं ब्रह्मवैवर्त्ते—

"पृथिव्यां यानि तीर्थानि सतीपादेषु तान्यपि।

तेजश्च सर्वदेवानां मुनीनाञ्च सतीषु च॥" ८॥

(ध) लक्ष्मेति। श्रूयतां पृथिवीगङ्गयोर्वाक्यमिति शेषः। अनेन वाक्येन आर्य्या सीतादेवी कीदृशी पतिव्रता पवित्राचेत्यवधार्य्यतामिति भावः।

(१) मन्दभागिन्या इति पाठभेदः। (२) श्रुतमिति पाठान्तरं।

राम:। शृणोतु लोक:। (न)

नेपथ्ये कलकल:।

राम:। अद्भुततरं किमपि! (प)

सीता। किंत्ति अन्तरिक्खं (१) पज्जलदि। (फ)

देव्यौ। ज्ञातम्। (व)

कृशाश्व:कौशिको राम इति येषां गुरुक्रम:।
आविर्भवन्ति तान्येव शस्त्राणि सह जृम्भकै:॥ ८॥

नेपथ्ये। देवि! सीते! नमस्तेऽस्तु गति र्न: पुत्रकौ हि ते।

---

(फ) किमिति अन्तरिक्षं प्रज्वलति।

(न) राम इति। लोक: सर्वे जना:। जातावेकवचनं। मया तु परिणयसमयात् प्रभृत्येव सीताया: पातिव्रात्यं पावनत्वञ्च सम्यगवधारितं विश्वस्तञ्च, इदानीं पृथिवीगङ्गयोर्वाक्येन किमधिकमवध्यार्य्यते, ये पुन र्लङ्कावासेन सीतायाश्चरित्रं सन्दिहाना नानाविधमपवादमकल्पयन् त एव लोका: पृथिवीगङ्गयोर्वचनमिदं शृण्वन्तु श्रुत्वा च सीताचरित्रनैर्म्मल्यमवधारयन्त्विति भाव:।

(प) राम इति। अद्भुततरं इतोऽपि आश्चर्य्यतरं, किमपि घटनादर्शनं भवेदिति शेष:।

(फ) सीतेति। अन्तरिक्षं आकाशं प्रज्वलति प्रदीप्यते।

(व) देव्याविति। ज्ञातं आकाशप्रदीप्ते: कारणमिति शेष:।

कृशाश्व इति। कृशाश्वोमुनि: कौशिको विश्वामित्र:, राम इति इत्थं येषां शस्त्राणां गुरुक्रम: उपदेष्टृपरम्परा, कृशाश्वात् विश्वामित्र: तस्माच्च रामो यानि शस्त्राणि

---

(१) सचलं अन्तरिक्खमिति क्वापि पाठ:।

आलेख्यदर्शने देवो यदाह (१) रघुनन्दनः ॥ १० ॥

सीता। दिट्ठिआ अत्थदेअदाओ परिप्फुरन्ति। (भ)

लक्ष्म। उक्तमासीदार्य्येण सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्तीति। (म)

रामः।(२) नमो वः परमास्त्रेभ्यो धन्याः स्मो वः परिग्रहात्।
अनुध्यातैरुपेतव्यं वत्सयोर्भद्रमस्तु वः ॥ ११ ॥

---

(भ) दिष्ट्या अस्त्रदेवताः परिस्फुरन्ति।

लब्धवानित्यर्थः, तान्येव शस्त्राणि जृम्भकैरस्त्रैः सह आविर्भवन्ति प्रकाशन्ते। तेनान्तरिक्षं प्रज्वलितमिति भावः ॥ ९ ॥

देवीति। हे सीते देवि! ते तुभ्यं नमः अस्माकं प्रणामोऽस्तु। हि यस्मात् ते तव पुत्रकौ नवजातौ सुतौ नोऽस्माकं गतिराश्रयः, प्रभुमातृत्वादेव त्वां प्रणमाम इति भावः। मम पुत्रौ कथं युष्माकमाश्रयीभूताविल्याह। देवो रघुनन्दनो रामः आलेख्यदर्शने चित्रदर्शनवेलायां यत् आह ब्रवीति वदति स्मेत्यर्थः। तस्माद्देव वयं तव पुत्रौ आश्रयाम इति भावः।

अत्र वर्त्तमानकाले निपातनसिद्धस्य अतीते आहेत्यस्य अतीते प्रयोगात् च्युतसंस्कारता दोषः, 'यदाह स्म रघूद्वहः' इति पाठेतु तद्दोषाभावः।

"भवन्तः परमाश्रय"—इत्यादिवदुभयोर्मिलितयोरेव समानाश्रयत्वप्रतिपादनार्थं गतिरित्येकवचनं ॥ १० ॥

(भ) सीतेति। दिष्ट्या पुत्रयोर्मम च सौभाग्येन अस्त्रदेवताः जृम्भकास्त्राणामधिष्ठात्र्यो देवताः परिस्फुरन्ति प्रकाशन्ते।

(म) लक्ष्मेति। आर्य्येण पूज्येन भवता, इति इत्यन्तं, उक्तं चित्रदर्शनवेलायामित्यर्थः।

नम :इति। परमास्त्रेभ्यः उत्कृष्टजृम्भकास्त्रदेवताभ्यः वो युष्मभ्यं नमः, कथमयं नमस्कार इत्याह, वयं वो युष्माकं परिग्रहात् लाभात् धन्याः कृतार्थाः जगत्याम-

---

(१) यथाहेति पाठान्तरं। (२) देव्याविति क्वापि पाठः।

क्षुभिताः कामपि दशां कुर्वन्ति मम साम्प्रतम् ।
विस्मयानन्दसन्दर्भजर्जराः करुणोर्म्मयः ॥ १२ ॥

देव्यौ। मोदस्व वत्से ! मोदस्व, (१) रामभद्रतुल्याविदानीं ते पुत्रकौ संवृत्तौ। (य)

सीता। भअवदीओ ! को एदाणं क्खत्तिओचिदं कम्म करिस्सदित्ति। (र)

रामः। एषा (२) वशिष्ठगुप्तानां रघूणां वंशवर्द्धिनी।

(र) भगवत्यौ ! क एतयोः क्षत्रियोचितं कर्म्म करिष्यतीति।

जेयत्वेन प्रतिथा इत्यर्थः स्मः जाताः। अनुध्यातैः मत्पुत्राभ्यां स्मृतैः सद्भिर्भवद्भिः वत्सयो र्मम पुत्रयोरुपेतव्यं सन्निधातव्यं। वो युष्माकं भद्रं मङ्गलं अस्तु ॥ ११ ॥

क्षुभिता इति। साम्प्रतं अधुना विस्मयानन्दयोः सन्दर्भेण आश्चर्यहर्षयोः ग्रथनेन संयोगेनेत्यर्थः जर्जराः कणशः कृताः क्षुभिता उद्वेलिताः करुणोर्म्मयः सीताशोकतरङ्गाः मम कामपि अनिर्वचनीयां दशां अवस्थां कुर्वन्ति। पृथिवीगङ्गयोरनुग्रहलाभरूपालौकिकवृत्तान्तविलोकनात् विस्मयेन, पुत्रजन्मनिबन्धनेन हर्षेण, प्रियतमावियोगजन्मना रङ्गदर्शनात् नवीभावमापन्नेन शोकेन च अहमिदानीमात्मनि विमूढोऽस्मीति सरलार्थः।

अत्र अङ्गी रसः हर्षाख्यभावश्च करुणरसस्याङ्गमिति रसवदलङ्कारः। ऊर्म्मिशब्देन करुणस्य सागरतुल्यमगाधत्वं व्यज्यते ॥ १२ ॥

(य) देव्याविति। मोदस्व आनन्दिता भव, हर्षे द्विरुक्तिः। हर्षकारणमाह रामभद्रतुल्याविति। जृम्भकास्त्रलाभात् रामभद्रसमानसामर्थ्याविव्यर्थः।

(र) सीतेति। क्षत्रियोचितं क्षत्रियवर्णयोग्यं, कर्म्म जातकर्म्मादिसंस्कारं।

एषेति। वशिष्ठेन ब्रह्मर्षिणा गुप्तानां संस्कारकर्म्मणा वीजगर्भसमुद्भवपापेभ्यः शान्तिविधानेन दैवोपप्लवेभ्यश्च रक्षितानां रघूणां रघुवंश्यानां वंशवर्द्धिनी पुत्रप्रसवेन कुलवृद्धिकारिणी एषा सीताऽपि सुतयोः पुत्रयोः संस्कर्त्तारं जातकर्म्मादिसंस्काराणां

(१) रमस्व वत्से मन्यस्व वत्से इति पाठभेदौ। (२) एषामिति क्वापि पाठः।

कष्टं सीतापि सुतयोः संस्कर्त्तारं न विन्दति ॥१३॥

देव्यौ। (१) पुत्रि! किं तवानया चिन्तया, एतौ हि वत्सौ स्तन्यत्यागात् परेण भगवतो वाल्मीकेरर्पयिष्याव: (२) स एवैतयोः चत्रकृत्यं करिष्यति। (ल)

यथा वशिष्ठाङ्गिरसा वृषी प्राचेतसस्तथा।

रघूणां जनकानाञ्च वंशयोरुभयो गुरुः॥ १४ ॥

रामः। सुविचिन्तितं भगवतीभ्याम्। (३) (व)

---

सम्पादयितारं जनं न विन्दति न प्राप्नोति, एतदेव कष्टम्। रघुवंशीयानां सकल-दैवकर्मसम्पादयितरि सति वशिष्ठे सीतासुतयोः संस्कर्तुरभाव इति दारुणीयं दशापरि-वृत्तिरिति भावः।

अत्र कष्टमिति वाक्यस्य एषेत्यादिवाक्यान्तर्गतत्वेऽपि न गर्भितत्वदोषः तादृश-समावेशेन विषादातिशयद्योतनात् "गर्भितत्वं गुणः क्वापीति"साहित्यदर्पणोक्तेः॥ १३॥

(ल) देव्याविति। हि यस्मात्। स्तने भवं स्तन्यं दुग्धं तस्य त्यागात् तत्पानत्यागादिति तात्पर्य्यं। वाल्मीकेः समीपे। चत्रकृत्यं गौणकाले चत्रियो-चितं जातकर्म्मादिसंस्कारं कर्म्मेत्यर्थः।

ननु वशिष्ठसदृशः कोऽपि गुरुत्वे कृतः महाप्रभावो महर्षिश्चेत् संस्कारं कुर्य्यात् तदेव युक्तं भवेदित्याह यथेति। वशिष्ठः ब्रह्मपुत्रः आङ्गिरसः शतानन्दश्चेति वशिष्ठा-ङ्गिरसौ ऋषी यथा, यथाक्रमेण रघूणां जनकानाञ्च गुरू तथा प्राचेतसो वाल्मीकिरपि तयोरुभयोर्वंशयो गुरुः मन्त्रोपदेष्टा। सुतरां वाल्मीकेः रौदासीन्यं वशिष्ठादपकृष्टत्वञ्च न शङ्कनीयमिति भावः॥ १४॥

(व) राम इति। भगवतीभ्यां पृथिवीगङ्गाभ्यां सुविचिन्तितं सम्यग् विवेचनं कृतं।

---

(१) भागीति क्वचित् पाठो दृश्यते। (२) अर्पयिष्यामीति पाठान्तरं।
(३) भगवत्याविति पाठान्तरं।

लक्ष्म। आर्य्य ! सत्यं विज्ञापयामि, तैस्तैरुपायैर्वत्सौ कुशलवावुत्प्रेक्षे। (श)

एतौ हि जन्मसिद्धास्त्रौ वुभौ प्राचेतसान्मुनेः। (१)
वीरौ सम्प्राप्तसंस्कारौ वयसा द्वादशाब्दिकौ ॥ १५ ॥

रामः। वत्स ! इत्येवाहं परिप्लवमानहृदयः प्रमुग्धोऽस्मि। (२)(ष)

पृथ्वी। एहि वत्से ! पवित्रीकुरु रसातलम्। (स)

रामः। हा प्रिये ! लोकान्तरं गतासि। (ह)

(श) लक्ष्मेति। तैस्तैरुपायैर्हेतुभिः। उत्प्रेक्षे सीतापुत्रत्वेनानुमिनोमि। तत्रानुमानहेतूनाह एताविति। हि यस्मात्। एतौ उभौ कुशलवौ जन्मनः उत्पत्तेः प्रभृति सिद्धानि उपस्थितानि अस्त्राणि जृम्भकास्त्राणि ययो स्तौ, सीतासुतयोरपि जन्मकाल एव जृम्भकास्त्रलाभ इदानीमेवावगत इति भावः। प्राचेतसात् वाल्मीकेर्मुनेः सकाशात् सम्प्राप्ताः संस्कारा जातकर्म्माद्युपनयनान्ता याभ्यां तौ, सीतापुत्रयोरपि स्तन्यत्यागात् परं संस्कारकर्म्मार्थं वाल्मीकिसमीपे समर्पणं श्रुतमिति भावः। तथा वयसा द्वादशाब्दिकौ द्वादशवत्सरौ। सीतापुत्रावपीदानीं द्वादशवत्सरौ सर्वेयातामिति भावः ॥ १५ ॥

(ष) राम इति। इत्येव अस्माद्धेतोरेव सीतापुत्रत्वेनानुमानादेवेत्यर्थः परिप्लवमानहृदयः आनन्देन चञ्चलचित्तः सन् प्रमुग्धः जड़ः।

(स) पृथ्वीति। रसातलं पातालं पवित्रीकुरु अनयोः स्तन्यत्यागं यावदवस्थानेन पुनीहि।

(ह) राम इति। लोकान्तरं मर्त्त्यलोकभिन्नं लोकं पातालमित्यर्थः।

---

(१) जातौ प्राचेतसादिति ; प्राप्तप्राचेतसा वुभौ। आर्य्यतुल्याकृती वीरौ इति च पाठान्तरं। (२) इति परिप्लवमानहृदयः सन् मुग्धोऽस्मीति क्वापि पाठः।

सीता। णेदु मं अत्तणो अङ्गेसुं विलअं अम्बा, ण सक्कुम्हि ईदिसं जीअलोअपरिवत्तं अणुभविदुं। (च)

रामः। किमुत्तरं स्यात्। (क)

पृथ्वी। वत्से! स्तन्यत्यागं यावन्मन्नियोगतः पुत्रकयोरपेक्षस्व, परेण ते यथा रोचिष्यते (१)। (ख)

भागी। (२) एवं नाम (ग)

ततो निष्क्रान्ता गङ्गापृथ्वीसीताः।

रामः। कथं विलय एवं वैदेह्याः सम्पन्नः, हा देवि! दण्डकारण्यवासप्रियसखि! हा चारित्रदेवते! लोकान्तरं पर्य्यवसितासि। इति मुह्यति। (घ)

(च) नयतु मामात्मनोऽङ्गेषु विलयमम्बा, न शक्नोम्मि ईदृशं जीवलोकपरिवर्त्तमनुभवितुं।

जनन्यादेशस्य अवश्यपालनीयत्वेन सीतायाः पातालगमनावश्यम्भावात् गतेत्यतीतनिर्देशः हा इति विषादोक्तिश्चेति बोध्यं।

(च) सीतेति। जीवलोकपरिवर्त्तं अवस्थापरिवर्त्तनमित्यर्थः। रसातलं गत्वापि जीवन्त्या मया ईदृशमेव दुःखमनुभवितव्यं अतस्तत्र गमनान्मरणमेव मे श्रेय इति भावः।

(क) राम इति। किमुत्तरं अस्याः सीतोक्तेः पृथिव्याः किं प्रतिवचनं स्यादित्यर्थः पृथिवी अस्याः किमुत्तरं ददातीति श्रोतुं समाकुलोऽस्मीति भावः।

(ख) पृथ्वीति। पुत्रकयोः स्तन्यत्यागं यावत् स्तन्यपानपरित्यागपर्य्यन्तं मन्नियोगतः ममादेशात् अपेक्षस्व विलम्बस्व। परेण स्तन्यत्यागात् परेण कालेन ते तुभ्यं यथा रोचिष्यते तथा करिष्यसीति शेषः। परेणेति तृतीयाऽपवर्गे।

(ग) भागीति। एवं नाम भवत्विति शेषः। स्तन्यत्यागं यावदपेक्षस्वेत्यर्थः।

(घ) राम इति। कथमिति शोकसम्भ्रमे। वैदेह्याः सीताया विलयः

(१) यथा रोचते तथा करिष्यसीति पाठभेदः। (२) गङ्गेति पाठान्तरम्।

लक्ष्म। **भगवन्! वाल्मीके! परित्रायस्व एष (
काव्यार्थः। (ङ)**

नेपथ्ये। **अपनीयतामातोद्यकं, भो भोः सजङ्गमस्थावराः प्राणभृतो मर्त्यामर्त्याः! पश्यत, महर्षिणा भगवता वाल्मीकिना अनुज्ञातं पवित्रमाश्चर्यम्। (च)**

लक्ष्म। विलोक्य। **मन्थादिव क्षुभ्यति गाङ्गमम्भो-
व्याप्तञ्च देवर्षिभिरन्तरीक्षम्।**

---

अन्तर्धानं लोकान्तरे गमनमित्यर्थः। चरित्रमेव चारित्रं तेन पातिव्रत्याचारिणीत्यर्थः देवता इव तत्सम्बोधनं। लोकान्तरं पातालं पर्य्यवासितासि गतासि। इति गत्यर्थत्वात् कर्त्तरि क्तः।

(ङ) लक्ष्मेति। परित्रायस्व रामस्य जीवनसम्पादनेन अस्मान् रक्ष। एष मोहजननेन रामस्य जीवनविनाशः किं ते तव काव्यस्य दृश्यकाव्यस्य नाटकाभिनयस्येत्यर्थः अर्थः प्रयोजनं। अभिनयेन रामस्य विनाश एव किं तवोद्देश्यमासीदिति सरलार्थः। नैतदुचितमिति भावः।

(च) नेपथ्य इति। आतोद्यकं वीणादिचतुर्विधवाद्यं (कन्सार्ट) अपनीयतां अपसार्य्यतां ऐक्यतानवादनं परिह्रियतामित्यर्थः। अन्यथा तादृशनानाविधमधुरनिनादश्रवणेन लोकानां हृदयाकर्षणेन उत्पत्स्यमानाश्चर्य्यदर्शनं व्याहन्येतेति भावः। जङ्गमा गमनशीलाः पश्वादयः, स्थावराः स्थितिशीलाः पर्वताधिष्ठातृदेवतादयः तैः सह वर्त्तमाना इति सजङ्गमस्थावराः। प्राणभृतः प्राणिनः, मर्त्या विनश्वराः मनुष्यादयः अमर्त्या अमराः देवाः। पवित्रं आश्चर्य्यञ्च किञ्चित् अनुज्ञातं आदिष्टं, तत् पश्यतेत्यन्वयः।

नेपथ्यात् सूत्रधारस्योक्तिरियं। एष च सन्दर्भः विष्कम्भकवत् चूलिका नाम गर्भाङ्कस्यार्थोपक्षेपकविशेषः। तथा च साहित्यदर्पणे—

---

(२) क्वचित् किंशब्दो नास्ति।

आश्चर्य्यमार्य्या सह देवताभ्यां
गङ्गामहीभ्यां सलिलादुदेति ॥ १६ ॥

पुनर्नेपथ्ये। अरुन्धति! जगद्वन्द्ये! गङ्गापृथ्व्यौ भजस्व (१)
अर्पितेयं तवाभ्यासे सीता पुण्यव्रता वधूः ॥ १७ ॥

लक्ष्म। दिष्ट्या (२) आश्चर्य्यमाश्चर्य्यम्। आर्य्ये! पश्य पश्य, कष्टमद्यापि नोच्छ्वसित्यार्य्यः। (छ)

---

"अन्तर्यवनिकासंस्थैः सूचनाऽर्थस्य चूलिका।"

वाल्मीकिना अनुज्ञातं तत् पवित्रमाश्चर्य्यञ्च समुत्पद्यमानं लक्ष्मणो विलोक्य प्रकटयति मन्थादिवेति। गङ्गाया इदमिति गाङ्गं अम्भः जलं मन्थादिव मन्थानदण्डेन आलोड़नादिव क्षुभ्यति उच्छलति, देवाश्च ऋषयश्च तैः देवर्षिभिः अन्तरीक्षं आकाशं व्याप्तं आकीर्णं। आश्चर्य्यदर्शनाय देवा, ऋषयश्च गगणे समागता इत्यर्थः। अहो आश्चर्य्यं, आर्य्या सीता गङ्गामहीभ्यां भागीरथीपृथिवीभ्यां देवताभ्यां सह सलिलात् गङ्गाजलात् उदेति उत्तिष्ठति। महदिदमद्भुतमिति भावः।

अत्र भावाभिमानिनी वाच्या क्रियोत्प्रेक्षाऽलङ्कारः। क्षुभ्यति उदेतीति कर्त्तृ-प्रत्ययान्तमुख्यक्रिययोर्मध्ये व्याप्तमिति कर्म्मप्रत्ययान्तगौणक्रियासन्निवेशात् भग्नप्रक्रमता दोषः, स च देवर्षिसङ्घश्च नभः समेतीति पाठेन समाधेयः। इन्द्रवज्रा वृत्तम् ॥ १६ ॥

अरुन्धतीति। हे जगद्वन्द्ये पतिव्रताशिरोमणित्वेन जगतां पूजनीये अरुन्धति! नौ आवां गङ्गापृथ्व्यौ भागीरथीपृथिव्यौ भजस्व सेवस्व, आवयोर्वचनानुसारेण क्रिया-निष्पादनात् सन्तोषयेत्यर्थः। इयं पुण्यं पवित्रं व्रतं शास्त्रविहितो नियम आचार इति यावत् यस्याः सा पुण्यव्रता वधूः स्नुषा सीता तव अभ्यासे समीपे अर्पिता न्यस्ता यथावदस्या रक्षणावेक्षणाभ्यामावयोः सन्तोषः स्यादिति भावः ॥ १७ ॥

(१) जुषस्वेति क्वापि पाठः। (२) अहो इति पाठान्तरं।

ततः प्रविशत्यरुन्धती सीता च।

अरु। त्वरस्व वत्से वैदेहि! मुञ्च शालीनशीलताम्।
एहि जीवय मे वत्सं प्रियस्पर्शेन पाणिना॥ १८॥

सीता। ससम्भ्रममुपसृत्य रामं स्पृशन्ती। (१) समस्ससिदु अज्जउत्तो (ज)

रामः। समाश्वस्य सानन्दम्। भोः किमेतत्। दृष्ट्वा सहर्षाद्भुतम्। कथं देवी। सलज्जस्मितं। अये! अम्बा अरुन्धती, सर्वे च प्रहृष्यन्त ऋष्यशृङ्गशान्तासमेता गुरवः (झ)

अरु। वत्स! एषा भगवती भगीरथगृहदेवता सुप्रसन्ना गङ्गा। (ञ)

नेपथ्ये। जगत्पते रामभद्र! स्मर्य्यतामालेख्यदर्शने मां प्रत्यात्मनो वचनम्। यथा, सा त्वमम्ब! स्नुषायामरुन्धतीव सीतायां शिवानुध्यानपरा भव, तत्रानृणास्मि जाता। (ट)

---

(ज) समाश्वसितु आर्य्यपुत्रः।

---

लक्ष्मेति। पश्य पश्येत्युक्त्वा दर्शनाय रामस्य चेष्टामपश्यन् वदनं परावर्त्य मूर्च्छितं राममवलोकयन्नाह कष्टमित्यादि। उच्छ्वसिति संज्ञां लभते।

त्वरस्वेति। हे वत्से वैदेहि! त्वरस्व सत्वरा भव, शालीनशीलतां लज्जाशीलत्वं मुञ्च परित्यज, आसन्नविपदि लज्जया अनर्ह्यत्वादिति भावः। एहि आगच्छ प्रियस्पर्शेन पाणिना स्वकीयकरेण मे मम वत्सं स्नेहभाजनं रामं जीवय संज्ञापय॥

"स्यादधृष्टे तु शालीन" इत्यमरः॥ १८॥

(झ) राम इति। कथं शब्दो हर्षे, देवी सीता उपस्थितेति शेषः। प्रहृष्यन्तः आनन्दन्तः। गुरवः मातरः कौशल्यादयः उपस्थिता इति शेषः।

(ञ) अरु इति। एषा अदूरे दृश्यमाना, भगीरथगृहदेवता भगीरथकुलोपास्या इति तात्पर्य्यं सुप्रसन्ना युष्मान् प्रत्यनुग्रहकारिणी।

(ट) नेपथ्ये इति। जगत्पते! पृथिवीपते! नारायणावतारत्वेन विभु-

---

(१) ससम्भ्रमं स्पृशन्तीत्येतावन्मात्रः क्वचित् पाठः।

अरु । इयन्ते श्वश्रूर्भगवती वसुन्धरा । (ठ)

नेपथ्ये । उक्तञ्च पूर्वमायुष्मता वत्सात्यागे (१) यथा, भगवति वसुन्धरे ! श्लाघ्यां दुहितरमवेचस्व जानकीमिति, तदधुना कृतवचनास्मि प्रभोर्वत्सस्येति । (ड)

रामः । कथं कृतमहापराधो भगवतीभ्यामनुकम्पितः, प्रणमामि वः । (ढ)

अरु । भो भोः पौरजानपदाः ! भगवतीभ्यां जाह्नवीवसुन्धराभ्यामेवं प्रशस्यमाना ममारुन्धत्याः समर्पिता, पूर्वञ्च

वनेश्वर इति च ध्वन्यते । आलेख्यदर्शने चित्रदर्शनवेलायां । आत्मनः स्वस्य अनाग्रासेन रामस्य स्मरणाय तद्वचनमुद्धरति सा त्वमिति । अनृणा ऋणमुक्ता जगदीश्वरादेशातिक्रमस्य अन्याय्यत्वात् ससन्तानसीतापर्य्यवेचणेन प्रतिपालिततदादेशा इत्यर्थः । गङ्गाया उक्तिरियं ।

(ठ) अरु इति । श्वशुरस्य स्त्रीति श्वश्रूः ।

(ड) नेपथ्य इति । आयुष्मता दीर्घायुषा त्वया, वत्सायाः सीतायाः त्यागे परित्यागकाले । किमुक्तमित्याह भगवतीत्यादि । भूपतित्वात् प्रभोरधिपतेः, जामातृत्वात् वत्सस्य स्नेहास्पदस्य तव कृतवचना भूपतित्वे अनुष्ठितनिर्देशा, जामातृत्वे पूरितप्रार्थनेत्यर्थः । पृथिव्या उक्तिरियं ।

(ढ) राम इति । कथमिति सम्भावनायां । कृतः सीतानिर्वासनात्मको महापराधो येन स तथोक्तः । अनुगृहीतः । अहो गरीयसी निष्कारणा करुणेति भावः । वो युष्मान् गौरवात् बहुवचनं । विसर्जनसूचनाय प्रणाम इति बोध्यं ।

(ण) अरु इति । जाह्नवीवसुन्धराभ्यां गङ्गापृथिवीभ्यां एवं "आवयोरपि यत् सङ्गात् पवित्रत्वं प्रकृष्यते" इत्येवंरूपेण प्रशस्यमाना महापवित्रत्वेन स्तूी-

(१) वत्सापरित्यागे इति क्वापि पाठः ।

भगवता वैश्वानरेण निर्णीतपुण्यचारित्रा, सब्रह्मकैश्च देवैः संस्तुता सावित्रकुलवधूर्देवयजनसम्भवा सीतादेवी परित्यज्यता(१)मिति कथं भवन्तो मन्यन्ते। (ण)

लक्ष्म। एवमार्य्ययाऽरुन्धत्या निर्भर्त्सिताः प्रजाः, कृत्स्नश्च भूतग्राम आर्य्यां नमस्करोति, लोकपालाश्च सप्तर्षयश्च पुष्पवृष्टिभिरुपतिष्ठन्ते। (त)

शिरोमणित्वेन च स्तूयमाना अरुन्धत्या मम समीपे समर्पिता न्यस्ता। सीता यदि दुश्चरिता भवेत् तर्हि जाह्नव्या वसुन्धरया च कथमपि न प्रशस्येत, नवा ममान्तिके समर्प्येतेति भावः। मम अरुन्धत्या इत्यनेनात्मनोऽपि सतीश्रेष्ठत्वं व्यज्यते। अपि चेति चार्थः। पूर्वं रावणवधानन्तरं लङ्कायामग्निप्रवेशे सति वैश्वानरेण अग्निदेवेन निर्णीतं निश्चितं निश्चित्य प्रख्यापितमित्यर्थः पुण्यं पवित्रं चारित्रं पतिव्रतात्वं यस्याः सा, तस्मिन्नेव च काले सब्रह्मकैः ब्रह्मणा सहितैः देवैरिन्द्रादिभिः संस्तुता पतिव्रताप्रधानत्वेन परिचिता अभ्यर्हिता वा आसीदित्यर्थः। सा सावित्रकुलवधूः सूर्य्यवंशीयस्नुषा देवयजनसम्भवा यज्ञभूमिसमुत्पन्ना एतेनापि नितान्तनिर्दोषत्वं व्यज्यते, सीतादेवी परित्यज्यतां रामेणेति शेषः, इति अस्मिन् विषये कथं भवन्तो मन्यन्ते भवतां किमभिमतं भवति। तदवगन्तुमिच्छामीति भावः। ईदृश्याः सतीशिरोमणेः सीतायाः परिग्रहविषये साधारणप्रजानां सम्मतिजिज्ञासया तासां पूर्वकृतसीतापवादहेतुभूतधृष्टतायाः सुमहान् तिरस्कारो व्यज्यते।

(त) लक्ष्मेति। एवमनेन प्रकारेण सम्मतिजिज्ञासयेत्यर्थः। निर्भर्त्सिताः तिरस्कृताः। कृत्स्नः सकलः भूतग्रामः प्राणिसमूहश्च आर्य्यां सीतां नमस्करोति सतीशिरोमणित्वेनाङ्गीकारात् पूजयतीत्यर्थः। पूर्वं धृष्टतया सीताया अपवादविधानेन लज्जावशात् किमपि स्पष्टमभिधातुं नार्हतीति भावः। एतेन इदानीं सीतायाः पुनः परिग्रहे काचिदपि प्रजानामापत्तिर्नास्तीति व्यज्यते। लोकपाला इन्द्रादयो दिक्पालाः सप्तर्षयो मरीच्यादयः। उपतिष्ठन्त इति "पथ्याराधनयोश्च"त्यात्मनेपदं।

(१) परित्यज्यत इति पाठान्तरम्।

अरु। जगत्पते! रामचन्द्र!

नियोजय यथाधर्म्मं प्रियां त्वं धर्म्मचारिणीम्।
हिरण्मय्याः प्रतिकृतेः पुण्यप्रकृतिमध्वरे॥ १९॥

सीता। स्वगतम्। जाणादि अज्जउत्तो सीदादुक्खं पमज्जिदुं। (थ)

रामः। यथा भगवत्यादिशति। (द)

लक्ष्म। कृतार्थोऽस्मि। (ध)

सीता। जीविदह्मि। (न)

---

(थ) जानात्यार्य्यपुत्रः सीतादुःखं प्रमार्ष्टुम्।
(न) जीवितास्मि।

---

नियोजयेति। हे जगत्पते रामचन्द्र! त्वं हिरण्मय्याः स्वर्णमय्याः प्रतिकृतेः प्रतिमायाः पुण्या पतिव्रताप्रधानत्वेन पवित्रा प्रकृतिः मूलभूता तां प्रियां दयितां सीतां अध्वरे प्रक्रान्ताश्वमेधयज्ञे धर्म्मचारिणीं सहधर्म्मिणीं यथाधर्म्मं धर्म्ममनतिक्रम्य नियोजय संस्थापय। "मुख्यालाभे प्रतिनिधिः शास्त्रार्थ" इति न्यायात् मुख्यलाभे प्रतिनिधिविधानस्यान्याय्यत्वात् इमामेव सहधर्म्मिणीं कृत्वा अश्वमेधयज्ञं निष्पादयेति भावः। पुण्यप्रकृतिमित्यनेन सीतया सह अश्वमेधकरणं फलभूयस्त्वमपि व्यज्यते॥ १९॥

(थ) सीतेति। प्रमार्ष्टुं दूरीकर्त्तुं। अतएव मन्ये पुनः परिग्रहे कामपि आपत्तिं न करिष्यतीति भावः।

(द) राम इति। भगवती अरुन्धती यथा आदिशति तथैव करोमीति वाक्यशेषः। गुरुनियोगस्यानतिक्रमणीयत्वात् पुनरपि सीतां परिग्रहीष्यामि वेति भावः।

(ध) लक्ष्मेति। कृतार्थोऽस्मि, सीतारामयोः पुनर्मेलनेन सर्व्वेषामेव परमनिर्वृतिलाभादिति भावः।

(न) सीतेति। जीवितास्मि, प्राणानामिव प्रियतमस्य विरहेण मृतप्राया स्थिता पूर्व्वमासं, इदानीं पुनर्लाभेन पुनर्जीवितेवास्मीति भावः। अत्र प्रतीयमानोत्प्रेक्षा।

लक्ष्म। आर्य्ये! एष निर्लज्जो लक्ष्मणः प्रणमति। (प)

सीता। वच्छ! ईदिसो वि चिरं जीव। (फ)

अरु। भगवन् वाल्मीके! उपनीयेतामिमौ सीतागर्भसम्भूतौ रामभद्रस्य पुत्रकौ कुशलवौ। इति निष्क्रान्ता। (ब)

—o—

(क) वत्स! ईदृशोऽपि चिरं जीव।

(प) लक्ष्मेति। निर्लज्जो लज्जाहीनः। प्रणमति भवतीमिति शेषः। यः खलु निर्दयदारुणप्रकृतिर्भवती मतिभयानके निर्जनारण्ये विहाय प्रस्थितः, स पुनर्यदिदानीं निःसङ्कोचं मुखं प्रदर्शयन् प्रणामायागन्तुमर्हति तस्य लज्जालेशोऽपि नास्तीति मन्तव्यमिति भावः।

(फ) सीतेति। ईदृशोऽपि एवम्भूतो निर्लज्जः सन्नपि चिरं जीव। मम निर्वासने तव स्वारसिकेच्छाभावात् आर्य्यपुत्रादेशेनैव तद्विधानात् तव तव न कापि निर्दयता तथा त्वां प्रति किमपि मम मनोमालिन्यमस्ति, प्रत्युत अग्रजादेशेन दुष्करस्यापि कर्म्मणः करणात् योग्यधर्म्मानुसरणेन यथापूर्वं सन्तोष एवेति भावः।

(ब) अरु इति। इमौ अन्तराले दृश्यमानौ। उपनीयेतां उपस्थाप्येतां सीतारामयोः समीप इति शेषः।

अत्रैव गर्भाङ्कसमाप्तिरितुन्नेयं। तथाचात्र "प्रविश्य सूत्रधारः" इत्यादिः "विश्वम्भरात्मजा देवी"तिश्लोकान्ता प्रस्तावना, "साहं दाणिं मन्दभाइणी भाईरहीए अत्ताणं णिक्खिवेमि" इति वाक्यं प्रथममव्यत्वेऽपि परं बाहुल्यात् पृथिवीगङ्गयोरभिप्रायानुसारेण अरुन्धत्या करिष्यमाणसीतारामसम्मेलनरूपफलस्य प्राथमिकहेतुत्वाच्च। तदेव च सीतारामयोः सम्मेलनं फलं। पृथिवीगङ्गाऽरुन्धतीनां गर्भाङ्कपात्राणां क्रमशो निष्क्रमणेन सामान्याङ्कलक्षणस्यापि सङ्गतिः, अरुन्धत्या निष्क्रमणेन अंशविशेषस्य समाप्तिसूचनञ्चेति। सीताकुशलवानान्तु गर्भाङ्कमूलसप्तमाङ्कोभयपात्रत्वमङ्गीकृतं कविनेति। पृथिवीगङ्गयोः, सम्मेलनात् पूर्वं सीतायाः, अरुन्धत्याश्च उक्तिप्रत्युक्तय एव गर्भाङ्कशरीरं, रामलक्ष्मणादीनामुक्तिप्रत्युक्तयस्तु अभिनयदर्शनवेलाया-

रामलक्ष्मणौ। दिष्ट्या (१) तथैव तत्। (भ)

सीता। सवाष्पाकूतम्। कहिं, ते पुत्तआ मे। (म)

ततः प्रविशति वाल्मीकिः कुशलवौ च ।

वाल्मी। वत्सौ कुशलवौ! एष रघुपतिः पिता युवयोः, लक्ष्मणः कनिष्ठतातः, सीतादेवी जननी, एष राजर्षिर्जनको मातामहः। (य)

सीता। सहर्षकरुणाद्भुतं विलोक्य। कधं तादो। (र)

(म) कुत्रिन् तौ पुत्रकौ मे।
(र) कथं तातः।

निदानीन्तनसन्ध्यानामालोचनेव न गर्भाङ्गशरीरं किन्तु मूलसप्तमाङ्कशरीरमेवेति बोध्यं। अत्र गर्भाङ्कलक्षणं यथा साहित्यदर्पणे

"अङ्कोदरप्रविष्टो यो रङ्गद्वारामुखादिमान् ।
अङ्कोऽपरः स गर्भाङ्कः सवीजः फलवानपि ॥"

लक्षणे आमुखं प्रस्तावना। वीजलक्षणमपि तत्रैव

"अल्पमात्रं समुद्दिष्टं वहुधा यत् विसर्पति ।
फलस्य प्रथमो हेतु वीजं तदभिधीयते ॥"

—०—

(भ) रामेति। दिष्ट्या सौभाग्येन, तत् कुशलवयोरितिवृत्तं तथैव यथा चिन्तितं तद्रूपमेव, कुशलवौ सीतासन्तानावित्यस्माकमनुमानं सत्यमेवेत्यर्थः।

(म) सीतेति। वाष्पेण आनन्दाश्रुणा आकूतेन पुत्रदर्शनाभिप्रायेण च सह वर्त्तमानमिति सवाष्पाकूतं। तौ स्तन्यत्यागं यावत् मया पोषितौ।

(य) वाल्मीति। जनकोऽपि वाल्मीकेराह्वानादभिनयदर्शनार्थमेव तत्रागत इति वोध्यं।

(र) सीतेति। जनको द्रष्टव्य इति हर्षः, निर्वासितकालीनदुःखस्य खेन

(१) दृष्ट्येति पाठान्तरं।

कुशलवौ। हा तात! हा अम्ब! हा मातामह!। (ल)

रामः। सहर्षमालिङ्ग्य। ननु वत्सौ! पुण्यैः प्राप्तौ स्थः। (व)

सीता। एहि जाद कुस! एहि जाद लव! चिरस्स परिस्सजध पुणो जम्मन्तरगदं जणणिं। (श)

कुमारौ। तथा कृत्वा। धन्यौ स्वः। (ष)

सीता। भअवं! प्पणमामि। (स)

वाल्मी। वत्से! ईदृश्येव चिरं भूयाः। (ह)

---

(श) एहि जात कुश! एहि जात लव! चिरस्य परिष्वजेथां पुनर्जन्मान्तरगतां जननीम्।

(स) भगवन्! प्रणमामि।

---

करुणा शोकः, अचिन्तितपूर्वः पितुः साक्षात्कार इत्यद्भुतमाश्चर्यं तैः सह वर्त्तमानमिति तथोक्तं। कथमिति हर्षद्योतकमव्ययं।

(ल) कुशेति। सविषादसम्बोधने हाशब्दः। इयन्ति वयांसि यावदावां सतोऽपि तातादीन् न जानीव इत्यतोविषाद इति प्रत्येतव्यं।

(व) राम इति। सम्बोधने ननुशब्दः। पुण्यैः प्राक्तनधर्म्मैः प्राप्तौ स्थः युवामिति शेषः। सञ्चितपुण्यानि विना युवयोः प्राप्तावपर उपायो नास्माकमासीदिति भावः।

(श) सीतेति। चिरस्य परिष्वजेथां बहून् कालान् व्याप्य आलिङ्गतं जन्मान्तरगतां पातालात् पुन र्भूतलप्राप्तत्वेन अन्यत् जन्म प्राप्तामित्यर्थः।

(ष) कुमाराविति। तथा कृत्वा आलिङ्ग्येत्यर्थः। धन्यौः स्व आवां। जनन्या लाभादिति भावः।

(स) सीतेति। प्रणमामि भवन्तमिति शेषः।

(ह) वाल्मीति। ईदृश्येव पतिपुत्रसङ्गतैव चिरं भूयाः, न पुनः कदापि पूर्ववत् पतिपुत्रविरहिणी भूया इत्येवशब्दार्थः।

सीता। अम्महे! तादो, कुलगुरू, अज्जाजणो, सभत्तुआ अज्जा सन्तादेई, सलक्खणा सुप्पसस्सा अज्जउत्तचलणा समं कुसलवावि दीसन्ति, ता णिब्भरह्मि आणन्देण। (च)

नेपथ्ये कलकलः।

वाल्मी। उत्थायावलोक्य च। उपहतलवणो (१) मथुरेश्वरः प्राप्तः। (क)

लव। सानुषङ्गाणि कल्याणानि। (ख)

---

(ख) अम्महे। (आश्चर्य्यम्) तातः, कुलगुरुः, आर्य्याजनः सभर्त्तृका आर्य्या शान्तादेवी, सलक्षणाः सुप्रसन्ना आर्य्यपुत्रचरणाः, समं कुशलवावपि दृश्यन्ते तन्निर्भरास्मि आनन्देन।

(च) सीतेति। अम्महे इत्येकमेव विस्मयसूचकमव्ययं शौरसेन्यादिभाषायां। तातो जनकः, कुलगुरुर्वशिष्ठः, आर्य्याजनः कौशल्यादिश्वश्रूजनः, भर्त्रा ऋष्यशृङ्गेण सह वर्त्तमाना सभर्त्तृका। सलक्षणाः लक्ष्मणेन सहिताः सुप्रसन्नाः रोषकालुष्यरहिताः सन्तोषसौम्या इति यावत् आर्य्यपुत्रचरणाः पत्युर्महागुरुत्वेन चरणशब्दोपन्यासः अन्येषान्तु महागुरुत्वाभावात् न तथेति बोध्यं। अपिशब्दः समुच्चये कुशलवौ चेत्यर्थः समं युगपत् एते दृश्यन्ते, तत्तस्मात् आनन्देन निर्भरा परिपूर्णास्मि।

(क) वाल्मीति। उपहतो निहतो लवणो मधुदैत्यपुत्रो लवणाख्यराक्षसो येन स तथोक्तः, मथुरेश्वरः शत्रुघ्नः प्राप्त उपस्थितः। तत्सेनाया अयं कलकल इति भावः लवणराक्षसवधवृत्तान्तो वाल्मीकिना पूर्वं लोकपरम्परया तपःप्रभावेण वाऽवगत इति मन्तव्यं।

यमुनातीरवासिनां मुनीनां प्रार्थनया रामेण प्रेषितः शत्रुघ्नः कुम्भीनसीगर्भजातं मधुदैत्यपुत्रं लवणराक्षसं निहत्य रामस्यैवानुज्ञया मधुदैत्याधिकृतमथुराराज्यं राजत्वमकार्षीदिति रामायणवार्त्ताऽत्रानुसन्धेया।

(ख) लवेति। अनुषङ्गेन अनुचरेण सजातीयैतरैरित्यर्थः सह वर्त्तमानानि

(१) उत्खातलवण इति क्वापि पाठः

राम:। सर्वमिदमनुभवन्नपि न प्रत्येमि, यद्वा प्रकृतिरिय-मभ्युदयानाम्! (ग)

वाल्मी। रामभद्र! उच्यतां, किन्ते भूयः प्रियमुपकरोमि। (घ)

राम:। अतःपरमपि प्रियमस्ति। तथापीदमस्तु। (ङ)

सानुषङ्गाणि, कल्याणानि मङ्गलानि, कल्याणानि कल्याणान्तरैः सह उपतिष्ठन्ती-त्यर्थः। यदत्र सर्वेषां बन्धूनां सम्मेलनकाले वत्सः शत्रुघ्नोऽपि प्राप्तः सुतरां "सम्पत् सम्पदमनुबध्नाति विपच्च विपद"मिति लोकवादो यथार्थ एवेति भावः।

(ग) राम इति। सर्वमिदं सम्मेलनसुखमित्यर्थः अनुभवन्नपि प्रत्यक्षी-कुर्वन्नपि न प्रत्येमि न विश्वसिमि। नितान्तदुर्भाग्यस्य मे ईदृक्सुखसागरावेलनस्य प्रायेणासम्भावनीयत्वादिति भावः। ननु निर्दोषप्रत्यक्षत्वेऽपि कथमविश्वास इत्याह यद्वेति। यद्वा अथवा अभ्युदयानां सुखसम्पत्तीनां इयं प्रकृतिः स्वभावः, यत् यौगपद्येन सर्वाः सम्भूय आविर्भवन्तीति वाक्यशेषः। अत ईदृक्सुखपरम्परा सत्यं सम्भव-त्यपीति भावः।

(घ) वाल्मीति। भूयः पुनः ते तव किं प्रियं प्रीतिकरं कार्यं उप करोमि विदधामि तदुच्यतामित्यर्थः। "भूयः (व्य) पुनरर्थे" मिति शब्दकल्पद्रुमः।

(ङ) राम इति। अपिशब्दः प्रश्ने। अतः परं सपुत्रपत्नीलाभादधिकं अपि किमु प्रियं प्रीतिकरं वस्तु अस्ति, अपि तु नेत्यर्थः। स च भवता कृत इति भावः। तथापि पुत्रसहितपत्नीलाभादधिकप्रियाऽसत्त्वेऽपि इदं वक्ष्यमाणं अस्तु भवतु भवदनुग्रहादिति शेषः।

अथवा अतः परमपि पुत्रसमेतभार्य्यालाभादधिकमपि प्रियं वस्तु अस्ति। तच्च कैवल्यं अविनश्वरत्वात् निरवच्छिन्नसुखत्वाच्चेति भावः। तथापि अविनश्वरनिरवच्छिन्न-सुखलक्षणकैवल्ये सत्यपि इदं वक्ष्यमाणं अस्तु। यशःसुखादिभोगलालसाया अनि-वृत्तत्वात् इदानीमेव न मया मुक्तिः प्रार्थ्यते, किन्तु सुखान्तरमिति भावः।

**पाप्मभ्यश्च पुनातु वर्द्धयतु च श्रेयांसि सेयं कथा (१)**
**मङ्गल्या च मनोहरा च जगतो मातेव गङ्गेव च।**

तत्प्रार्थनीयमाह पाप्मभ्य इति। माता जननीव गङ्गा भागीरथीव च जगतो भुवनस्य मङ्गल्या नानानीतिधर्म्मविषयनिवन्धनात् शुभजनिका, मनोहरा शोभना च कौतूहलोद्दीपकविविधोपाख्यानपूर्णत्वात् हृदयाह्लादकारिणीत्यर्थः सा प्रसिद्धा इयं कथा भवदीयरामायणप्रवन्धः पाप्मभ्यः सञ्चितपापेभ्यः पुनातु मुक्तान् करोतु तत्तत् पापविनाशेन जनान् पवित्रीकरोतु इत्यर्थः, तथा श्रेयांसि लोकानां मङ्गलानि च वर्द्धयतु वहुलीकरोतु। प्रजानां पापहीनत्वे मङ्गलवाहुल्ये च राज्ञोऽपि तत्फलभागित्वादिदानीं भवदन्तिके ममेयमेव प्रार्थनेति भावः। नन्वनालोचिता सा कथा कथं पुनीयात् कथं वा श्रेयांसि वर्द्धयेदित्याह तामेतामिति। वुधा विद्वांसः शब्दब्रह्मविदः सम्पूर्ण शब्दतत्त्वज्ञस्येत्यर्थः कथमन्यथा ईदृशी शब्दरचनाचातुरी स्यादिति भावः, एतेन पद माधुर्य्यदर्शनेनापि तेषां सुमहानानन्दोभवितेति व्यज्यते। परिणता परिपक्वा उन्नते श्चरमसोमामारूढ़ेत्यर्थः प्रज्ञा वुद्धि र्यस्य तस्य परिणतप्रज्ञस्य कथमन्यथा ईदृशं भावमाधुर्य्य मुपपद्यत इति भावः, भावमाधुर्य्येणापि वुधा मुह्येयुरिति व्यज्यते; कवेर्वाल्मीके- र्भवतः तां प्रसिद्धां एतां इदानीमेव कियदंश समभिनीतां, इमां अस्मादादिभिरपि प्रत्यक्षीकृतां वाणीं रामायणात्मकमहावाक्यं विन्यस्तं अर्पितं रूपं अभिनयोपयोगिनी आकृति र्यस्यां तां विन्यस्तरूपां सतीं स्वयं स्वयमेव नाटकाद्याकारतया परिणमय्ये त्यर्थः अभिनयैः रघुदशरथादिरामायणकथापुरुषाणामवस्थानुकरणैः परिभावयन्तु सर्वतो भावेन सम्मानयन्तु। इदमेव रामायणमवलम्ब्य नाटकादिकं विरचय्य तदभिनये- नास्य गौरवं वर्द्धयन्त्विति सरलार्थः। तेन च भवतः कवित्वं सूर्य्यवंशस्य कीर्त्ति गौरवञ्च लोके प्रथितं सत् महान्तमानन्दं जनयेत्, इयञ्च द्वितीयप्रार्थनेति भावः।

अत्र मङ्गल्यत्वमनोहरत्वयोरुपमानोपमेयोभयधर्म्मत्वात् पूर्णोपमाऽलङ्कारः। तथा माता गङ्गाच पुनाति रामायणकथा तु पुनात्विति प्रक्रमवैषम्यात् "चिरं जीवतु ते सूनुर्मा- र्कण्डेयमुनिर्यथे"ति साहित्यदर्पणोदाहृतवत् भग्नप्रक्रमतादोषः तेन च "पाप्मभ्यश्च

(१) पाप्मत्यश्च पुनाति वर्द्धयति च श्रेयांसि येयं कथेति पाठान्तरं।

तामेतां (१) परिभावयन्त्वभिनयैर्विन्यस्तरूपां (२) बुधाः
शब्दब्रह्मविदः कवेः परिणतप्रज्ञस्य वाणीमिमाम् ॥ २० ॥

इति निष्क्रान्ताः सर्वे ।

-:०:-

# इति सम्मेलनं नाम सप्तमोऽङ्कः ॥ (च)

समाप्तमिदं महाकविभवभूतिविरचितमुत्तरराम-
चरितं नाम नाटकम् ॥ ० ॥

---

पुनाति वर्द्धयति च श्रेयांसि येयं कथे"ति पाठान्तरमेव साधीयः, किन्तु बहुषु पुस्तकेष्वदर्शनात् तन्न सन्निवेशितमिति ज्ञेयं । किञ्च एतां इमामिति प्रायैकार्थयोः पदयोरुपन्यासात् कथितपदतादोषः, स च, वाणीं चिरंमिति पाठेन समाधेयः ।

अत्रायं वस्तुध्वनिः, बुधाः पण्डिताः शब्दब्रह्मविदः परिणतप्रज्ञस्य विन्यस्तरूपां नाटकाकारेण परिणमितां कवेर्भवभूतेः वाणीं उत्तररामचरितलक्षणनाटकात्मक महावाक्यं अभिनयैः परिभावयन्तु सर्वतोभावेन सम्मानयन्त्विति ।

परिभावयन्त्विति परिशब्दः सर्वतोभावार्थे "परि (व्य) सर्वतोभावः" इति शब्द-कल्पद्रुमः। शब्दएव ब्रह्म तद्वेत्तीति शब्दब्रह्मवित् तस्य। शब्दस्य ब्रह्मत्वमाह श्रुतिः "चत्वारि शृङ्गास्त्रयोऽस्य पादा द्वे शीर्षे सप्तहस्तासः त्रिधाबद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश"ति ।

अभिनयलक्षणमुक्तं साहित्यदर्पणे—

"भवेदभिनयोऽवस्थाऽनुकारः स चतुर्विधः ।
आङ्गिको वाचिकश्चैव चाहार्य्यः सात्त्विकस्तथा ।"

शार्दूलविक्रीडितं वृत्तं ॥ २० ॥

(च) इतीति। सम्मेलनं नाम सम्मेलनमिति नाम्ना प्रसिद्धः। सप्तमोऽङ्कः समाप्त इति शेषः ।

---

(१) वाल्मीकेरिति क्वापि पाठः। (२) विन्यस्तरूपा इति पाठभेदः ।

## सप्तमोऽङ्कः ।

जानकीविक्रमं नाम नाटकं वीररौद्रवत् ।
नाटिकामुज्ज्वलरसां श्रीविराजसरोजिनीम् ॥
वियोगवैभवाख्यानं खण्डकाव्यमनन्तरम् ।
नानाबन्धं महाकाव्यं रुक्मिणीहरणाभिधम् ॥
स्मृतिचिन्तामणिं नाम कृत्वा च स्मृतिसंग्रहम् ।
निर्म्मिमाणो गद्यकाव्यमपूर्वं सरलाह्वयम् ॥
कोटालिपाड़नगरीनिशियास्ववासात्
सत्काश्यपः पुरि नकीपुर एत्य तिष्ठन् ।
वेदाग्निनागविधुमान शकाब्द पौष्यां
श्रीमान् समापयदिमां हरिदासशर्म्मा ॥
दोषान्वितामपि रतामपरप्रकाशे
टीकामिमां गुणिजनो ध्रुवमाद्रियेत ।
गङ्गाधरो गुणसमुच्चयवान् गुणज्ञो
दोषाकरस्य हि कलां शिरसैव धत्ते ॥

इति श्रीगङ्गाधरविद्यालङ्कार भट्टाचार्य्यात्मज श्रीहरिदास सिद्धान्तवागीश भट्टाचार्य्यविरचितायामुत्तररामचरितनाटकटीकायां सर्वार्थबोधिनीसमाख्यायां सप्तमाऽङ्क-विवरणं समाप्तम् ॥

